# अभिज्ञानशकुन्तलम् ।

—:○:—

महाकवि-श्रीकालिदासप्रणीतम् ।

——:०:——

महामहोपाध्याय-भारताचार्य-

श्रीयुतहरिदाससिद्धान्तवागीशभट्टाचार्य्यैः

प्रणीतया अभिज्ञानकौमुदीसमाख्यया

टीकया वङ्गानुवादेन च

सहितम् ।



द्वितीयसंस्करणम् ।

१८६० शकाब्दीयसौरभाद्रस्य सप्तविंशतितमे दिवसे ।

मूल्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

२९५
पु० ९/का

# अभिज्ञानशकुन्तलम् ।

—०:◡:०—

महाकवि-श्रीकालिदासप्रणीतम् ।

———:०:———

महामहोपाध्याय-भारताचार्य्य-
युक्तहरिदाससिद्धान्तवागीशभट्टाचार्य्येण
प्रणीतया अभिज्ञानकौमुदीसमाख्यया
टीकया वङ्गानुवादेन च
सहितम् ।



द्वितीयसंस्करणम् ।

...० शकाब्दीयसौरभाद्रस्य सप्तविंशतितमे दिवसे ।

मूल्यं ३) राजतमुद्रात्रयम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

४१ संख्यकसूरिवत्म॑स्थसिद्धान्तविद्यालयात्
श्रीहेमचन्द्रव्याकरणतीर्थभट्टाचार्य्येण
प्रकाशितम् ।

015,2D40,1
A

मुमुक्षु भवन वेद वेदाङ्ग पुस्तकालय
वाराणसी।
आगत क्रमांक 0048
दिनांक 15.5.78

कलिकाता-महानगर्य्यां
४१ संख्यकसूरिवर्त्म॑स्थ-सिद्धान्तयन्त्रे
श्रीहेमचन्द्रभट्टाचार्य्येण मुद्रितम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri




महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# विज्ञापनम् ।

माननीया मनस्विमहोदयाः ! तत्रभवतामवधानमभ्यर्थये । मुनिप्रणीतासु संहितासु तदानीन्तनानामासीत् निर्विवादः परिग्रहः, इदानीन्तनानान्त्वास्ते गरीयानेवादरः । कालिदास-कालादौ तु प्राचीनेषु ग्रन्थेषु पूर्ववदेव साग्रहः परिग्रहः, अर्वाचीनेषु तु सविरागः परिहारः सामाजिकानामासीदिति प्रतीयते । अतएवोक्तं तत्रभवता कालिदासेन—

"पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।"...

तत् किं प्राचीनतैवोत्कर्षस्य अर्वाचीनता चापकर्षस्य कारणम् ? उतवा तयोः वास्तविकं किञ्चिन्निमित्तमस्तीति सन्देहे ध्रुवमेवावगम्यते यत्—उन्नतिसीमानमारोहतां सर्वमेवोत्कृष्टं क्रमेणावनतिसोपानमवरोहतान्तु सर्वमेवाप-कृष्टम् इति युक्तिहीना धारणैव तयोरुपादानपरिहानयोर्हेतुः, न पुनर्वास्तविकः कश्चित् । साम्प्रतन्तु भगवदनुग्रहेण रीतिरियं विरलं परिवृत्ता परिलक्ष्यते । येन हि नूतनं भवनम्, नवं नारिकेलम्, नवीनाञ्चाङ्गनामाद्रियमाणा वास्तविकमुत्कर्ष-मनुसन्दधाना पुराणपरिहारेण नूतनमाददाना मदीया-मभिज्ञानकौमुदीं पश्यन्तो मोदमाना प्रकाशितां तां गुण-पक्षपातिनो निःशेषितवन्त इति द्वितीयवारञ्च सा प्रकाशितेति ।

१८६० शकाब्दीय-
सौरभाद्रस्याष्टाविंश-
दिवसीयम् ।

विनीत—
श्रीहरिदासशर्म्मणः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ नाट्योल्लिखितव्यक्तिगणः ।

## पुरुषगणः ।

| | | | |
|---|---|---|---|
| सूत्रधारः | प्रस्तावसूचकः प्रधाननटः । | शार्ङ्गरवः<br>शारद्वतमिश्रः | कण्वशिष्यौ । |
| राजा | हस्तिनाधिपतिः पुरुवंशीयो दुष्मन्तनामा । | कञ्चुकी | अन्तःपुरचरो वृद्धो ब्राह्मणः । |
| सूतः | अस्य सारथिः । | पुरोधाः | राज्ञः पुरोहितः । |
| वैखानसः | वनवासी तापसः । | नागरकश्यालः | राज्ञः श्यालकः । |
| विदूषकः | राज्ञः सहचरः । | रक्षिणौ | जानुक सूचकाख्यौ राज्ञो नगररक्षकौ । |
| दौवारिकः | राज्ञो द्वाररक्षकः । | पुरुषः | कश्चित् धीवरः । |
| सेनापतिः | राज्ञः सैन्याध्यक्षः । | मातलिः | देवराजस्य सारथिः । |
| ऋषिकुमारौ | कण्वशिष्यौ । | बालकः | राज्ञः पुत्रः सर्वदमनो नाम । |
| करभकः | हस्तिनापुरदूतः । | मारीचः | कश्यपप्रजापतिः । |
| शिष्यः | कण्वस्य । | | |
| हारीतः | कश्चित् ऋषिकुमारः । | | |
| कण्वः | काश्यपगोत्रः कश्चिन्महर्षिः । | | |

## स्त्रीगणः ।

| | | | |
|---|---|---|---|
| नटी | सूत्रधारस्य स्त्री । | मिश्रकेशी | शकुन्तलायाः सखी काचिदप्सराः । |
| शकुन्तला | विश्वामित्रऔरसी मेनकागर्भजा कण्वस्य पालिता कन्या । | तापस्यः | कण्वाश्रमस्था मुनिपत्न्यः । |
| अनसूया<br>प्रियंवदा | शकुन्तलायाः सख्यौ । | चेट्यौ | चित्रकरणार्थं नवागतं दासीद्वयम् । |
| गौतमी | कण्वस्य धर्मभगिनी । | चतुरिका | राज्ञः काचित् दासी । |
| प्रतीहारी | राज्ञः पार्श्वचरी । | तापसीद्वयं | कश्यपाश्रमस्थम् । |
| | | अदितिः | कश्यपपत्नी । |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ कविसमयनिरूपणम् ।

इह खल्वैहिकनश्वरसुखविमुखानां चरमोन्नति-मुक्तिपथ-पथिकानां प्राचीनानामार्य्याणां केवलदृष्टान्तप्रदर्शनद्वारेण लेशत एवैहिकसुखसमृद्धिमात्रसाधनप्रयोजनेषु किलेतिहासेषु नासीत् कियानपि यत्नः ; आसीच्च वेदानुबन्धिषु नानाविधोपाख्यानसरसीकृतेषु क्रियायोगोपयोगिषु पुराणेषु प्रभूततमः प्रयत्नः । तेन हि भारतेऽस्मिन्नार्य्यजातेरितिहासानामभाव एव सामान्यतः, पुराणानाञ्च प्रचुरतरः प्रचारः परिलक्ष्यते । अतएव इदानीमतीतविषयविशेषनिरूपणं सुदुष्करं विविधमतभेदसमाकुलञ्च स्यादित्यवश्यमभ्युपेयम् । अतएव कालिदासकालनिरूपणेऽपि सुदुष्करताऽनुभूयते मतभेदाश्च दृश्यन्ते ।

मालवदेशान्तःपातिन्यामुज्जयिनीनामराजधान्यां सर्वगुणाकरो विक्रमादित्यो नरपतिरासीत् (१) । तस्य च धन्वन्तरि-प्रभृतयो नवसंख्यकाः पण्डितरत्नभूताः सभासदो बभूवुः, कालिदासस्तु तेषामन्यतम इत्यर्थे नास्ति प्रायेण कस्यचिदपि विप्रतिपत्तिः (२) । तेन तु विक्रमादित्यकालनिर्णयेनैव कालिदासकालो निर्णीतः स्यादिति स एव प्रथमं निर्णेयः ।

(१) "मत्तोऽधुना कृतिरियं सति मालवेन्द्रे
श्रीविक्रमार्कनृपराजवरे समासीत् ॥"
"यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी ।" ज्योतिर्विदाभरणम् ।

(२) "धन्वन्तरि-क्षपणकामरसिंह-शङ्कु-
वेतालभट्ट घटकर्पर कालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥" ज्योतिर्विदाभरणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्ति च विक्रमादित्यसमयनिरूपणे विविधा मतभेदाः। तथा च—

केचित्, विक्रमादित्येति न खलु पितृकृतं नाम, अपि तु उपाधिमात्रमेतत्। तथा च ५३२ खृष्टाब्दे मालवराजो यशोधर्म्मदेवः, मालवदेशस्य पूर्वतः कियन्तमंशं विजितवतस्तोरामणनाम्नो नरपतेर्मरणानन्तरं तदात्मजं मिहिरकुलं विजित्य तमपहृतमंशमासादयन् मिहिरकुलं चिरायैव मालवदेशान्निष्काशयामास ; तथा तस्मिन् समरे सूर्य्यसमानतेजःप्रकाशात् आदितेयतुल्यविक्रमप्रदर्शनाद्वा 'विक्रमादित्य'-मुपाधिञ्च धारयामास ; तथा मालवदेशे खृष्टजन्मनः सप्तपञ्चाश-(५७) द्वत्सरपूर्वतः प्रवर्त्तितं नवत्यधिकपञ्चशतसंख्यातं (५९०) मालवसंवत् (१) विक्रमसंवन्नाम्ना च परिवर्त्तयामास। तथा च सति यदेव ५९० संख्यातं मालवसंवदासीत्, तदेव तदानीं परिवर्त्तितं सत् ५९० संख्यातं विक्रमसंवत् बभूव।

ईदृशानुमाने चायमेव हेतुः, यत्, तत्समरात् पूर्ववर्त्तिनीषु शिलालिपिषु मालवसंवत् दृश्यते, दृश्यते च तत्समरात् परवर्त्तिनीषु शिलालिपिषु विक्रमसंवदिति। (२)

---

(१) "संवद्वर्षे" इत्यव्ययवर्गेऽमरः।

2 "With regard to the introduction of the Vikrama era, I challenged the production of any single inscription prior to 543 A.D. dated according to the Vikrama era. No such inscriptions were then known aud yet it was supposed that this era had been in use ever since 56 B. C. howeven."

Max Muller's "India—what can it teach us ?" Preface to the second edition.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतएव खृष्टीयषष्ठशताब्दीमध्यवर्त्तिनो यशोधर्म्मदेवस्य सभासत् कालिदासोऽपि खृष्टीयषष्ठशताब्दीमध्य एव प्रादुर्बभूव ।

युक्त्यन्तरञ्चात्रावतारयन्ति ; यत्, विक्रमादित्यसभासदामन्यतमो ज्योतिर्वित् वराहमिहिरः सप्ताधिकपञ्चशतशकाब्दे (५०७ शाके) लोकान्तरमवाप, (१) खृष्टीयाष्टसप्ततितमवर्षे च (७८ खृष्टाब्दे) शकाब्दारम्भः ; तथा च ५८५ खृष्टाब्दे वराहमिहिरमरणात् तत्समसामयिकः कालिदासोऽपि खृष्टीयषष्ठशताब्दीय एवासीदिति ।

६०७ खृष्टाब्दे राजत्वमधिगच्छतः कान्यकुब्जेश्वरस्य हर्षवर्द्धनस्य सभासन्महाकविः कादम्बरीप्रणेता तत्रभवान् बाणभट्टः स्वकीयहर्षचरितभूमिकायां कवित्वे कालिदासमतीव प्रशशंस (२)। अतः कालिदासस्य तत्पूर्ववर्त्तित्वाभावे सा प्रशंसैव नोपपद्यते ।

अतः खृष्टीयषष्ठशताब्दीकाल एव कालिदासाविर्भावकाल इति सिद्धमिति इउरोपीया भारतीयाश्च पुरावृत्तविद्विशेषा निरूपयन्ति । अत्राङ्गुतमनुमानम्, सन्ति च बहवः प्रतिवादविषयाः ।

कालिदासाविर्भावकालः खृष्टीयपञ्चमशताब्दीकाल इतीतरे । चतुर्थशताब्दीत्यपरे । तृतीयशताब्दीत्यन्ये ।

प्रमातारस्तु, खृष्टजन्मनः सप्तपञ्चाशद्वर्षपूर्वे मालवदेशे

(१) ब्रह्मगुप्तविरचितखण्डखाद्यटीकाऽनुसन्धेया ।

(२) "निर्गतासु नवा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥"

हर्षचरितभूमिकायाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भारतललामभूतायामुज्जयिनीनामधेयायां नगर्य्यामार्य्याणां गौरवसूर्य्यः सकलगुणाकरो विक्रमादित्यनामा नरपतिरासीत्। तस्य सभासदां नवसंख्यकानां कविपण्डितशिरोमणीनामन्यतमः कालिदासो बभूव। स च खृष्टजन्मनस्त्रयस्त्रिंशद्वत्सरपूर्वं ज्योतिर्विदाभरणं नाम ग्रन्थं निर्म्मातुमारभत। तथा च ज्योतिर्विदाभरणशेषाध्याये—

"वर्षैः सिन्धुरदर्शनाम्बरगुणैर्याते कलौ सम्मिते
मासे माधवसंज्ञितेऽत्र विहितो ग्रन्थक्रियोपक्रमः।" (१)

इदानीन्तु (१९२३ खृष्टाब्दे) कलेर्गताब्दाः ५०२४, ततश्च ३०६८ संख्यासु हृतासु १९५६ वर्षसंख्या अवशिष्यन्ते। ततोऽपि च १९२३ खृष्टाब्दसंख्यासु हृतासु ३३ वत्सरास्तिष्ठन्ति। एवञ्च सति खृष्टजन्मनस्त्रयस्त्रिंशद्वत्सरपूर्वं ज्योतिर्विदाभरणरचनारम्भ इति सिद्धम्। ज्योतिर्विदाभरणरचनारम्भाच्चतुर्विंशतिवत्सरपूर्वं च विक्रमादित्यराज्याभिषेकसमये विक्रमसंवत्प्रवर्त्तनमभूदित्यनुमीयते। तेनेदानीं १९८० विक्रमसंवत्, ततश्च १९२३ खृष्टाब्दसंख्यासु हृतासु ५७ संख्या अवशिष्यन्ते।

तत् सिद्धं खृष्टजन्माऽव्यवहितपूर्वशताब्दीकाल एव विक्रमादित्यस्य कालिदासस्य च प्रादुर्भावकाल इति।

(१) सिन्धुरो हस्ती चाष्टौ (८) "सिन्धुरः (पुं) हस्ती"ति शब्दकल्पद्रुमः। दर्शनानि षट् (६), अम्बरं शून्यं (०), गुणास्त्रयः सत्त्वरजस्तमांसि (३), "अङ्कस्य च वामा गति"रिति ज्योतिर्विदां नियमः। तथा च कलियुगारम्भात् अष्टषष्ठ्युत्तरत्रिसहस्रवर्षवृन्दे (३०६८) अतीते माधवसंज्ञिते वैशाखे मासि ज्योतिर्विदाभरणग्रन्थरचनारम्भः कृत इत्यर्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चायमपरः कश्चन कालिदास इत्यपि वक्तुं युज्यते,

"काव्यत्रयं सुमतिकृत् रघुवंशपूर्वं
जातं यतो ननु कियच्छ्रुतिकर्मवादः ।
ज्योतिर्विदाभरणकालविधानशास्त्रं
श्रीकालिदासकवितो हि ततो बभूव ॥"

इत्यनेन ज्योतिर्विदाभरणश्लोकेन रघुवंश-कुमारसम्भव-मेघदूत-कर्त्तुः कालिदासस्यैव ज्योतिर्विदाभरणकर्त्तृतया स्पष्टाभिधानात् । न वा राजान्तराश्रितोऽयं कालिदास इत्यपि शक्यते वक्तुम्,

"मत्तोऽधुना कृतिरियं सति मालवेन्द्रे
श्रीविक्रमार्कनृपराजवरे समासीत् ॥"

"धन्वन्तरि-क्षपणकामरसिंह-शङ्कु-
वेतालभट्ट-घटकर्पर-कालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥"

इति ज्योतिर्विदाभरणे स्पष्टमभिदधता कालिदासेन स्वयमेवात्मनो विक्रमादित्याश्रिततया परिचायितत्वात् ।

अत्र तु बद्धपरिकरत्वेन भारतीयसभ्यताया अर्वाचीनतां प्रतिपादयितुमीहमानानां प्रतिवचनमधरस्फुरितं "प्रक्षिप्त-मेत"दिति वचनोच्चारणमन्तरेण नास्ति कश्चित् प्रतिवादोपाय इति सुसमञ्जसमिति ।

अथ तत्रभवान् सकलकविकुलमुकुटमहामणिरसौ जन्मना कतमं वंशं देशं वा समलञ्चकारेति निरूपणमिदानीमसम्भव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेव, तादृशमूलानुपलम्भात्। तत्र ये च सन्ति विविधाः परस्परविरुद्धा लोकप्रवादाः, ते तु प्रायेणैव विश्वासपदवीं नावगाहन्ते। अतएव जीवनचरितसङ्कलनमप्यसम्भवमेव।

कालिदास इति वङ्गीयनामदर्शनात् वङ्गदेशीय इति केचित्। मगधदेशीय इतीतरे। मालवदेशीय एवेति चान्ये। अपरे तु, विक्रमादित्यस्य प्रियसखो मातृगुप्तनामा कश्चिन्महाकविः काश्मीरराजदायादे द्वितीयप्रवरसेने राज्याभिषेकात् पूर्वमेव काश्मीरमपहाय तीर्थपर्य्यटनपरायणे मृते च तदीयपितृव्ये तदानीन्तनकाश्मीरराजे हिरण्यराजे काश्मीरस्य राजशून्यतया तदीयसिंहासने विक्रमादित्येनैव प्रतिष्ठापितः। अथ गच्छति कियति काले मातृगुप्तः प्रियसुहृदो विक्रमादित्यस्य मरणमाकर्ण्य शोककातरः काश्मीरराज्यमपहाय काशीवासमङ्गीकुर्वन् तत्र स्थितेन द्वितीयप्रवरसेनेन सह परमां मैत्रीमापद्यमानः प्राकृतभाषया 'सेतुबन्ध'नामकं महाकाव्यं विरचय्य द्वितीयप्रवरसेनकृतमिदमिति प्रख्यापितवान्। कालिदास इति तस्यैव मातृगुप्तस्य नामान्तरमिति वदन्ति।

अस्ति कश्चिदीदृशः सम्प्रदायः, यः खल्वीश्वरेच्छावशादेवोत्कर्षमपकर्षं वा समापन्नानामपि कालिदासकाव्यानामुत्तममध्यमाधमतादर्शनादेव कालिदासत्रयं मन्यते (१)। मन्ये, स पुनः सम्प्रदाय इतः परं तादृशत्रिविधकाव्यदर्शनात् वङ्किमत्रयं मधुसूदनत्रयमपि मन्येत। हन्त! राजशासनभयाभावात् यत् किमप्युच्चारयितुमायासविशेषविरहाच्च यः कश्चिदेव यथेष्टमाचष्टां नाम; तत्र कः प्रतिबन्धुं चेष्टेत इति।

(१) "एकोऽपि जीयते हन्त! कालिदासो न केनचित्।
शृङ्गारे मधुरोद्गारे कालिदासत्रयी किमु॥"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ स्वरूपनायकादिनिरूपणम् ।

अभिज्ञानशकुन्तलं नामेदं नाटकम्, एतद्वृत्तान्तस्य महाभारतीयतया पद्मपुराणीयतया च ख्यातवृत्तत्वात् इतरलक्षणयोगाच्च । यथा साहित्यदर्पणे—

"नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।" इत्यादि ।

अत्र दुष्मन्तो धीरोदात्तो दक्षिणो नायकः । यथा तत्रैव—

"अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥"

"एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः ।"

शकुन्तलां तृतीयाङ्कपर्य्यन्तं कन्या मुग्धा च, परन्तु स्वकीया मध्या च नायिका । यथा तत्रैव—

"परकीया द्विधा प्रोक्ता परोढ़ा कन्यका तथा ।"

"प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥"

"विनयार्ज्जवादियुक्ता गृहकर्म्मपरा पतिव्रता स्वीया ।"

"मध्या विचित्रसुरता प्ररूढ़स्मरयौवना ।
ईषत्प्रगल्भवचना मध्यमव्रीड़िता मता ॥"

न च एकस्या एव कन्या-स्वीया-मुग्धा-मध्यारूपैः साङ्कर्य्यमिति वाच्यम्, कालभेदे तस्य दोषानावहत्वात् "क्वचिदन्योन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते" इति दर्पणकृतैव तस्याङ्गीकृतत्वाच्च ।

विप्रलम्भशृङ्गारः प्रधानरसः । स च गान्धर्वविवाहात् प्राक् पूर्वरागरूपः, परञ्च प्रवासात्मकः । तथा च तत्रैव—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।"

"श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥"

"प्रवासो भिन्नदेशित्वं कार्य्याच्छापाच्च सम्भ्रमात् ।"

"स्त्रीसंस्थानञ्चाप्सरस्तीर्थमारात् उत्क्षिप्याङ्के ज्योतिरेनां तिरोऽभूत्" इति कञ्चुकि-वाक्यश्रवणेन राज्ञः शकुन्तलाया मरणानवधारणेन "यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये" इति लक्षणायोगात् न षष्ठाङ्कतः प्रभृति करुणविप्रलम्भ इति ध्येयम् ।

प्राचुर्य्येण प्रसादो गुणः । यथा तत्रैव—

"चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।
स प्रसादः समस्तेषु रसेषु रचनासु च ॥"

बाहुल्येन वैदर्भी रीतिः । तथा च तत्रैव—

"माधुर्य्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥"

"वैदर्भी ललितक्रमा" इति ग्रन्थान्तरे लक्षणान्तरञ्च ।

तदयं संग्रहश्लोकः—

धीरोदात्तः क्षितीन्द्रः पुरुकुलतिलको दक्षिणो नायकोऽस्मिन्
प्राक् कन्यान्ते स्वकीया मुनिवरतनया नायिका मुग्धमध्या ।
शृङ्गारे विप्रलम्भे प्रथमचरमयोः पूर्वरागप्रवासौ
वैदर्भी नाम रीतिः प्रचरति बहुलं स प्रसादो गुणश्च ॥

———०———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नान्द्यन्ते सूत्रधारः (क)। अलमतिविस्तरेण (ख)। नेपथ्याभिमुख-

"तथा शब्दोऽपि च स्मृतः" इति, "आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः" इति, "कालखात्मदिशां सर्वगतत्वं परमं महत्" इति च भाषापरिच्छेदे।

पृथिव्याः सर्वबीजकारणत्वन्तु प्रत्यक्षम्।

"प्राणोऽपानः समानश्चोदानव्यानौ च वायवः। शरीरस्था इमे" इत्यमरः।

शिवस्याष्टमूर्त्तित्वे प्रमाणं यथा विष्णुपुराणम्—

"सूर्य्यो जलं मही वह्निर्वायुराकाशमेव च।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः स्मृताः॥"

[illegible]थतत्त्वश्चतन्त्र—"मूर्त्तयोऽष्टौ शिवस्यैताः प्राच्यादिक्रमयोगतः।
आग्नेय्यन्ताः प्रपूज्यास्ता वेद्यां लिङ्गे शिवं यजेत्॥"

[illegible] सृष्टिरिति "भावविहितः क्तप्रत्ययो द्रव्यवत् प्रकाशते" इति न्यायात् सामानाधि-[illegible]ण्यम्। यथा "प्राणिनः प्राणवन्तः" इति तु "धान्येन धनवान्" इत्यादिवदभेदे तृतीया।

स्रग्धरा वृत्तम्—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात्॥१॥

(क) नान्द्यन्ते इति। नन्दयति आनन्दयति सर्वेन देवादीन् आशिषा वा सभ्या-[illegible]निति इनन्तनन्दधातोः पचादित्वादचि नन्देति रूपम्; ततश्च नन्दैव नान्दीति प्रज्ञादित्वात्

যে মূর্ত্তি, জগদীশ্বরের প্রথম সৃষ্টি (জল); যে মূর্ত্তি, যথাবিধানে নিক্ষিপ্ত হবি বহন করে (অগ্নি); যে মূর্ত্তি, হোম করে (যজমান); যে দুইটী মূর্ত্তি, বার-তিথিপ্রভৃতি সময় সম্পাদন করে (সূর্য্য ও চন্দ্র); শব্দগুণশালী যে মূর্ত্তি, সমগ্র জগৎ ব্যাপিয়া রহিয়াছে (আকাশ); পণ্ডিতগণ যে মূর্ত্তিকে সমস্ত শস্যের হেতু বলিয়া থাকেন (পৃথিবী) এবং প্রাণিগণ, যে মূর্ত্তিদ্বারা প্রাণবান্ থাকে (বায়ু); মহাদেব প্রসন্ন হইয়া, প্রত্যক্ষ সেই অষ্টমূর্ত্তিদ্বারা আপনাদিগকে রক্ষা করুন॥১॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वार्थे अणि स्त्रियामीप्रत्ययः । सा च "स्तुत्याशीरन्यतरपरा वाक्" इत्यालङ्कारिकसम्प्रदाय-सिद्धा रूढ़िः । तथा च साहित्यदर्पणे—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥"

अत्र तु अष्टमूर्त्तिवर्णनया भगवतो महादेवस्य स्तुतिः सभ्यानामाशीर्येत्युभयमपि निबद्धम् । ये द्वे कालं विधत्त इत्यनेन च चन्द्रशंसित्वमवधेयम् ।

श्लोकान्तर्गतमेकैकं वाक्यमेव च एकैकं पदम् । तथा च 'या सृष्टिः स्रष्टुराद्या' इत्येकम्; 'या विधिहुतं हविर्वहति' इति द्वितीयम्; 'या च होत्री' इति तृतीयम्; 'ये द्वे कालं विधत्तः' इति चतुर्थम्; 'श्रुतिविषयगुणा या विश्वं व्याप्य स्थिता' इति पञ्चमम्; 'यां सर्वबीजप्रकृतिरित्याहुः' इति षष्ठम्; 'प्राणिनो यया प्राणवन्तः' इति सप्तमम्; 'प्रसन्न ईशः ताभिः प्रत्यक्षाभिरष्टाभिस्तनुभिः वः अवतु' इति चाष्टमं वाक्यरूपं पदम् । इतीयमष्टपदा नान्दी । तथा च नाट्यप्रदीपे—

"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे ।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ॥"

भरतनाट्यशास्त्रटीकायामभिनवगुप्ताश्च—"पदानि श्लोकावयवभूतानि तिङन्तानि सुबन्तानि वा श्लोकतुरीयांशपदानि वा अवान्तरवाक्यरूपाणि वा ।"

एतच्चास्माभिः साहित्यदर्पणटीकायां बहुधा विमृष्टं द्रष्टव्यमिति नान्दीलक्षणसङ्गतिः ।

तथा 'या सृष्टिः स्रष्टुराद्या' इत्यनेन उपरितनत्वादादिमतया कण्वरूपा व्यक्तिः सूच्यते । 'या विधिहुतं हविर्वहति' इत्यनेन दुष्मन्तनिक्षिप्तवीर्य्यवहनात् शकुन्तला । 'ये द्वे कालं विधत्तः' इत्यनेन तद्वीर्य्यनिक्षेपावसरनिष्पादनात् अनसूया-प्रियंवदे सूच्येते । 'या विश्वं व्याप्य स्थिता' इत्यनेन आकाशसम्पर्किणी मिश्रकेशी । 'यां सर्वबीजप्रकृतिरित्याहुः' इत्यनेन प्रजापतिरूपत्वाददितिकश्यपौ 'प्राणिनो यया प्राणवन्तः' इत्यनेन च पूर्वपूर्वा-सूचितानि सूतविदूषकादीनि सर्वाणि पात्राणि सूच्यन्ते, वायुना प्राणिनां प्राणवत्त्वस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मवलोक्य । आर्य्ये ! यदि नेपथ्यविधानमवसितं तदिहा-गम्यताम् । (ग)

---

तैस्तैः पावैरस्य काव्यस्य नाटकत्वनिर्वाहात् । अतएवेयं पत्रावलीसंज्ञा नान्दी । यथा नाट्यदर्पणे—

"यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।
श्लेषेण वा समासोक्त्या नान्दी पत्रावलीति सा ॥"

एतादृश्याश्च नान्द्या अन्ते पाठावसाने, सूत्रधारः प्रधाननटः ब्रवीतीति शेषः । इत्थमन्यत्रापि ब्रवीतीत्यध्याहरणीयक्रियायाः कर्त्तरि प्रथमा बोद्धव्या । सूत्रं नाटकीय-कथासूचनं धारयति उपस्थापयतीति सूत्रधारः । तथा चोक्तम्—

"नाटकीयकथासूत्रं प्रथमं येन सूच्यते ।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥"

(ख) अलमिति । अतिविस्तरेण नान्द्या अत्यन्तबाहुल्येन, अलम् इतोऽप्यति-विस्तृतनान्दीप्रयोगो व्यर्थं इत्यर्थः । तथा च सुप्तिङन्तरूपाष्टपदां नान्दीमपेक्ष्य अवान्तराष्ट-वाक्यरूपाष्टपदनान्दीप्रयोगादेव किञ्चिद्विस्तरो जातः ; इतोऽपि विस्तृतरूपायाः श्लोक-पादात्मकाष्टपदादिनान्द्याः प्रयोगो निरर्थक एव ; एतावत्यैव नान्द्या कर्त्तव्यमङ्गलाचरण-निर्वाहात् एतदधिकत्वे च निष्प्रयोजनसमयक्षेपादिति भावः ।

(ग) नेपथ्येति । शोभारूपस्य मुख्यनेपथ्यस्य अमूर्त्ततया तदाभिमुख्यासम्भवादत्र नेपथ्यपदेन तद्विधानगृहं लक्ष्यते । तथा च नेपथ्यस्य वेशविधानगृहस्य अभिमुखं यथा स्यात्तथा, अवलोक्य सम्बोधनीया नटी विद्यते न वा इति द्रष्टा । सम्बोध्यस्य अवस्थिति-स्थानाभिमुख्येनैव सम्बोधयन्तीति लोकव्यवहारमनुसृत्यैवेदमभिहितम् । अन्यथा सभादिक-मवलोकयता सूत्रधारेण नटीसम्बोधने कृते तस्य लोकव्यवहारानभिज्ञताप्रत्ययात् सभ्यानां विरक्तिः स्यादिति बोध्यम् ।

आर्य्ये ! साध्वि ! । एतेन अभिनयात्मकस्वजातीयव्यवसायविधायिनी मत्पत्न्येवेयम्, न पुनरभिनयाय वेतनभोगिनी वेश्येति सूचितम् । नेपथ्यविधानं वेशरचना, अवसितं समाप्तम्, तत् तदा, इह अस्मिन् स्थाने ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नटी। प्रविश्य। अज्ज ! इअह्मि। आणवेदु अज्जो को णिओओ अणुचिट्ठिअदु त्ति। (घ)

सूत्र। आर्य्ये ! इयं हि रसभावदीक्षागुरोर्विक्रमादित्यस्य अभिरूपभूयिष्ठा परिषत्। अस्याञ्च कालिदासग्रथितवस्तुना नवेनाभिज्ञानशकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिः, तत् प्रतिपात्रमाधीयतां यत्नः। (ङ)

(घ) आर्य्ये ! इयमस्मि। आज्ञापयतु आर्य्यः को नियोगोऽनुष्ठीयतामिति।

"आकल्पवेशौ नेपथ्यम्" इति "महाकुलकुलीनार्य्यसभ्यसज्जनसाधवः" इति च अमरः।

"वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम्" इति साहित्यदर्पणात् 'आर्य्ये' इति नटीसम्बोधनम्। एवं परत्र नटीवाक्यादावपि ज्ञेयम्। तथा सूत्रधारस्य अनीचतया शिक्षिततया च संस्कृतभाषाप्रयोगः। तथा च साहित्यदर्पणे—

"पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्।"

(घ) नटीति। प्रविश्य रङ्गालये इति शेषः। इयमहम्, अस्मि आगतेत्यर्थः। को नियोग आदेशः, अनुष्ठीयतां मया क्रियताम्, इति आर्य्यो भवान्, आज्ञापयतु। आदेशप्राप्तिमात्रमेवाहं तदनुष्ठानाय प्रवर्त्तिष्ये इति भावः।

अस्या अपि अनीचतया शिक्षिततया च शौरसेनीभाषाप्रयोगः। यथा दर्पणे—

"शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्।"

(ङ) सूत्रेति। भीमशब्दादिना भीमसेनादिप्रतीतिवदत्रापि "एकदेशेन समुदायो गम्यते" इति न्यायात् सूत्रपदेनैव सूत्रधारः प्रत्येतव्यः। एवमन्यत्रापि। हि तथाहि

(क—ग) (নান্দীপাঠের পর) সূত্রধার। অতিবিস্তৃত নান্দীপাঠে প্রয়োজন নাই। (বেশরচনাস্থানের প্রতি দৃষ্টিপাত করিয়া) আর্য্যে যদি বেশবিধান সমাপ্ত হইয়া থাকে, তবে এইস্থানে আইস।

(ঘ) নটী। (প্রবেশ করিয়া) আর্য্য! এই আমি আসিয়াছি; তা—আপনি আদেশ করুন, কোন্ আজ্ঞা পালন করিতে হইবে।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वत्प्रार्थितनियोगमेव जानीहीत्यर्थः। रसः शृङ्गारादिः भावश्च निर्वेदादिः तयोर्विषये विशेषेण दीक्षागुरुः प्राधान्येनोपदेष्टा तस्य रसभावविषयेष्वतीवाभिज्ञस्येत्यर्थः, विक्रमे तेजःप्रकाशात्मकपराक्रमे आदित्य इव तस्य विक्रमादित्योपाधिकस्य उज्ज्यिनीपतेर्यशोवर्म्मदेवस्येत्यर्थः, अभिरूपाः पण्डिता एव भूयिष्ठा अतिबहुला यस्यां सा तादृशी, परिषत् सभा सञ्जातेति शेषः। किञ्चेति चार्थः। कालिदासेन तदाख्येन केनचित् कविना ग्रथितं निबद्धं वस्तु सर्वो विषयो यस्मिन् तेन, नवेन नूतनेन, अभिज्ञानशकुन्तलं नामधेयं नाम यस्य तेन, नाटकेन तदाख्यदृश्यकाव्यविशेषेण, अस्यां परिषदि, उपस्थातव्यम् उपासितव्यं सभ्यानां सन्तोषो विधातव्य इत्यर्थः; तत् तस्मात्, प्रतिपात्रम् एतन्नाटकान्तर्गतप्रत्येकव्यक्तिविषये, यत्नः तेषामभिनयसौष्ठवादौ आग्रहः, आधीयतां क्रियताम्। त्वां प्रति एष एव मे नियोग इति भावः।

"अभिरूपो बुधे रम्ये" इति मेदिनी। "समज्या परिषद्गोष्ठी" इत्यमरोक्तं परिषच्छब्देनात्र सभामात्रं गृह्यते। न तु—

"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः।
त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा॥"

इति मनूक्तः सभाविशेषः, "अभिरूपभूयिष्ठा" इत्यनुपपत्तेः।

काल्या दासः कालिदासः "याकारौ स्त्रीकृतौ ह्रस्वौ क्वचित्" इति ह्रस्वः। अभिज्ञायते शकुन्तला आत्मन एव पत्नीति बुध्यते अनेनेति अभिज्ञानं वक्ष्यमाणमङ्गुरीयकं तेन ज्ञाता शकुन्तला यत्र तत्। शाकपार्थिवादित्वान्मध्यपदलोपो समासः। शकुन्तेभ्यः पक्षिभ्यः ला रक्षा यस्याः सा शकुन्तला। धातूनामनेकार्थत्वात् "रा ला दाने" इत्यस्य क्विपि रूपम्। तथा च महाभारते आदिपर्व्वणि षड्शीतितमाध्याये—

"निर्जने तु वने यस्मात् शकुन्तैः परिरक्षिता।
शकुन्तलेति नामास्या कृतञ्चापि ततो मया॥"

नामैव नामधेयम्, "भाग-रूपनामभ्यो धेयम्" इति स्वार्थे धेयप्रत्ययः।

"नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम्" इति दर्पणोक्तेः, अङ्गुरीयकेण शकुन्तलावगमस्यैवात्र प्रधानवृत्तान्तत्वादस्य अभिज्ञानशकुन्तलमिति नाम कृतम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

নটী। সুবিদিদপ্পওঅদাএ অজ্জস্স ণ কিম্পি পরিহাইস্সদি। (চ)

সূত্র। সস্মিতম্। আর্য্যে! কথয়ামি তে ভূতার্থম্। (ছ)

(চ) সুবিদিতপ্রয়োগতয়া আর্য্যস্য ন কিমপি পরিহাস্যতে।

---

"নাটকং খ্যাতবৃত্তং স্যাৎ পঞ্চসন্ধিসমন্বিতম্।" ইত্যাদিকং নাটকলক্ষণং সাহিত্যদর্পণে অনুসন্ধেয়ম্।

(চ) নটীতি। সুবিদিতঃ সম্যক্ শিক্ষিতঃ প্রয়োগঃ অভিনয়ব্যাপারো যেন তস্য ভাবস্তয়া হেতুনা, আর্য্যস্য ভবতঃ, কিমপি কোঽপি বিষয়ঃ, ন পরিহাস্যতে ন পরিহীনং ভবিষ্যতি স্খলিতং ন ভবিষ্যতীত্যর্থঃ। অতএব অভিনয়েন সভ্যসন্তোষোৎপাদনে প্রত্যেকপাত্রং প্রতি মম যত্নাধানে বিশেষপ্রয়োজনং নাস্তীতি ভাবঃ।

অত্র প্রধানাভিনয়কর্ত্তুঃ সূত্রধারস্য প্রশংসাকরণেন সভ্যানামুন্মুখীকরণাৎ প্ররোচনা নাম ভারতীবৃত্তেরঙ্গম্। যথা দর্পণে—

"উন্মুখীকারঃ প্রশংসাতঃ প্ররোচনা।"

(ছ) সূত্রেতি। মমাভিনয়শিক্ষাং প্রতি তদুৎকৃষ্টতয়া নট্যা দৃঢ়বিশ্বাসো নোচিত ইত্যেতৎসূচনার্থং স্মিতম্ ঈষদ্ধাস্যং তেন সহেতি সস্মিতম্। তে তব সমীপে, ভূতার্থং সত্যবিষয়ম্।

"ভূতং সত্যোপমানয়োঃ" ইত্যাদি হেমচন্দ্রঃ।

---

(ঙ) সূত্রধার। আর্য্যে! রস ও ভাবের বিশেষ শিক্ষক মহারাজ বিক্রমাদিত্যের এই সভা, ইহাতে বহুতর পণ্ডিত উপস্থিত আছেন। কালিদাসপ্রণীত নূতন অভিজ্ঞানশকুন্তলনামক নাটকদ্বারা এই সভার সভ্যগণকে আমরা সন্তুষ্ট করিব; অতএব তুমি প্রত্যেক অভিনেতার প্রতি যত্ন কর।

(চ) নটী। আপনি অভিনয়কার্য্যটী সম্যক্‌রূপে শিক্ষা করিয়াছেন বলিয়া, আপনার কোন বিষয়েই ত্রুটি হইবে না।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥२॥

नटी । सविनयम् । एवस्रेदं । अणन्तरकरणिज्जं दाणिं अज्जो आणवेदु । (ज)

(ज) एवमेतत् । अनन्तरकरणीयमिदानीम् आर्य्य आज्ञापयतु ।

आपरितोषादिति । विदुषां विज्ञानाम्, आपरितोषात् स्वकीयव्यापारेण सन्तोषोत्पत्तिपर्य्यन्तम्, प्रयोगस्य अभिनयादिव्यापारस्य विज्ञानं विशेषाभिज्ञताम्, साधु उत्कृष्टमेव स्थितम्, इति न मन्ये । कथमेतदित्याह—बलवदित्यादि । बलवत् अत्यन्तम्, शिक्षितानामपि, मादृशेषु अल्पशिक्षितेषु का कथा, अतीवकृतविद्यानामपि जनानामित्यर्थः, चेतश्चित्तम्, आत्मनि स्वविषये, अप्रत्ययम् अविश्वस्तम् । तथा च महाशिक्षिता अपि जनाः स्वव्यापारेण लोकानां सन्तोषोत्पत्तेः प्राक् आत्मशिक्षा उत्कृष्टैवेति न निर्णेतुमर्हन्ति, तन्मादृशेषु का कथा । अतएव च मां प्रति सुविहितेत्यादिसूचितस्तव विश्वासः कथमपि नोचित इति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः अर्थापत्त्या सङ्कीर्य्यते ।
"बलवत् सुष्ठु, किमुत स्वत्यतीव च निर्भरे" इत्यमरः ।
आर्य्या जातिः—"यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या ॥"
इति लक्षणात् ॥२॥

(ज) नटीति । आत्मोक्तेरनौचित्यस्य प्रतिपन्नत्वात् अप्रतिभतया विनयः, तेन

(छ) সূত্রধার। (ঈষৎ হাস্যের সহিত) আর্য্যে! তোমার নিকট যথার্থ বিষয় বলিতেছি।

পণ্ডিতগণের সন্তোষ হওয়া পর্য্যন্ত, অভিনয়জ্ঞান উৎকৃষ্ট বলিয়া মনে করি না। কারণ, অত্যন্তশিক্ষিত ব্যক্তিদিগেরও, নিজের বিষয়ে চিত্ত অবিশ্বাসী হয় ॥২॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

সূত্র। আর্য্যে! কিমন্যদস্যাঃ পরিষদঃ শ্রুতিপ্রমোদহেতো-গীতাৎ করণীয়মস্তি। (ঝ)

নটী। অধ কদমং উণ উদুং অধিকরিঅ গাইস্সং। (ঞ)

সূত্র। আর্য্যে! নন্বিমমেব তাবদচিরপ্রবৃত্তমুপভোগক্ষমং গ্রীষ্মসময়মধিকৃত্য গীয়তাম্। সম্প্রতি হি—(ট)

সুভগসলিলাবগাহাঃ পাটলসংসর্গসুরভিবনবাতাঃ।
প্রচ্ছায়সুলভনিদ্রা দিবসাঃ পরিণামরমণীয়াঃ ॥৩॥

---

(ঞ) অথ কতমং পুনঃ ঋতুম্ অধিকৃত্য গাস্যামি।

---

সহেতি সবিনয়ম্। এতৎ ত্বয়োক্তম্, এবমিত্থং সত্যমেবেত্যর্থঃ। অনন্তরকরণীয়ম্ ইতঃ পরং কর্ত্তব্যম্।

(ঝ) সূত্রেতি। পরিষদঃ সভায়াঃ, শ্রুতিপ্রমোদহেতোঃ শ্রবণসুখজনকাৎ, গীতাৎ অন্যৎ কিং করণীয়মস্তি?। তদ্গীতমেব ক্রিয়তামিত্যাশয়ঃ।

(ঞ) নটীতি। অথেতি প্রশ্নে। কতমং বহূনাং মধ্যে কম্। অধিকৃত্য আশ্রিত্য, গাস্যামি গানং করিষ্যামি?।

(ট) সূত্রেতি। নন্বিত্যনুনয়ে। অচিরপ্রবৃত্তম্ অবহুপূর্বোপস্থিতম্, উপভোগক্ষমং সম্ভোগযোগ্যম্। হি তথাহি।

---

(জ) নটী। (বিনয়ের সহিত) ইহা এইরূপই বটে। এখন আপনি পরকর্ত্তব্য আদেশ করুন।

(ঝ) সূত্রধার। আর্য্যে! এই সভার শ্রবণানন্দজনক গান ভিন্ন আর কি কর্ত্তব্য আছে?।

(ঞ) নটী। কোন্ ঋতু অবলম্বন করিয়া গান করিব?।

(ট) সূত্রধার। আর্য্যে! অচিরোপস্থিত এবং সম্ভোগযোগ্য এই গ্রীষ্মকাল অবলম্বন করিয়াই গান কর। কারণ, এখন—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नटी । तह । इति गायति । (ठ)

खणचुम्बिआइं भमरेहिं उह सुउमारकेसरसिंहाइं ।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइं ॥४॥

(ठ) तथा ।

क्षणचुम्बितानि भ्रमरैः ऊह सुकुमारकेशरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ॥४॥

सुभगेति । सुभगो ग्रीष्मसन्तापनिवर्त्तकत्वात् मनोहरः, सलिलेषु जलेषु अवगाहः अवगाहनं येषु ते ; पाटलानां तदाख्यकुसुमानां संसर्गेण स्पर्शेन सुरभिः सुगन्धिः वनवाती वन्यवायुर्येषु ते ; प्रकृष्टा छाया यस्मिन् तादृशे स्थाने सुलभा अनायासलभ्या निद्रा येषु ते तथा परिणामे अवसाने रमणीया विचरणादौ मनोहराः, दिवसा वर्त्तन्त इति शेषः । तेनैनमधिकृत्य गानमुचितमेव भवेदिति भावः ।

अत्र दिवसानां गानेन वर्णनीयताप्रतिपादनं प्रति सुभगसलिलावगाहत्वादिबहुकारणानामुपन्यासात् समुच्चयोऽलङ्कारः ।

"ऋतुञ्च कञ्चित् प्रायेण भारतीं वृत्तिमाश्रितः ।" इत्युक्तेरत्र ग्रीष्मस्य ऋतोः कीर्त्तनम् । आर्य्या जातिः ॥३॥

(ठ) नटीति । तथा तदेव करोमीत्यर्थः ।

क्षणेति । दयमानाः कोमलभावेन ग्रहणात् सदयाः, प्रमदास्तरुण्यः, भ्रमरैः क्षणेन उत्सवेन सौरभातिशयादानन्देनेत्यर्थः चुम्बितानि मुखेन स्पृष्टानि ; तथा सुकुमाराः कोमलाः केसराणां किञ्जल्कानां शिखा अग्रभागा येषां तानि ; शिरीषकुसुमानि शिरीषाख्यपुष्पाणि ; अवतंसयन्ति शिरोभूषणीकुर्वन्ति । इति त्वम् ऊह वितर्क

জলে অবগাহন করা বড়ই মনোহর ; পাটলপুষ্পের সংসর্গে বনের বায়ু সুগন্ধি ; ভাল ছায়াতে অনায়াসেই নিদ্রা লাভ করা যায় এবং দিনগুলি শেষ বেলায় বড়ই মনোহর হয় ॥৩॥

(ঠ) নটী । তাহাই । ( এই বলিয়া গাইতে লাগিল । )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूत्र। आर्य्ये! साधु गीतम्। अहो! रागापहृत-चित्तवृत्तिरालिखित इव विभाति सर्वतो रङ्गः। तदिदानीं कतमं प्रयोगमाश्रित्यैनमाराधयामः?। (ङ)

पर्य्यालोचयेत्यर्थः। शिरीषकुसुमानां ग्रीष्मे प्रकाशादिदं ग्रीष्मसमयाधिकारेण गान-मित्यवधेयम्।

"निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः। "अवतंसो न स्त्रियां स्यात् कर्णपूरे च शेखरे" इति मेदिनी।

उद्गाथा नाम गीतिरियम्। तथा च पिङ्गले—

"पुव्वद्धे उत्तद्धे मत्ता तीस त्ति सुभअ! संभणिआ।
सो उग्गाहो वुत्तो पिङ्गलकइ-दिट्ठ-सट्ठि-मत्तङ्गो॥"

अस्यानुवादो यथा—

"पूर्वार्द्धे उत्तरार्द्धे मात्रास्त्रिंशदिति सुभग! संभणिताः।
सा उद्गाथा उक्ता पिङ्गलकविदृष्टः षष्टिमात्राङ्गाः॥" ॥४॥

(ङ) सूत्रेति। साधु उत्कृष्टम्। तदुत्कर्षकार्य्यमेव दर्शयति अहो इति। अहो आश्चर्य्यं। रङ्गो रङ्गस्थलोकगणः, रागेण गानस्वरेण अपहृता आकृष्य नीता चित्तवृत्तिर्यस्य स तादृशः सन्, सर्वतः समन्ततः, आलिखितश्चित्रित इव विभाति। अतएवेदं साध्वेव गीतमिति भावः। तत् तस्मात्, कतमं बहूनां मध्ये कम्, प्रयुज्यत इति प्रयोगो नाटकादिस्तम्। एनं रङ्गम्, आराधयामः सन्तोषयामः।

ভ্রমরগণ আনন্দে যেগুলিকে স্পর্শ করিতেছে এবং যে গুলির উপরিভাগ কোমল, রমণীগণ আদরের সহিত সেই শিরীষপুষ্পগুলিকে মস্তকের ভূষণ করিতেছে ॥৪॥

(ঙ) সূত্রধার। আর্য্যে! ভাল গান করিয়াছ। কি আশ্চর্য্য! গানের স্বর হৃদয় অপহরণ করিয়াছে, তাই রঙ্গালয়স্থ লোকসকল, সকল

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नटी। णं पढ़मं ज्जेव अज्जेण आणत्तं अहिसाण-सउन्तलं णाम अउव्वं णाड़अं अहिणीअदु त्ति। (ढ)

सूत्र। आर्य्ये! सम्यगनुबोधितोऽस्मि। अस्मिन् क्षणे खलु विस्मृतं मयैतत्। कुतः—(ण)

तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा ॥५॥

(ढ) ननु प्रथममेव आर्य्येण आज्ञप्तम् अभिज्ञानशकुन्तलं नाम अपूर्वं नाटकम् अभिनीयतामिति।

---

(ढ) नटीति। नन्विति सम्बोधने। आर्य्येण भवता, आज्ञप्तं "नवेनाभिज्ञान-शकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिः" इत्यनेन अवधारितम्। पत्युर्गौरव-द्योतनार्थं माज्ञप्तमित्युक्तम्। अपूर्वं नूतनम् आश्चर्य्यमिति च ध्वन्यते। अभिनीयता-मस्माभिरिति शेषः। इति हेतोः पुनः प्रश्नो नोपपद्यते इत्याशयः।

(ण) सूत्रेति। अनुबोधितः त्वया स्मारितः कुतः कारणाद्विस्मृतमित्यर्थः। तत्कारणमाह तवेति। अतिरंहसा अत्यन्तवेगशालिना, सारङ्गेण हरिणेन, एष प्रविशन् राजा दुष्मन्त इव; हारिणा मनोहरेण, तव गीतरागेण गानस्वरेण, प्रसभं बलात् हृत आकृष्टचित्तः दूरं नीतश्च अस्मि। अतएव अवधारितविषयविस्मृतिर्जातेति भावः। अत्र श्रौती उपमालङ्कारः।

---

দিকেই যেন চিত্রিত হইয়া রহিয়াছেন। তা এখন কোন্ নাটক অবলম্বন করিয়া ইঁহাদিগকে সন্তুষ্ট করি?।

(ঢ) নটী। আপনি ত প্রথমেই বলিয়াছেন যে, অভিজ্ঞানশকুন্তল-নামক অপূর্ব্ব নাটক অভিনয় করিব।

(ণ) সূত্রধার। আর্য্যে! ঠিক্ স্মরণ করাইয়া দিয়াছ। আমি এইক্ষণে ইহা বিস্মৃত হইয়াছিলাম। কারণ—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति निष्क्रान्तौ । (त)

## प्रस्तावना । (थ)

ततः प्रविशति रथारूढ़ः शशरचापहस्तो मृगमनुसरन् राजा सूतश्च (१) । (द)

"सारङ्गः पुंसि हरिणे चातके च मतङ्गजे । शबले त्रिषु" इति मेदिनी । पथ्यावक्त्रं वृत्तम्—"युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्त्तितम्" इति लक्षणात् ॥५॥

(त) इतीति । निष्क्रान्तौ निर्गतौ रङ्गभूमितो नटीनटाविति शेषः ।

(थ) प्रेति । प्रस्तावयति अभिप्रेतविषयम् उद्भावयति या सा प्रस्तावना । यथा साहित्यदर्पणे—

"नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥"

अत्र सादृश्योपन्यासेन दुष्मन्तप्रवेशरूपान्यकार्य्यप्रसाधनादियम् अवलगिताख्या प्रस्तावना। यथा तत्रैव—

"यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते ।
प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ॥"

एतल्लक्षणे इदमेव चोदाहृतं दर्पणकारेण ।

---

অত্যন্ত বেগবান্ হরিণ যেমন, এই রাজা দুষ্মন্তকে আকর্ষণ করিয়া লইয়া যাইতেছে, সেইরূপ তোমার মনোহর গানরাগ আমাকে বলক্রমে আকর্ষণ করিয়াছিল ॥৫॥

(ত) (ইহার পর উভয়ে চলিয়া গেল ।)

(থ) প্রস্তাবনা ।

---

(१) ततः प्रविशति मृगानुसारी शशरचापहस्तो राजा रथेन सूतश्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूतः। राजानं मृगञ्चावलोक्य। आयुष्मन्!। (ध)

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्म्मुके।
मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम्॥६॥

---

(द) तत इति। शरेण बाणेन सहेति सशरं चापं धनुर्हस्ते यस्य सः, मृगं कञ्चित् हरिणम्, अनुसरन् अनुधावन्, राजा दुष्मन्तः, सूतश्च तस्य सारथिः प्रविशतीत्यन्वयः।

"सूतः क्षत्ता च सारथिः" इत्यमरः।

इतः प्रभृति प्रथमाङ्कसमाप्तिपर्य्यन्तो मुखसन्धिः। तथा चात्र "वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलुः कृती" इत्यादिना शकुन्तलाप्राप्तौ राज्ञ औत्सुक्यात् "कथं इमं जणं पेक्खिअ तवोविरोहिणो विआरस्स गमणीआह्मि संवुत्ता" इत्यादिना च राजप्राप्तौ शकुन्तलाया औत्सुक्यात् आरम्भो नाम प्राथमिकी कार्य्यावस्था निबद्धा। यथा दर्पणे—

"भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये।"

तथा अनसूयाप्रियंवदाभ्यां परिपोषितः शकुन्तलादुष्मन्तयोः परस्परानुरागो बीजं नाम अर्थप्रकृतिः। तथा च तत्रैव—

"अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति।
फलस्य प्रथमो हेतुर्बीजं तदभिधीयते॥"

तथा "यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्॥"

अस्य च उपक्षेपादीनि द्वादशाङ्गानि यथास्थानं निवेश्य लक्षणानि वक्ष्यामः।

(ध) सूत इति। आयुष्मन्! प्रशस्तायुःशालिन्!।

"आयुष्मन् रथिनं सूतः" इति दर्पणोक्तेः आयुष्मन्निति सम्बोधनम्। "पुरुषाभ्या-

---

(দ) (তদনন্তর শরসমন্বিত-ধনু হস্তে, হরিণের অনুসরণ করিতে করিতে রাজা দুষ্মন্ত ও সারথি, রথে আরোহণ করিয়া প্রবেশ করিলেন।)

(ধ) সারথি। (রাজা ও হরিণের প্রতি দৃষ্টিপাত করিয়া) আয়ুষ্মন্!

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । सूत ! दूरममुना सारङ्गेण वयमाकृष्टाः । सोऽयमिदानीमपि—(१) (न)

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
शष्पैरर्द्धावलीढ़ैः (२) श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥७॥

मनीचानां संस्कृतं स्यात् कृतात्मनाम्" इति तवव्यनियमात् सूतस्य अनीचत्वेन शिक्षितत्वेन च संस्कृतं भाषा । एवं राज्ञोऽपि ।

कृष्णेति । कृष्णसारे पलायमाने हरिणविशेषे, अधि अधिरोपिता ज्या गुणो यस्मिन् तदधिज्यं कार्म्मुकं धनुर्यस्य तस्मिन् त्वयि दुष्मन्ते च, चक्षुर्दत् अर्पयन्, अहम्, मृगं मृगरूपधारिणं यज्ञम् अनुसरति अनुधावतीति तम्, साक्षात् प्रत्यक्षम्, पिनाकिनं पिनाकधनुर्द्धारिणं महादेवमिव पश्यामि ।

अत्र पिनाकिनः साक्षात्त्वाभावेऽपि तत्सम्भावनावशात् भावाभिमानिनी द्रव्योत्प्रेक्षालङ्कारः ।

हन्तुमागच्छन्तं पिनाकिनमवलोक्य दक्षयज्ञो मृगरूपमवलम्ब्य पलायाञ्चक्रे ; पिनाकी च तमनुसृतवानिति पौराणिकवृत्तान्तः ॥६॥

(न) राजेति । सारङ्गेण हरिणेन । आकृष्टा आकृष्य आनीताः । सोऽयं सारङ्गः, इदानीमपि अस्माभिः पश्चाद्धावनेऽपि, प्रयातीति श्लोकस्थेनान्वयः ।

হরিণের প্রতি এবং গুণারোপিত-ধনুর্দ্ধারী আপনার প্রতি দৃষ্টিপাত করতঃ, হরিণরূপী যজ্ঞের অনুসরণকারী পিনাকধনুর্দ্ধারী সাক্ষাৎ মহাদেবকে যেন দেখিতেছি ॥৬॥

(ন) রাজা। সারথি! এই হরিণ আমাদিগকে দূরে আকর্ষণ করিয়া আনিয়াছে। এখনও এই সেই হরিণ—

(१) अयं पुनरिदानीमपि । (२) दर्भैरर्द्धावलीढ़ैः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

গ্রীবেতি। অনুপততি পশ্চাৎ ধাবতি, স্যন্দনে অস্মদীয়রথে অস্মদীয়ং রথং প্রতীত্যর্থঃ, গ্রীবায়াঃ কন্ধরায়া ভঙ্গেন পশ্চাদ্ভিমুখপরিবর্ত্তনেন অভিরামং সুন্দরং যথা স্যাত্তথা, মুহুর্ধারং বারং দত্তা অর্পিতা দৃষ্টির্যেন সঃ, শরস্য মন্নিক্ষিপ্তবাণস্য পতনভয়াৎ স্বগাত্রে পাতভীতের্হেতোঃ, ভূয়সা অধিকেন, পশ্চার্দ্ধেন শরীরস্য পশ্চাদ্ভাগেন, পূর্বকায়ং শরীরস্য পূর্বার্দ্ধং প্রবিষ্টঃ, সম্মুখস্থপদদ্বয়াভ্যন্তরে প্রবেশিতদেহপশ্চাদ্ভাগ ইত্যর্থঃ, শ্রমেণ দ্রুতগমনায়াসেন বিবৃতাৎ প্রকটিতাৎ মুখাৎ ভ্রংশিভিঃ স্বয়মেব পতনশীলৈঃ, অর্দ্ধাবলীঢ়ৈঃ অর্দ্ধভুক্তৈঃ, শষ্পৈর্বালতৃণৈঃ, কীর্ণং ব্যাপ্তং বর্ত্ম গমনপথো যস্য সঃ, উদগ্রম্ ঊর্দ্ধং প্লুতং লম্ফনং যস্য তস্য ভাবস্তস্মাৎ, বিয়তি আকাশে, বহুতরং সাতিশয়ম্, উর্ব্যাং ভূমৌ চ, স্তোকম্ অল্পম্, প্রযাতি গচ্ছতি, পলায়মানঃ খল্বয়ং মৃগঃ উল্লম্ফনাতিশয়েন আকাশ এব অধিকং তিষ্ঠতি ভূমৌ চাল্পমিতি ভাবঃ। ইতি ত্বং পশ্য।

অত্র যথাবদ্বস্তুবর্ণনাৎ স্বভাবোক্তিরলঙ্কারঃ। উর্ব্যামিত্যত্র চ পরুষবর্ণতয়া শ্রুতিদুঃখাবহত্বাৎ দুঃশ্রবত্বদোষঃ, তথা উর্ব্যামিত্যতঃ পরং সমুচ্চয়ার্থকশ্চকারঃ অবশ্যং বক্তব্যঃ, কিন্তু নোক্ত ইতি বাচ্যানভিধানদোষশ্চ। 'যাতি ভূমৌ চ কিঞ্চিৎ' ইতি পাঠে তু তয়োঃ সমাধানম্।

"বল্লী রামী নীলচারুস্থিতে শ্রিপু" ইতি "শতাঙ্গঃ স্যন্দনো রথঃ" ইতি "শষ্পং বালতৃণম্" ইতি চ অমরঃ।

পশ্চাদর্দ্ধমিতি পশ্চার্দ্ধম্, পৃষোদরাদিত্বাৎ সাধুঃ।

স্রগ্ধরা বৃত্তম্ ॥৭॥

---

গ্রীবা পরিবর্ত্তিত করিয়া পশ্চাদ্‌গামী রথের প্রতি, বার বার সুন্দর দৃষ্টিপাত করিতেছে; বাণ পড়িবার ভয়ে, শরীরের পশ্চাদ্ভাগদ্বারা সম্মুখভাগের অভ্যন্তরে অধিকভাবে প্রবেশ করিতেছে; পরিশ্রমে মুখমণ্ডল প্রকটিত হইয়া যাইতেছে; তাহাতে সেই মুখ হইতে পতিত অর্দ্ধভুক্ত নূতন তৃণদ্বারা পথ ব্যাপ্ত করিতেছে; এই অবস্থায় অত্যন্ত উল্লম্ফন করায় আকাশেই অধিক গমন করিতেছে, কিন্তু ভূতলে অল্পই যাইতেছে; দেখ—॥৭॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

সবিস্ময়ম্ (১)। কথমনুপতত এব মে প্রযত্নপ্রেক্ষণীয়ঃ সংবৃত্তোঽয়ং মৃগঃ। (প)

সূতঃ। উদ্ঘাতিনী ভূমিরিতি রশ্মিসংযমনাৎ রথস্য মন্দীভূতো বেগঃ; তেনৈষ মৃগো বিপ্রকৃষ্টঃ সংবৃত্তঃ। সম্প্রতি হি সমদেশবর্ত্তী ন তে দুরাসদো ভবিষ্যতি (২)। (ফ)

রাজা। তেন হি মুচ্যন্তামভীষবঃ। (ব)

(প) সবিস্ময়মিতি। অয়ং মৃগঃ, অনুপতত এব পশ্চাদ্ধাবত এব মে মম, কথং প্রযত্নেন দূরগতত্বাৎ কষ্টেন প্রেক্ষণীয়ো দ্রষ্টব্যঃ সংবৃত্তো জাতঃ। এতেন রথস্য সাতিশয়ং বেগং সম্পাদয়িতুমশক্ততয়া সূতস্য নিন্দা আক্ষিপ্যতে।

(ফ) অতঃ সূতঃ স্বদোষং পরিহরতি সূত ইতি। উদ্ঘাতয়তি স্খলনং জনয়তীতি উদ্ঘাতিনী উন্নতাবনতা। ইতি হেতোঃ, রশ্মেরশ্বরজ্জোঃ সংযমনাদাকর্ষণাৎ। বিপ্রকৃষ্টো দূরবর্ত্তী। দুরাসদো দুর্লভঃ, অয়ং মৃগ ইতি শেষঃ।

(ব) রাজেতি। তেন হি সমদেশবর্ত্তিত্বেনৈব হেতুনা, অভীষবঃ প্রগ্রহা অশ্বরজ্জব ইতি যাবৎ, মুচ্যন্তাং লম্বীকরণায় হস্তাৎ ত্যজ্যন্তাম্।

"অভীষুঃ প্রগ্রহে রশ্মৌ" ইত্যমরঃ।

(প) (বিস্ময়ের সহিত) পিছনে পিছনে যাইতে যাইতেই এই হরিণ, আমার যত্নপূর্ব্বক দর্শনের যোগ্য হইয়া দাঁড়াইল কেন?।

(ফ) সারথি। স্থানগুলি উচু-নীচু ছিল বলিয়া, দড়ি টানিয়া ধরায় রথের বেগ কমিয়া গিয়াছিল; তাহাতেই এই হরিণ দূরবর্ত্তী হইয়া পড়িয়াছিল। এখন সমান জায়গায় রহিয়াছে; সুতরাং আপনার দুষ্প্রাপ্য হইবে না।

(১) তদেব কথমনুপতত এব মে প্রযত্নপ্রেক্ষণীয়ঃ সংবৃত্তঃ।

(২) আয়ুষ্মন্! উদ্ঘাতিনী ভূমিরিতি মযা রশ্মিসংযমনাৎ রথস্য মন্দীকৃতো বেগঃ। তেন মৃগ এষ বিপ্রকৃষ্টান্তরঃ। সম্প্রতি সমদেশবর্ত্তিনস্তে ন দুরাসদো ভবিষ্যতি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूतः । यथाज्ञापयत्यायुष्मान् । इति भूयो रथवेगं सूचयित्वा । आयुष्मन् ! पश्य पश्य । एते हि—(१) (भ)

मुक्तेषु रश्मिषु निरायतपूर्वकाया:
स्वेषामपि प्रसरतां रजसामलङ्घ्या: ।
निष्कम्पचामरशिखाश्च्युतकर्णभङ्गा:
धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते (२) ॥८॥

(भ) सूत इति । एत इति श्लोकस्थवाजिन इत्यस्य विशेषणम् । हि तथाहि । मुक्तेष्विति । रश्मिषु अश्वरज्जुषु, मुक्तेषु सत्सु, निर् विद्यन्ते आयता दीर्घा येभ्य इति निरायता अतीवदीर्घा: पूर्वकाया देहपुरोभागा येषां ते ; प्रसरतां पृष्ठागतवायुवेगेन सम्मुखे प्रचलताम्, स्वेषामपि स्वस्वखुरोत्थापितानामपि, रजसां धूलीनाम्, अलङ्घ्या लङ्घयितुमतिक्रमितुमशक्या:, निष्कम्पा निश्चला: चामराणां गलावधिशिरोलोम्नां शिखा अग्रदेशा येषां ते, तथा च्युता नष्टा: कर्णयोर्भङ्गा अवनमनानि येषां ते तथोक्ता:, ते तव वाजिन: अश्वा:, वर्त्मनि गन्तव्यपथे धावन्ति वेगेन गच्छन्ति, तरन्ति नु आकाशे प्लवन्ते किम् ? । अन्यथा ईदृशवेगासम्भव इति भाव: ।

अत्रापि पूर्ववत् स्वभावोक्ति:, धावने तरणसंशयात् शुद्धसन्देहश्च अनयोर्मिथो निरपेक्षतया संसृष्टि: । तथा उक्तविधसमासाश्रयणात् निरायतपदेन किम् अतिदीर्घ:, उत निर्धनादिवत् आयतत्वाभावविशिष्टो वाङ्गस्य इति सन्देहात् सन्दिग्धतादोष:, स तु 'महायतपूर्वकाया:' इति पाठेन परिहार्य्य: ।

(ব) রাজা। তাহা হইলে দড়ি ছাড়িয়া দাও।

(ভ) সারথি। আয়ুষ্মান্ যেমন আদেশ করেন। ( এই বলিয়া সাতিশয় রথের বেগ জন্মাইয়া ) আয়ুষ্মন্! দেখুন দেখুন।

(१) सूत: ।···( रथवेगं निरूप्य ) आयुष्मन् ! पश्य पश्य ।

(२) मुक्तेषु रश्मिषु निरायतपूर्वकाया: निष्कम्पचामरशिखा निभृतोर्द्ध्वकर्णा: ।
आत्मोद्धतैरपि रजोभिरलङ्घनीया धावन्त्यमी मृगजवाक्षमयेव रथ्या: ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सहर्षम्। नूनमतीत्य हरिणं हरयो वर्त्तन्ते
यतः—(१) (म)

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत्।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयोः
न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथजवात् (२) ॥९

वसन्ततिलका वृत्तम्—"उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥८॥

(म) राजेति। ईप्सितहरिणप्राप्तिसम्भावनया हर्षः। हरयो मदीयघोट हरिणमतीत्य वेगातिशयादतिक्रम्य, वर्त्तन्ते वर्त्तिष्यन्ते इति भविष्यत्सामीप्ये वर्त्तम इति नूनं तर्कयामीत्यर्थः।

"नूनं तर्केऽर्थनिश्चये" इत्यमरः।

यदिति। रथस्य जवात् वेगात् यत् वस्तु, आलोके दूरतो दर्शने सूक्ष्मं क्षुद्रमा सहसा तत्क्षणादेव, तत् वस्तु विपुलतां विशालताम्, व्रजति प्राप्नोतीति। इदं सम्मुखदूर विषयम्। यत् वनादिकं वस्तु, अर्द्धा वस्तुत एव, विच्छिन्नं विभक्तम्, तत्

দড়ি ছাড়িয়া দিলে পর, যাহাদের দেহের পূর্ব্বার্দ্ধ অত্যন্ত হইয়াছে; আপনাদের খুরোত্থাপিত সম্মুখগামী ধূলিও, যাহাদিগ লঙ্ঘন করিতে পারিতেছে না এবং যাহাদের চামরের অগ্রভাগ নি হইয়াছে, আর কর্ণের বক্রতা নিবৃত্তি পাইয়াছে; সেইরূপ আপনার অশ্বগণ, পথে ধাবিত হইতেছে, না,—সন্তরণ করিতেছে? ॥৮॥

(ম) রাজা। (আনন্দের সহিত) নিশ্চয় ঘোড়াগুলি, হরিণটা অতিক্রম করিয়া যাইবে। কারণ,—

(१) सत्यमतीत्य हरितो हरींश्च वर्त्तन्ते वाजिनः। तथाहि—

(२) यदन्तर्विच्छिन्नम्, यदर्द्धे विच्छिन्नम्। न मे पार्श्वे किञ्चित् क्षणमपि रथजवात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूतः। पश्यैनं व्यापाद्यम्। (य)
राजा। शरसन्धानं नाटयति (१)। (र)

कृतसन्धानमिव कृतसंयोगमिव भवति। इदं पार्श्वस्थविषयम्। यत् वनश्रेण्यादिकम्, प्रकृत्या स्वभावेनैव वक्रं कुटिलम्, तदपि वस्तु, समा रेखा यस्य तत् तादृशं भवति। इदमपि पार्श्वस्थविषयम्। तथा किञ्चित् किमपि वस्तु, मे मम नयनयोश्चक्षुषोः, क्षणमपि न दूरे विद्यते सहसैव सन्निहितत्वादिति भावः; न वा पार्श्वे तिष्ठति हठादेव दूरपश्चाद्गतत्वादित्याशयः।

अत्र कृतसन्धानमिवेति भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः। तथा चतुर्थपादे समुच्चयार्थे चकारो वाकारो वा वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानदोषः। स तु 'न दूरे किञ्चिद्वा क्षणमपि न पार्श्वे रथजवात्' इति पाठेन समाधेयः।

"तत्त्वे त्वऽञ्जाञ्जसा द्वयम्" इत्यमरः।

एतदनुरूपोक्तिर्यथा भट्टिकाव्ये—

"अथ पुरुजवयोगान्नेदयद्दूरसंस्थं दवयदतिरयेण प्राप्तमुर्वीविभागम्।"

शिखरिणी वृत्तम्—"रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति लक्षणात् ॥९॥

(य) सूत इति। व्यापाद्यं हन्तव्यम्, हरिणमिति शेषः।

(र) राजेति। नाटयति अभिनयति। हरिणं हन्तुमिति भावः।

. याহা ্‌পথে সূক্ষ্ম ছিল, রথের বেগে সহসাই তাহা বিস্তৃতি লাভ করিতেছে; যাহা বাস্তবিকই বিভক্ত, তাহা যেন সংযুক্ত হইতেছে; যাহা স্বভাবতই বক্র, তাহাও সমরেখ বলিয়া বোধ হইতেছে এবং ক্ষণকালের জন্যও কোন বস্তুই আমার নয়নের দূরে কিংবা পার্শ্বে থাকিতেছে না ॥৯॥

(য) সারথি। এই বধ্য হরিণটাকে দেখুন।

(র) রাজা। ( বাণসন্ধান অভিনয় করিলেন। )

(१) सूत! पश्यैनं व्यापाद्यमानम्। ( शरसन्धानं नाटयति। )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेपथ्ये। भो भो राजन्! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः। (ल)

सूतः। आकर्ण्य अवलोक्य च। आयुष्मन्! अस्य खलु ते बाणपातपथवर्त्तिनः कृष्णसारस्यान्तरायौ तपस्विनौ संवृत्तौ (१)। (व)

राजा। ससम्भ्रमम्। प्रगृह्यन्तामभीषवः (२)। (श)

सूतः। यथाज्ञापयत्यायुष्मान्। इति तथा करोति (३)।

ततः प्रविशति सशिष्यो वैखानसः। (ष)

---

(ल) नेपथ्य इति। सम्भ्रमे द्विरुक्तिः। अत्र हिंसानिषेधादित्याशयः।

(व) सूत इति। कृष्णसारस्य कृष्णसारहरिणस्य, अन्तरायौ निवारकत्वेन विघ्नौ संवृत्तौ जातौ।

(श) राजेति। ससम्भ्रमं सत्वरं प्रगृह्यन्ताम् आकृष्य ध्रियन्ताम्, अभीषवः अश्वरज्जवः।

---

(ল) নেপথ্যে। হে হে রাজন্! এটা আশ্রমের হরিণ; মারিবেন না মারিবেন না।

(ব) সারথি। (শুনিয়া এবং দেখিয়া) আয়ুষ্মন্! দুইজন তপস্বী আপনার বাণক্ষেপের পথবর্ত্তী এই হরিণটার বিঘ্নস্বরূপ হইয়াছেন।

(শ) রাজা। (ত্বরার সহিত) অশ্বরজ্জু আকর্ষণ কর।

সারথি। আয়ুষ্মান্ যেমন আদেশ করেন। (এই বলিয়া অশ্বরজ্জু আকর্ষণ করিল।)

---

(१) सूतः।…ते बाणपथवर्त्तिनः कृष्णसारस्यान्तरे तपस्विन उपस्थिताः।

(२) राजा। (ससम्भ्रमम्) तेन हि निगृह्यन्तां वाजिनः।

(३) सूतः। तथा। (रथं स्थापयति)।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैखा। हस्तमुद्यम्य। राजन् (१)। आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः। (स)

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्निः।
क्व बत हरिणकानां जीवितं चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥१०॥

(ष) तत इति। वैखानसः कश्चित्तपस्वी।
"वैखानसो वनवासी वाणप्रस्थश्च तापसः" इति वैजयन्ती।

(स) वैखेति। उद्यम्य उत्तोल्य।

न खल्विति। तूलराशौ अग्निरिव, मृदुनि कोमले, अस्मिन् मृगशरीरे अयं बाणः, न खलु न खलु सन्निपात्यः नैव निक्षेप्यः। तत्र हेतुमाह—क्वेति। बत खेदे। अतिलोलम् अल्पाघातेनैव विनश्वरत्वात् नितान्तचञ्चलम्, हरिणकानां क्षुद्रमृगाणाम्, जीवितं जीवनञ्च क्व कुत्र वर्त्तते; निशिताः पाषाणादौ घर्षणेन तीक्ष्णीकृता निपाता धारा येषां ते, तथा वज्रस्येव सारो बलं येषां ते, ते तव शरा बाणाश्च क्व कुत्र विद्यन्ते। वायसविनाशाय पाशुपतास्त्रप्रयोग इव क्षुद्रहरिणवधाय स्वकीयदारुणबाणप्रहारो नितरामन्याय्यः "सम्भवति लघूपाये गुरूपायस्यान्याय्यत्वम्" इति न्यायादित्याशयः।

अत्र परार्द्धार्थरूपकारणेन पूर्वार्द्धार्थरूपकार्य्यस्य समर्थनादर्थान्तरन्यासः, कोमलकठिनयोर्जीवितशरयोर्विरूपयोः सङ्घटनात् विषमालङ्कारः, वज्रसारा इति लुप्तोपमा च इत्येतेषामङ्गाङ्गिभावेन सङ्करः; स च तूलराशाविवाग्निरिति श्रौतोपमया पुनः संसृज्यते।

(য) ( তাহার পর শিষ্যের সহিত একজন তপস্বীর প্রবেশ। )

(স) তপস্বী। ( হস্ত উত্তোলন করিয়া ) রাজন্! এটা আশ্রমের হরিণ; মারিবেন না মারিবেন না।

(१) भो भो राजन्!।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदाशु कृतसन्धानं प्रतिसंहर सायकम् ।
आर्त्तत्राणाय वः शस्त्रं (१) न प्रहर्त्तुमनागसि ॥११॥

संसृष्टिसङ्करयोरपि पुनः संसृष्टिसङ्करौ सम्भवत इति प्रदर्शितमस्माभिः साहित्यदर्पण-टीकायाम् ।

"सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरः ।

हरिणकानामिति अल्पार्थे कप्रत्ययः । निपात्यते विनाश्यते छिद्यते अनेनेति निपाती धारा । करणे घञ् ।

मालिनी वृत्तम्—"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥१०॥

ननु तर्हि येन केनचित् सामान्यशस्त्रेण हरिणोऽयं मया निहन्यतामित्याह तदिति। तत् तस्मादाश्रमसृगत्वेनैव अवध्यत्वात्, कृतं सन्धानं लक्ष्योपरि पाताय स्थिरीकरणं यस्य तम्, सायकम् अमुं बाणम् ; आशु शीघ्रमेव, प्रतिसंहर निवर्त्तय । तत्र कारण-माह—आर्त्तेति । वो युष्माकं शस्त्रम्, आर्त्तस्य विपन्नस्य प्राणिनः त्राणाय रक्षणायैव प्रवर्त्तते, किन्तु अनागसि निरपराधे प्राणिनि, प्रहर्त्तुं न प्रवर्त्तते, न्यायप्रवर्त्तनार्थमेव विधात्रा युष्माकं सृष्टत्वादिति भावः ।

अत्रापि पूर्ववदेव कार्य्यकारणभावे अर्थान्तरन्यासोऽलङ्कारः । तथा त्राणायेति युट्-प्रत्ययेन प्रक्रम्य प्रहर्त्तुमिति तुमुप्रत्ययाभिधानात् भग्नप्रक्रमता दोषः । स च 'त्रातुमार्त्तं हि वः शस्त्रं न प्रहर्त्तुमनागसम्' इति पाठेन समाधेयः । एवञ्च हिशब्दस्य हेत्वर्थत्वात् निरर्थकत्वदोषोऽपि । न वा आर्त्तमिति द्वितीयामभिधाय अनागसीति सप्तम्यभिधानात् पुनर्भग्नप्रक्रमता चेति ध्येयम् ।

তূলার রাশিতে অগ্নির ন্যায়, এই কোমল মৃগশরীরে এই বাণ নিক্ষেপ করিবেন না, করিবেন না । হায়! ক্ষুদ্র হরিণগণের নিতান্ত চঞ্চল জীবনই বা কোথায় ; আর বজ্রের ন্যায় বলবান্ ও সুধার আপনার বাণগুলিই বা কোথায় ॥১০॥

(१) आर्त्तत्राणाय ते शस्त्रम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सप्रणामम्। एष प्रतिसंहृत एव। इति यथोक्तं करोति (१)। (ह)

वैखा। सहर्षम्। सदृशमेवैतत् पुरुवंशप्रदीपस्य भवतः (२)। (च)

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव।
पुत्रमेवं गुणोपेतं चक्रवर्त्तिनमाप्नुहि ॥१२॥

"आगोऽपराधो मन्तुश्च" इत्यमरः ॥११॥

(ह) राजेति। प्रतिसंहृत एव निवर्त्तित एव। यथोक्तं करोति प्रतिसंहरतीत्यर्थः।

(च) वैखेति। पुरोर्ययातिकनिष्ठपुत्रस्य वंशे प्रदीपस्तदुज्ज्वलताकारकस्तस्य। सदृशमेव योग्यमेव।

जन्मेति। पुरोस्तदाख्यस्य ययातिपुत्रस्य वंशे, यस्य तव जन्म, तस्य तव, इदम् अस्माकं निवारणमात्रेणैव संहितस्यापि बाणस्य प्रतिसंहरणम्, युक्तरूपं सर्वथैव उपयुक्तं जातम्। एतेन नितान्तं सन्तुष्यन्नाशास्ते पुत्रमिति। एवं गुणोपेतम् ईदृशन्यायविनयादिगुणशालिनम्, चक्रवर्त्तिनं सार्वभौमं पुत्रम्, आप्नुहि लभस्व।

অতএব কৃতসন্ধান বাণটাকে শীঘ্র প্রতিসংহার করুন। কারণ, বিপন্নের পরিত্রাণের জন্যই আপনাদের অস্ত্র; কিন্তু নিরপরাধের উপরে প্রহার করিবার জন্য নহে ॥১১॥

(হ) রাজা। (প্রণামের সহিত) এই প্রতিসংহৃতই হইল। (এই বলিয়া প্রতিসংহার করিলেন।)

(ক্ষ) তপস্বী। (আনন্দের সহিত) আপনি পুরুবংশের প্রদীপ; আপনার পক্ষে ইহা উপযুক্তই হইয়াছে।

(१) राजा। एष प्रतिसंहृतः। (यथोक्तं करोति।)

(२) वैखा। (सहर्षम्) उचितमेवैतत् पुरुवंशप्रभवस्य नरेन्द्रदीपस्य भवतः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतरोऽपि । हस्तमुद्यम्य । सर्वथा चक्रवर्त्तिनं पुत्रमाप्नुहि (१) । (क)
राजा । सप्रणामम् । प्रतिगृहीतं ब्राह्मणवचः (२) । (ख)
वैखा । राजन् ! समिदाहरणाय प्रस्थिता वयम् । एष चास्मद्गुरोः कण्वस्य कुलपतेः साधिदैवत एव शकुन्तलया अनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्य्यातिपातस्तदत्र प्रविश्य प्रतिगृह्यतामतिथिसत्कारः (३) । अपि च, (ग)

चक्रे भूमण्डले वर्त्तते अधीश्वरत्वेनावतिष्ठत इति चक्रवर्त्ती । "अग्निष्टोमयाजी पुत्रस्ते भविता" इत्यादिवत् "धातुसम्बन्धे प्रत्ययाः" इत्यनेन साधुत्वम् ।

"चक्रवर्त्ती सार्वभौमः" इत्यमरः । एतदनुरूपवाक्यं यथा रघुवंशे—"भवन्तमीड्यं भवतः पितेव" ॥१२॥

(क) इतरोऽपीति । शिष्योऽपीत्यर्थः । उद्यम्य उत्तोल्य । सर्वथा अवश्यम् ।

(ख) राजेति । प्रतिगृहीतं सत्यतया स्वीकृतम्, ब्राह्मणोक्तत्वादेवेति भावः ।

(ग) वैखेति । समिदाहरणाय यज्ञीयकाष्ठानयनाय । कुलपतेः शिष्यसमूहनियन्तुः अन्नदानादिपूर्वकबहुतरमुन्यध्यापकस्य, कण्वस्य तदाख्यस्य महर्षेः, आश्रम इति परेणान्वयः । शकुन्तलयैव साधिदैवतः अधिदैवतेन अधिष्ठात्रजनेन सहेति सः

পুরুবংশে যাঁহার জন্ম, সেই আপনার পক্ষে ইহা উপযুক্তই বটে। অতএব এইরূপ গুণসম্পন্ন সার্বভৌম পুত্র লাভ করুন ॥১২॥

(ক) অপর তপস্বীও। ( হস্ত উত্তোলন করিয়া ) অবশ্যই চক্রবর্ত্তী পুত্র লাভ করুন।

(খ) রাজা। ( প্রণামপূর্ব্বক ) ব্রাহ্মণের বাক্য ( সত্য বলিয়া ) স্বীকার করিলাম।

(१) क्वचित् अयं पाठो नास्ति । (२) राजा । ( सप्रणामम् ) प्रतिगृहीतम् ।
(३) वैखानसः ।...एष खलु काश्यपस्य कुलपतेरनुमालिनीतीरम्...।...पादः प्रविश्य ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्म्म्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति (१) ॥१३॥

शकुन्तलया अधिष्ठित इत्यर्थः, मालिन्यास्तदाख्याया नद्यास्तीरे इत्यनुमालिनीतीरम्। चेद्-यदि अन्यस्य कार्य्यस्य अतिपातः अतिक्रमः क्षतिरिति यावत्, न भवेत्, तत् तदा।

शकुन्तलयेति "सर्वे ते तेन पुत्रेण पृथिवी मनुरब्रवीत्" इत्यादिवत् अभेदे तृतीया। अनुमालिनीतीरमिति विभक्त्यर्थे अव्ययीभावः।

कुलपतिलक्षणं यथा—"मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्।
अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः॥"

अत्र उल्लेखो नाम नाट्यालङ्कारः "कार्य्यग्रहणमुल्लेखः" इति दर्पणलक्षणात्।

धर्म्म्या इति। प्रतिहता भवद्बाहुबलप्रभावेणैव विनाशिताः विघ्ना यासां ताः, धर्म्म्याः धर्म्मादनपेताः तपोधनानां तपस्विनाम्, क्रिया यागादिकर्म्माणि, समवलोक्य, मौर्व्या धनुर्गुणस्य यः किणः घर्षणेन शुष्कव्रणः स एव अङ्कश्चिह्नं यत्र स तादृशः मे मम दुष्मन्तस्येत्यर्थः, भुजो बाहुः, कियत् किंपरिमाणम्, रक्षति इति ज्ञास्यसि। धर्म्म्यक्रियाणां निर्विघ्नतादर्शनेन स्वकीयभुजः सर्वमेव भूमण्डलं सर्वथैव रक्षतीति ज्ञास्यतीति भावः।

अत्र धर्म्म्यक्रियाणां निर्विघ्नतादर्शनेन स्वकीयबाहुद्वारा सर्वस्य सर्वथा रक्षाया अनुमानात् ज्ञप्तिर्नाम नाट्यलक्षणम्। यथा दर्पणे—
"ज्ञप्तिः केनचिदंशेन किञ्चिदयत्रानुमीयते।"

आर्य्या जातिः॥१३॥

(গ) তপস্বী। রাজন্! আমরা সমিধ আহরণ করিবার জন্য চলিয়াছি। মালিনীনদীর তীরে আমাদের গুরু কুলপতি কণ্বের এই আশ্রম দেখা যাইতেছে; শকুন্তলাই ইহার অধিষ্ঠাত্রী। যদি আপনার অন্য কার্য্যের অতিক্রম না হয়; তবে আপনি এই আশ্রমে প্রবেশ করিয়া, অতিথিসৎকার গ্রহণ করুন। আরও—

(१) रक्ष्यास्तपोधनानाम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। अपि सन्निहितोऽत्र कुलपतिः ?। (घ)

वैखा। इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराया-दिश्य (१) दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः। (ङ)

राजा। भवतु, तामेव द्रक्ष्यामि। सा खलु विदित-भक्तिमां महर्षये निवेदयिष्यति (२)। (च)

(घ) राजेति। अत्र आश्रमे, कुलपतिः पूर्वोक्तलक्षणः कण्वः, अपि किं सन्निहित आसन्नः स्थितः किम्।

(ङ) वैखेति। अस्याः शकुन्तलायाः प्रतिकूलम् अभिमतवराद्यप्राप्तेः विरोधि, दैवं पूर्वजन्मीयदुरितम्, शमयितुं विनाशयितुम्। यथा उद्वाहतत्त्वधृतम्—

"तत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम्।"

(च) राजेति। भवतु अस्त्वेव मम मृगयासमाप्तिरिति शेषः। तां शकुन्तलामेव। विदिता अवगता भक्तिः महर्षिं कण्वं प्रति पूज्यतया ममानुरागो यया सा, महर्षये कण्वाय, मां तादृशभक्तिमन्तमित्यर्थः, निवेदयिष्यति ज्ञापयिष्यति। महर्षिं प्रति मम भक्तिं प्रत्यक्षीकृत्य शकुन्तला तां भक्तिं महर्षये कथयिष्यति, ततश्च स मे कल्याणं विधास्यतीति भावः।

---

তপস্বীদিগের নির্বিঘ্ন-সম্পন্ন ধর্ম্মকার্য্যগুলি দেখিয়া, "ধনুর গুণ আকর্ষণের চিহ্নে চিহ্নিত আমার বাহু, কি পরিমাণ রক্ষা করিতেছে" ইহা জানিতে পারিবেন ॥১৩॥

(ঘ) রাজা। কুলপতি আশ্রমে আছেন কি ?।

(ঙ) তপস্বী। সম্প্রতিই, অতিথিসৎকার করিবার জন্য ; কন্যা শকুন্তলাকে আদেশ করিয়া, উহার প্রতিকূল দৈবের উপশম করিবার নিমিত্ত সোমতীর্থে গিয়াছেন।

---

(१) सन्दिश्य। (२) भवतु। तामेव पश्यामि। सा खलु विदितभक्तिं मां महर्षेः कथयिष्यति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैखा। साधयामस्तावत्। इति (१) सशिष्यौ निष्क्रान्तः। (छ)

राजा। सूत! नोदय (२) अश्वान्, पुण्याश्रमदर्शनेनात्मानं पुनीमहे। (ज)

सूतः। यदाज्ञापयत्यायुष्मान्। इति भूयो रथवेगं रूपयति (३)। (झ)

राजा। समन्तादवलोक्य। सूत! अकथितोऽपि ज्ञायत एवायमाभोगस्तपोवनस्य (४)। (ञ)

---

विदितभक्तिरिति भक्तिशब्दो भावे क्तिप्रत्ययान्तः। तेन पूरण्यादित्वान्न पुंवद्भावनिषेध इति तत्रैव द्रष्टव्यम्।

(छ) वैखेति। तावत् वाक्यालङ्कारे, साधयामो गच्छामः। यथा दर्पणे—

"प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते।"

(ज) राजेति। नोदय चालय। पुनीमहे पवित्रं कुर्म्महे।

(झ) सूत इति। भूयः पुनरपि। रूपयति साधयति।

---

(চ) রাজা। হউক। তাঁহার সহিতই দেখা করি; তিনি (শকুন্তলা) আমার ভক্তি জানিয়া, মহর্ষিকে জানাইবেন।

(ছ) তপস্বী। তবে আমরা যাই। (এই বলিয়া শিষ্যের সহিত চলিয়া গেলেন।)

(জ) রাজা। সারথি! ঘোড়াগুলিকে চালাও; পুণ্য আশ্রম দেখিয়া আত্মাকে পবিত্র করি।

(ঝ) সারথি। আয়ুষ্মান্ যাহা আদেশ করেন। (এই বলিয়া রথের বেগ অভিনয় করিতে লাগিল।)

(ঞ) রাজা। (সকল দিকে দৃষ্টিপাত করিয়া) সারথি! কেহ না বলিয়া দিলেও, ইহাই যে তপোবনের সীমা, তাহা বুঝিতেছি।

---

(१) क्वचित् इतिशब्दो नास्ति। (२) चोदय।

(३) भूयो रथवेगं निरूपयति। (४) यथायमाश्रमस्तपोवनस्य।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूतः। कथमिव ?। (ट)

राजा। किं न पश्यति भवान् ?। इह हि—

नीवाराः शुक-कोटरार्भक-मुख-भ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः (१) सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः
तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥१४॥

(ञ) राजेति। समन्तात् सर्वासु दिक्षु। अकथितोऽपि केनचिदपरिचायितोऽपि तपोवनस्य अयमेव आभोगः पूर्णता सीमेत्यर्थः ज्ञायते अनुभीयते।

"पूर्णत्वयत्नावाभोगः" इति त्रिकाण्डशेषः।

(ट) सूत इति। कथमिव कथम्भूतं तवेदं ज्ञानमित्यर्थः।

नीवारा इति। तरुणाम् अधो निम्नदेशे, शुकानां तदाख्यपक्षिणां ये कोटरार्भका तरुगावगतरन्ध्रस्थशावकाः तेषां मुखेभ्यो भ्रष्टाः पतिताः नीवारास्तृणधान्यानि दृश्यन्त इति शेषः। तपस्विभिरेव अनायासलभ्यतया नीवारव्यवहारात् शुकेभ्य नीत्वा अर्भकेभ्यो दानात् अन्यत्र तु तद्बाहुल्यासम्भवात् तपोवनसीमेवेयमिति भावः। क्वचित् क्वचिदपि इङ्गुदीफलानि भिन्दन्ति तैलार्थं चूर्णयन्तीति ते इङ्गुदीफलभिदः, अतएव प्रस्निग्धाः प्रकर्षेण तैलाक्ता एव, उपलाः पाषाणाः, सूच्यन्ते तपोवनसीमासूचकतया दृश्यन्त इत्यर्थः। अन्यत्र ईदृशपाषाणदर्शनासम्भवात् तपोवनारम्भ एवायमित्यभिप्रायः। विश्वासस्य 'अस्मान् कोऽपि न हिंस्यात्' इति विस्रम्भस्य उपगमात् आजन्मत एव लाभात् अभिन्ना श्रेणीभेदरहिता गतिर्येषां ते तादृशा मृगाः, शब्दं रथशब्दम्, सहन्ते निःशङ्कमाकर्णयन्ति। अन्यत्र मृगाणामीदृशी निर्भयता न स्यादिति तपोवनाभोग एवायमित्याशयः। तथा तोयाधारपथा जलाशयमार्गाश्च, वल्कलशिखानां परिहितवल्कलाग्राणां

(ট) সারথি। কিরূপে (বুঝিলেন)?।

রাজা। তুমি কি—দেখিতেছ না? এই স্থানে—

(१) इङ्गुदीफलभिदः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि च,

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूलाः
भिन्नो रागः किशलयरुचामाज्यधूमोद्गमेन।
एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति (१) ॥१५॥

निष्यन्दरेखाभिर्विगलज्जलचिह्नैः चिह्निताश्चिह्निता विद्यन्त इति शेषः। स्थूलरेखादर्शनात् वल्कलशिखानिष्यन्दजनितैवेयं रेखा इति, तथा मुहुः स्नायिनां तपस्विनामेव इमे पन्थानः, तेन च तपोवनस्यैवायमाभोग इति भावः।

अत्र तपोवनाभोगानुमानकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयः, तन्मूलत-विच्छित्तिविशेषश्चानुमानालङ्कारः।

"तृणधान्यानि नीवाराः" इत्यमरः।

शार्दूलविक्रीड़ितं वृत्तम्—"सूर्य्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीड़ितम्" इति लक्षणात् ॥१४॥

कुल्येति। पवनचपलैः वायुना कम्पितैः, कुल्यानां कृत्रिमक्षुद्रनदीनाम्, अम्भोभि-र्जलैः, शाखिनो वृक्षाः, धौतानि मूलानि येषां ते तादृशा भवन्ति। तपोवन एवेदृश-कृत्रिमसरिन्निर्म्माणादन्यत्र चासम्भवात् तपोवनाभोग एवायमिति भावः। आज्यस्य यज्ञार्थं आहुतघृतस्य धूमोद्गमेन, किशलयरुचां तरुपल्लवद्युतीनां रागो लौहित्यम्, भिन्नो वैपरीत्यं प्राप्तः। तपोवनादन्यत्र ईदृशाज्यधूमोद्गमासम्भवात् तदाभोग एवाय-

शुकपक्षीর কোটরস্থ শাবকদিগের মুখ হইতে নিপতিত উড়ীধান সকল বৃক্ষের নীচে রহিয়াছে, কোন স্থানে ইঙ্গুদীফলভেদক স্নিগ্ধ পাষাণ সকল দেখা যাইতেছে, বিশ্বাস লাভ করায় শ্রেণীবদ্ধ হরিণগণ রথের শব্দ শুনিতেছে এবং জলাশয়ের পথগুলি, বল্কলের অগ্র হইতে বিগলিত জলরেখায় অঙ্কিত রহিয়াছে ॥১৪॥

(१) विद्यासागरीयाय' श्लोकः परिहृतः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूतः । सर्वमुपपन्नम् । (ठ)

राजा । स्तोकमन्तरं गत्वा । आश्रमोपरोधो माभूत्, तदिहै

रथं स्थापय, यावदवतरामि (१) । (ड)

मित्याशयः । एते दृश्यमानाः हरिणशिशवश्च, नष्टाशङ्का आजन्मत एव स्वहिंस

अदर्शनात् निर्भयाः सन्तः, छिन्ना छित्त्वा एभ्य एव खादनाय दत्ता दर्भाणां कुशा

मङ्कुरा यस्यां तस्याम्, उपवनभुवि उद्यानचत्वरे, अर्वाक् अस्माकं समीप एव, मन्दम

अल्पमल्पं चरन्ति भ्रमन्ति । तपोवनं विना अन्यत्र ईदृशाहिंसाया अदर्श

तपोवनाभोग एवायमित्यभिप्रायः ।

अत्रापि पूर्ववदेवालङ्कारः ।

मन्दाक्रान्ता वृत्तम्—"मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ गौ ययुग्मम्" इति लक्षणात् ।

(ठ) सूत इति । सर्वं भवदुक्तम्, उपपन्नं युक्तिसङ्गतम्, यथापि तथैव दृ

दिति भावः ।

(ड) राजेति । स्तोकमन्तरं गत्वा रथारूढ़ एव किञ्चिदाश्रमाभ्यन्तरं ग

तथा गमनेनैव रथचक्रघर्षणेन दर्भाङ्कुरादिक्षतिदर्शनादाह—आश्रमोपरोध

आश्रमस्य उपरोधः रथचक्रघोटकखुराघातेन क्षतिः, माभूत् न भवतु । तत् त

यावच्छब्दो वाक्यालङ्कारे ।

आরও, বায়ুসঞ্চালিত কৃত্রিম ক্ষুদ্র নদীর জলে বৃক্ষসকলের

ধৌত হইতেছে, ঘৃতের ধূম উঠিতে থাকায় পল্লবকান্তির বর্ণ

বিপরীত হইয়া গিয়াছে এবং এই সকল হরিণশাবক, আমাদের নি

নির্ভয়ে ছিন্নকুশাঙ্কুর উদ্যানভূমিতে অল্প অল্প বিচরণ করিতেছে ॥১৫॥

(ঠ) সারথি। সমস্ত ঠিক্ বটে।

(ড) রাজা। (একটু ভিতরে যাইয়া) আশ্রমের ক্ষতি ন

সেই জন্য এইখানেই রথ রাখ; আমি নামি।

(१) तपोवननिवासिनामुपरोधो माभूत् एतावत्येव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूतः। धृताः प्रग्रहाः, अवतरत्वायुष्मान्। (ढ)

राजा। अवतीर्य्य आत्मानमवलोक्य च (१)। सूत! विनीतवेशेन प्रवेष्टव्यानि तपोवनानि, तदिमानि तावद्गृह्यन्तामाभरणानि धनुश्च। इति सूतस्यार्पयति। (ण)

सूतः। गृह्णाति। (त)

राजा। यावदाश्रमवासिनः प्रत्यवेक्ष्य निवर्त्तिष्ये, तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः (२)। (थ)

(ढ) सूत इति। प्रग्रहा अश्वरश्मयः, धृता रथस्थापनाय आकृष्टाः।

(ण) राजेति। आत्मानं देहम्। देहावलोकनं स्ववेशस्य भावपरीक्षार्थम्। विनीतवेशेन अनुद्धतपरिच्छदेन तपोवनानि प्रवेष्टव्यानि। तथा च महामाननीयानां मुनीनामन्तिके विनयसूचनमेव सर्वथा सङ्गतमिति भावः। तत् तस्मात्। आभरणानि वीरभावव्यञ्जकाः अलङ्काराः। गृह्यन्तां रक्ष्यन्ताम्। तथा च वीरत्वव्यञ्जकानामाभरणधनुषामभावे विनीतवेश एव स्यादित्याशयः।

अत्र नीतिर्नाम नाट्यालङ्कारः—"नीतिः शास्त्रेण वर्त्तनम्" इति दर्पणलक्षणात्। इदमेव तत्रोदाहृतम्। अत्रार्पणस्य स्थापनमात्ररूपतया स्वत्वध्वंसाभावेन सम्प्रदानत्वासम्भवात् सूतस्येति सम्बन्ध एव षष्ठी, रजकस्य वस्त्रं ददातीतिवत्।

(ঢ) সারথি। অশ্বরজ্জু ধরিয়াছি; আপনি নামুন।

(ণ) রাজা। (নামিয়া দেহের প্রতি দৃষ্টিপাত করিয়া) সারথি! তপোবনে বিনীতবেশে প্রবেশ করিতে হয়, অতএব এই সকল অলঙ্কার ও ধনু গ্রহণ কর। (এই বলিয়া সারথির নিকট সমর্পণ করিলেন।)

(१) क्वचित् आत्मानमित्यादि नास्ति।

(२) राजा। अवतीर्य्य। सूत! विनीतवेशेन प्रवेष्टव्यानि तपोवनानि नाम। इदं तावद्गृह्यताम्। सूतायाभरणानि धनुश्चोपधीयार्पयति। सूत! यावदाश्रमवासिनः प्रत्यवेक्ष्य अहमुपावर्त्ते, तावत्...।



CC-0. Mumukshu Bhawan Varaṇasi Collection. Digitized by eGangotri

सूतः । यथाज्ञापयत्यायुष्मान् । इति निष्क्रान्तः (१) ।

राजा । परिक्रम्यावलोक्य च । इदमाश्रमपदं तावत् प्रविशामि। प्रविश्य प्रवेष्टकेन निमित्तं सूचयित्वा । अये ! (२) । (ढ)

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥१६॥

(त) सूत इति । गृह्णाति राजदत्ताभरणधनं प्रीति शेषः ।

(थ) राजेति । प्रत्यवेक्ष्य अभावाभियोगश्रवणादिना पर्य्यवेक्ष्य । आर्द्रं गल श्रमजनितग्रीष्मनिवारणाय जलविन्दुसिक्तं पृष्ठं येषां ते । वाजिनो घोटकाः ।

(द) राजेति । परिक्रम्य आश्रमं प्रति कियन्तं पदक्षेपं कृत्वा । आश्रम ए पदं स्थानम् । प्रवेष्टकेन दक्षिणबाहुना, निमित्तं स्पन्दनरूपं शुभलक्षणम्, सूचयि अभिनीय । अयो इति शुभलक्षणत्वादादरे ।

"पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ।" "भुजबाहू प्रवेष्टो दोः" "निमि हेतुलक्षणोः" इति च अमरः । "अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च" "सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि ।" इति च विश्वः ।

प्रवेष्टक इत्यनुकम्पायां कप्रत्ययः ।

(ত) সারথি গ্রহণ করিল।

(থ) রাজা। আমি যাবৎ আশ্রমবাসীদিগকে পর্য্যবেক্ষণ করি ফিরিয়া আসি ; তুমি তাবৎ ঘোড়াগুলির পিঠ ভিজাইয়া দাও।

সারথি। আপনি যাহা আদেশ করেন। (এই বলিয়া চলিয়া গেল।

(দ) রাজা। ( পাদক্ষেপপূর্ব্বক দৃষ্টিপাত করিয়া ) এই আশ্র প্রবেশ করি। ( প্রবেশপূর্ব্বক দক্ষিণবাহুদ্বারা শুভলক্ষণ সূচনা করিয়া ওহে !

(१) सूतः । तथा निष्क्रान्तः ।

(२)…इदमाश्रमद्वारं यावत् प्रविशामि । प्रविश्य निमित्तं सूचयन् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेपथ्ये। इदो इदो पिअसहीओ (१)। (ध)

(ध) इत इतः प्रियसख्यौ।

शान्तमिति। इदम् आश्रमपदं तपोवनरूपं स्थानम्, शान्तं शान्तिरसस्यैव आश्रयभूतम्; तपस्विभिरेवाश्रितत्वादिति भावः। अव्ययानां नानार्थत्वात् चकारः किन्त्वर्थे। तथा च किन्तु बाहुर्दक्षिणो भुजः स्फुरति स्पन्दते स्पन्दित्वा उत्तमस्त्रीलाभरूपं फलं सूचयतीत्यर्थः। इह आश्रमे, अस्य दक्षिणभुजस्पन्दनस्य, फलम् उत्तमस्त्रीलाभरूपः सूचितविषयः, कुतः कस्मात् सम्भवति? कुतोऽपि नेत्यर्थः; शान्ततया निवृत्त्यास्पदे स्थाने शृङ्गाररूपोद्दामप्रवृत्तेः सर्वथैवासम्भवादित्याशयः। उक्तामनुपपत्तिं स्वयमेव समाधत्ते अथवेति। अथवेति समर्थने। अवश्यं भविष्यन्तीति भवितव्यानि तेषामवश्यम्भाविनां वस्तूनाम्, द्वाराणि भवनकारणानि, सर्वत्रैव भवन्ति ईश्वरेच्छावशात् जायन्ते। तथा च कुसुमे कीटस्येव शान्तेऽप्याश्रमे ईश्वरेच्छयैव शृङ्गारस्यापि सम्भवादित्यभिप्रायः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। तथा दक्षिणो बाहुरिति बाहुविशेषे वक्तव्ये बाहुरिति सामान्याभिधानात् विशेषे अविशेषाख्यदोषः; स च 'शान्त आश्रमो बाहुः, स्फुरति च दक्षिणः कुतः फलमिहास्य' इति पाठेन समाधेयः। "विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" इत्युक्तेः 'अस्य' इति द्वितीयचरणान्तिमाक्षरस्य गुरुत्वमङ्गीकार्य्यम्, समाधानीयपाठे तु लघुत्वमेवेति बोध्यम्।

"उपाये निर्गमे द्वारम्" इति त्रिकाण्डशेषः।

भवितव्यानामिति "कृत्यल्युटोऽन्यत्रापि" इति कर्त्तरि तव्यप्रत्ययः।

आर्य्या जातिः ॥१६॥

(ध) नेपथ्य इति। प्रियसख्यौ अनसूयाप्रियंवदे, इत इतः अस्यामस्यां दिशि,

এই আশ্রম, শান্তিরসের স্থান; অথ চ দক্ষিণ বাহু স্পন্দিত হইতেছে; সুতরাং এখানে ইহার ফল হইবে কোথা হইতে?। অথবা, যাহা অবশ্যই হইবে; তাহার উপায় সর্ব্বত্রই হইয়া থাকে ॥১৬॥

(१) सहीओ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। कर्णं दत्त्वा। अये! दक्षिणेन वृक्षवाटिकामाला इव श्रूयते, यावदत्र गच्छामि। परिक्रम्यावलोक्य च। अये एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्त्तन्ते। निरूप्य। अहो! मधुरमासां दर्शनम्। (न)

आगच्छतमिति शेषः। नेपथ्यात् शकुन्तलाया उक्तिरियम्। "शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्" इति साहित्यदर्पणात् शकुन्तलादीनां शौरसेनीभाषियम्।

(न) राजेति। कर्णं दत्त्वा तदालापश्रवणाय कर्णं सम्प्रेष्य। अये इत्यात्म-सम्बोधनम्। वृक्षवाटिकां दक्षिणेन उपवनस्य अदूरे दक्षिणस्यां दिशि, आलाप: कथोपकथनं श्रूयत इव। यावच्छब्दोऽवधारणे। अत्रैव वृक्षवाटिकां दक्षिणेन। अये इति विस्मये। स्वप्रमाणानुरूपैः निजनिजदेहपरिमाणयोग्यैः, सेचनघटैः जलदान-कुम्भैः, बालपादपेभ्यः क्षुद्रवृक्षेभ्यः पयो जलम्, दातुम्, इत एव अस्यामेव दिशि अभि-वर्त्तन्ते आगच्छन्ति। निरूप्य विशेषेणावलोक्य। अहो इत्याश्चर्य्ये। आसां तपस्वि-कन्यकानाम्, दर्शनं मधुरं प्रीतिकरम्।

"अमात्यगणिकागेहोपवने वृक्षवाटिका" इति "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इति चामरः। "मधुरौ तु प्रियस्वादू" इत्यनेकार्थः।

दक्षिणेनेति "अदूरे एनोऽपञ्चम्याः" इत्येनप्रत्ययः। अव्ययमिदम्, वृक्षवाटिकामिति "द्वितीयैनेन" इति द्वितीया।

(ধ) নেপথ্যে। প্রিয়সখীরা এই দিকে এই দিকে।

(ন) রাজা। (কাণ দিয়া) ওহে! উদ্যানের অদূর দক্ষিণ দিকে যেন আলাপ শুনিতেছি; তা' এই খানেই যাই। (কতিপয়পদক্ষেপ-পূর্ব্বক দর্শন করিয়া) ওহে! এই তপস্বিকন্যারা, আপনাদের অনুরূপ সেচনকলসদ্বারা ক্ষুদ্র বৃক্ষগুলিকে জল দিবার নিমিত্ত, এই দিকে আসিতেছে। (বিশেষভাবে দেখিয়া) কি আশ্চর্য্য! ইহাদের দর্শনটী বড়ই প্রীতিকর।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥१७॥
यावदेताश्छायामिमामाश्रित्य प्रतिपालयामि। इति विलोकयन् स्थितः (१)। (प)

शुद्धान्तेति। यदि, आश्रमे सर्वथासौन्दर्य्यवर्द्धकचेष्टारहिते तपोवने वसतीति तस्य, जनस्य शकुन्तलारूपस्य लोकस्य, इदं वपुः शरीरम्, शुद्धाः कामप्रवृत्त्यभावेन निर्म्मला रक्षकजना अन्ते समीपे यस्य तस्मिन् शुद्धान्ते राजान्तःपुरे, दुर्लभम् असम्भवात् दुष्प्रापम्, भवेदिति शेषः। तदा वनलताभिः अयत्नेनैव वृद्धिं प्राप्ताभिरिति भावः, गुणैः कोमलता-मनोहरताप्रभृतिभिः, उद्यानलताः बहुयत्नेन वर्द्धिता इत्याशयः, दूरीकृताः खलु पराजिता एव। तथा च अयत्नलालितया शकुन्तलया रूपमाधुर्य्येण प्रयत्नलालितानां राजान्तःपुरवासिनीनां रमणीनां हीनीकरणम्, अयत्नवृद्धाभिर्वनलताभिः प्रयत्नवर्द्धितानामुद्यानलतानां हीनीकरणमिव अतीवविस्मयकरमिति भावः।

अतएवात्र असम्भवद्वस्तुसम्बन्धरूपा निदर्शनालङ्कारः। तेन च शकुन्तलायाः सौन्दर्य्यमद्वितीयमिति ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः। यदीत्यभिधानानन्तरं तदा इत्यस्यानभिधानेऽपि सामर्थ्यादेवावगतेर्न न्यूनपदत्वदोषः "क्वचिन्न दोषो न गुणः" इति दर्पणात्।

तथात्र शकुन्तलां प्रति दुष्मन्तस्य अनुरागरूपकाव्यार्थस्य समुत्पत्तेरुपक्षेपो नाम मुखसन्धेरङ्गम्—"काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः" इति दर्पणलक्षणात्।

"स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्। शुद्धान्तश्चावरोधश्च" इत्यमरः।

आर्य्या जातिः ॥१७॥

(प) यावदिति। इमां छायां वृक्षाणां छायामाश्रित्य एता आगच्छन्तीस्तपस्वि-

তপোবনবাসী লোকের এই আকৃতি যদি রাজাদের অন্তঃপুরে দুর্লভ হয়, তবে বনলতা নিজগুণে উদ্যানলতাকে পরাজিত করিল ॥১৭॥

(१) यावदिमां छायामाश्रित्य प्रतिपालयामि। विलोकयन् स्थितः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला। (फ)

एका। हला सउन्तले! तत्तो वि तादकस्सस्स अस्सम-रुक्खआ पिअदरा त्ति तक्केमि; जेण णोमालिआकुसुमपरिपेल-वावि तुमं एदाणं आलवालपरिउरणे णिउत्ता। (ब)

(ब) हला शकुन्तले! त्वत्तोऽपि तातकाश्यपस्य आश्रमवृक्षाः प्रियतरा इति तर्कयामि; येन नवमालिकाकुसुमपरिपेलवापि त्वम् एतेषामालवालपरिपूरणे नियुक्ता।

---

कन्यकाः प्रतिपालयामि प्रतीचे। को नाम स्वयमुपस्थितं सुहृत्त्वं न पश्यतीति भा-यावच्छन्दो वाक्यालङ्कारे।

(फ) तत इति। यथोक्तः सेचनघटधारणमेव व्यापारो यस्याः सा।

(ब) एकेति। हलेति सखीसम्बोधने। त्वत्तोऽपि भवत्या अपि। प्रिय-अधिकप्रियाः, इति तर्कयामि आलोचयामि; येन हेतुना, नवमालिकाकुसुमवत् परिपेल-सर्वतः कोमलापि। एतेषाम् आश्रमवृक्षाणाम्, आलवालानां मूलस्थखातानां परि-जलैः पूर्णीकरणे। उपकारकादुपकार्यं प्रियतरमेवेति भावः।

"हण्डे हञ्जे हलाह्वानं नीचं चेटीं सखीं प्रति।" "स्यादालवालमावालमा-इति चामरः। "पेलवं कोमलम्" इति त्रिकाण्डशेषः।

---

(প) এই ছায়া অবলম্বন করিয়া ইহাদের প্রতীক্ষা করি। ( বলিয়া চাহিয়া রহিলেন। )

(ফ) ( তদনন্তর দুইটী সখীর সহিত উক্তরূপে (জলকুম্ভধারণ করি শকুন্তলা প্রবেশ করিল। )

(ব) একটী সখী। শকুন্তলা! আমি মনে করি—পিতা ক নিকট তোমা অপেক্ষা আশ্রমের গাছগুলি বিশেষপ্রিয়; যেহেতু মালিকাফুলের ন্যায় অতিশয় কোমল হইলেও, তোমাকে এই পরিখা পূরণ করিতে নিযুক্ত করিয়াছেন।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। हला अणसूए! ण केवलं तादस्स णिओओ, मम वि एदेसु सहोअरसिणेहो। इति वृक्षसेचनं नाटयति (१)। (भ)

द्वितीया। सहि! सउन्तले! उदअं लम्भिदा एदे गिह्मआलकुसुमदाइणो अस्समरुक्खआ। दाणिं अदिक्कन्तकुसुमसमए वि रुक्खके सिञ्चह्म; तेण अणहिसन्धिगुरुओ धम्मो भविस्सदि (२)। (म)

---

(भ) हला अनसूये! न केवलं तातस्य नियोगः, ममापि एतेषु सहोदरस्नेहः।

(म) सखि! शकुन्तले! उदकं लम्भिता एते ग्रीष्मकालकुसुमदायिनः आश्रमवृक्षाः। इदानीम् अतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामः; तेन अनभिसन्धिगुरुको धर्म्मो भविष्यति।

---

(भ) शकु इति। एतेषु आश्रमवृक्षेषु सहोदरस्नेहः एकाश्रमजातत्वात् सहोदरेष्विव प्रणयः। तेन तातनियोगं विनाप्यहं स्वयमेव स्नेहवशादेतान् सिञ्चामीति भावः। नाटयति अभिनयति।

(म) द्वितीयेति। उदकं सिक्तजलम्, लम्भिताः प्रापिताः। अतिक्रान्तः कुसुम समयः पुष्पोत्पादनकालो यैस्तान्। अनभिसन्धिना उपकारप्रत्याशाभावेन गुरुको महान्। वर्त्तमानसमय एव पुष्पदायिभ्यो जलदानं प्रचुरपुष्पलाभाशयैव, अतिक्रान्तकुसुमसमयेभ्यो जलदानन्तु तत्प्रत्याशां विनैवेति महत्त्वमेव तद्धर्म्मे इति भावः। यदाह नारदः—

---

(ভ) শকুন্তলা। ওলো অনসূয়া! কেবল পিতার নিয়োগ নহে; আমারও এগুলির প্রতি সহোদরের স্নেহ রহিয়াছে। (এই বলিয়া গাছে জল দেওয়া অভিনয় করিতে লাগিল।)

---

(१) शकुन्तला। ण केवलं तादणिओओ एव्व अत्थि मे सोदरसिणेहो वि एदेसु। नाव्येन सिञ्चति। (२) द्वितीयेत्यादिपाठः पुस्तकान्तरे नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। हला पिअम्बदे! रमणिज्जं मन्तेसि। इति भूयः वृक्षसेचनं नाटयति (१)। (य)

राजा। निर्वर्ण्य आत्मगतम्। कथमियं सा काण्वदुहिता शकुन्तला। सविस्मयम्। अहो! असाधुदर्शी खलु भगवान् काण्वः; य इमामाश्रमधर्म्मे नियुङ्क्ते (२)। (र)

(य) हला प्रियंवदे! रमणीयं मन्त्रयसि।

"पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम्।
केवलं धर्म्मबुद्ध्या तु धर्म्मदानं तदुच्यते॥"

(य) शकु इति। रमणीयं युक्तियुक्तत्वात् सुन्दरं यथा स्यात्तथा, मन्त्रयसि ब्रवीषि। भूयः पुनरपि।

(र) राजेति। निर्वर्ण्य परमकोमलामतीवरूपलावण्यवतीञ्च शकुन्तलां विलोक्य आत्मनि स्वस्मिन्नेव गतं स्थितम् अन्यैरश्राव्यमित्यर्थः। कविस्तु राज्ञस्तथाविधं सम्भवमनोभवभावं सम्भाव्य इदं रचितवानिति बोध्यम्। एवमन्यत्रापि। कथं शब्दः सम्भावनायाम्। सा पूर्वं समिदाहरणाय प्रस्थितेर्वैखानसैर्निवेदिता। अहो इति विषादे। असाधुदर्शी असुष्ठुविवेचनकारी। आश्रमधर्म्मे तपोवनोचितव्यवहारे अतिथिसेवातरुसेचनादिकष्टकरकार्य्ये इत्यर्थः। तथा च ईदृशीं परमकोमलसुन्दरीं

(য) দ্বিতীয়া সখী। সখি! শকুন্তলা! গ্রীষ্মকালে পুষ্পদাতা এই সকল আশ্রমবৃক্ষকে জল দেওয়া হইয়াছে। এখন যাহাদের পুষ্পদান করিবার সময় অতীত হইয়াছে, সেই সকল বৃক্ষকে জল দান করিলে তাহাতে উপকার প্রত্যাশা না থাকায় গুরুতর ধর্ম্ম হইবে।

(য) শকুন্তলা। ওলো প্রিয়ংবদা! তুই ভাল বলিয়াছিস্। (এই বলিয়া পুনরায় গাছে জল দেওয়া অভিনয় করিতে লাগিল।)

(१) शकु इत्यादिपाठोऽपि क्वचिन्नास्ति।

(२) राजा। कथमियं सा कण्वदुहिता असाधुदर्शी खलु तत्रभवान् काश्यपः"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदं किलाव्याजमनोहरं वपुः
तपःक्षमं (१) साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥१८॥

मल्लिकायामस्थापयन्, प्रत्युत कठोरकार्य्ये नियुञ्जानो मुनिर्निर्व्योगमूढ़त्वादसाधुदर्शी एवेति भावः।

"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्" इति साहित्यदर्पणः।

"निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः। "कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्च" इति "अहो धिगर्थे शोके च करुणार्थ-विषादयोः। सम्बोधने प्रशंसायां विस्मये पादपूरणे॥ असूयायां वितर्के स्यात्" इति "धर्म्मोऽस्त्री पुण्यं आचारे" इत्यादि च मेदिनी।

उक्तमेव असाधुदर्शित्वं पुनः समर्थयितुमाह इदमिति। य ऋषिः, इदं दृश्यमानम्, न विद्यते व्याजः सौन्दर्य्यसम्पादनार्थम् अलङ्कारधारणादिकं छलं यत्र तत्ताद्दशमपि मनोहरं स्वभावादेव सुन्दरमित्यर्थः किल वपुः शरीरम्, तपःक्षमं तपस्याकरणयोग्यम्, साधयितुं सम्पादयितुम्, इच्छति। ध्रुवं निश्चितमेव, स ऋषिः कण्वः, नीलोत्पलपत्रस्य अतीवकोमलस्येत्याशयः धारया खड्गादिधारावत् प्रान्तभागेन, शमीलतां नितान्तकठिनां शमीवृक्षशाखाम्, छेत्तुं व्यवस्यति उद्‌युङ्क्ते। ईदृशकोमलवपुषः तपःक्षमत्वसाधनेच्छा, कोमलया नीलोत्पलपत्रधारया कठिनशमीशाखाच्छेदनेच्छेव अत्यन्तमसम्भवैव, ताञ्च कुर्वन् कण्वः असाधुदर्शी एवेति भावः।

अतएवात्र पूर्वापरार्द्धवाक्यार्थः असम्भवन् उक्तरूपं सादृश्यं बोधयतीति असम्भव-

(र) রাজা। (দেখিয়া স্বগত) ইনি সেই কণ্বের কন্যা শকুন্তলা। (বিস্ময়ের সহিত) ভগবান্ কণ্ব উপযুক্ত বিবেচক নহেন, যিনি ইহাকে আশ্রমধর্ম্মে নিযুক্ত করিয়াছেন।

(१) तपःक्षमम् इति साहित्यदर्पणधृतपाठः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवतु, पादपान्तरित एव विश्वस्तां तावदेनां पश्यामि।
इति तथा करोति (१)। (ल)

शकु। हला अणसूए! अदिपिणद्धेण वक्कलेण पिअम्बदाए दढ़ं पीड़िदाह्मि, ता सिढ़िलेहि दाव णं (२)। (व)

हस्तुसम्बन्धरूपा निदर्शनालङ्कारः। तथा प्रागुत्पन्नस्य शकुन्तलां प्रति राजानुराग स्य बाहुल्यात् परिकरो नाम मुखसन्धेरङ्गम्—"समुत्पन्नार्थबाहुल्यं ज्ञेयः परिक पुनः" इति लक्षणात्।

एवमभिप्रायो नाम नाट्यलक्षणञ्च "अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना" इ लक्षणात्।

"शुचौ शमीदे क्लीवन्तु निश्चिते शाश्वते त्रिषु" "शमे शाखालते" इति च अमरः।
वंशस्थविलं वृत्तम्—"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात्॥१८॥

(ल) भवत्विति। भवतु कामस्य असाधुदर्शित्वं साधुदर्शित्वं वा तिष्ठतु, तद लोचनया न मे किञ्चित् प्रयोजनमिति भावः। स्वाभिप्रेतमेव करोमीत्याह पादपेति पादेन शिखरेण पिबति रसमाकर्षतीति पादपो वृक्षस्तेन अन्तरितस्तिरोहितदेहः सन्नहम् अतएव विश्वस्ताम् अपरिचितपुरुषदर्शनाभावात् अनुद्वेलितचित्ताम्, एनां शकुन्तलाम् तथा सति सम्यग् द्रष्टुं शक्ष्यामीति भावः।

যিনি এই স্বভাবসুন্দর শরীরটীকে তপস্যার যোগ্য করিতে ইচ্ছা করেন, নিশ্চয়ই তিনি নীলোৎপলপত্রাধারাদ্বারা শমীবৃক্ষের শাখাচ্ছেদ করিতে উদ্যত হন॥১৮॥

(ল) হউক, বৃক্ষের অন্তরালে থাকিয়াই বিশ্বস্তা শকুন্তলাকে দেখি (ইহার পর সেইরূপ করিতে লাগিলেন।)

(१) क्वचिदिति शब्दो नास्ति।

(२) शकुन्तला। सखिला। सखि अणसूए! अदिपिणद्धेण वक्कलेण पिअंवदाए णियन्तिदह्मि सिढ़िलेहि दाव णं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन । शिथिलयति (१) । (श)

प्रिय' । सहासम् । एत्थ दाव पओहरवित्थारइत्तुअं अत्तणो जोव्वणारम्भं उवालहइ, मं किं उवालहसि (२) । (ष)

(व) हला अनसूये ! अतिपिनद्धेन वल्कलेन प्रियंवदया दृढ़ं पीड़िताश्मि, तत् शिथिलय तावदेनाम् ।

(ष) अत्र तावत् पयोधरविस्तारहेतुकम् आत्मनो यौवनारम्भम् उपालभस्व, मां किमुपालभसे ? ।

---

(व) शकु इति । अतिपिनद्धेन अतीवदृढ़बद्धेन, वल्कलेन गात्रावरकतरुत्वचा । दृढ़मत्यन्तं पीड़िताश्मि पीड़ां प्रापिताश्मि । शिथिलय शिथिलीकुरु । एनं वल्कलम् ।

अतिपिनद्धेनेति "धाञ् नह्योरपेरुपसर्गस्यादेः" इत्यपेरकारलोपः । शिथिलं कुरु इति शिथिलय शिथिलशब्दात् "इन् कारितं धात्वर्थे" इति इन् ।

(श) अनेति । शिथिलयति शिथिलीकरोति वल्कलमिति शेषः ।

(ष) प्रियमिति । अत्र अस्मिन् पीड़ाविषये । पयोधरयोः स्तनयोर्विस्तारस्य हेतुकं हेतुभूतम्, आत्मनः स्वस्य । उपालभस्व तिरस्कुरु । उपालभसे तिरस्करोषि । तथा च पूर्वं त्वद्गात्रावरणयोग्येन पुरातनेन वल्कलेन पूर्ववदेव मया बद्धासि, किन्तु साम्प्रतं ते यौवनारम्भो जातः, तेन च इतराङ्गवत् स्तनावपि पूर्वापेक्षया नितरां विस्तृतौ जातौ, तत एव च अतिपिनद्धताप्रतीतिः, न पुनर्वल्कलमेव विशेषेणाकृष्य मया बद्धेति भावः ।

---

(ব) শকুন্তলা । ওলো অনসূয়া ! প্রিয়ংবদা বল্কলখানাকে অতি-দৃঢ়রূপে বন্ধন করিয়া দিয়াছে, তাহাতে আমি বড়ই কষ্ট পাইতেছি। তা তুমি একটু শিথিল করিয়া দাও।

(শ) অনসূয়া । ( শিথিল করিয়া দিল । )

---

(१) अनसूया । तह । शिथिलयति ।

(२) प्रियंवदा । एत्थ पओहरवित्थारइत्तअं अत्तणो जोव्वणं उवालह ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । सम्यगियमाह (१) । (स)

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाच्छादिना वल्कलेन ।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण (२) ॥१८॥

(स) राजेति । इयं सखी सम्यगाह समीचीनं ब्रवीति । तथा च यौवनाविर्भावेन स्वभावत एव स्तनयोर्विस्तारात् दृढबद्धताप्रतीतिः, न पुनर्वस्तुत एव प्रियंवदया पूर्वापेक्षया दृढबद्धेति भावः ।

अथायं यौवनाविर्भावः पूर्वमेव कथं नानुभूत इत्याह इदमिति । इदमभिनवम् अभिनवयौवनास्पदम्, अस्याः शकुन्तलायाः, वपुः शरीरम्, स्कन्धदेशे उपहितो दत्तः सूक्ष्मग्रन्थिः क्षुद्रबन्धनं यस्य तेन, तथा स्तनयुगस्य परिणाहं विशालताम्, आच्छादयतीति तेन वल्कलेन तदावरणेनेत्यर्थः, पाण्डुपत्राणां पक्वतया पाण्डुवर्णानां दलानाम् उदरेण अभ्यन्तरेण, पिनद्धं बद्धम् आवृतमिति यावत्, कुसुममिव, स्वां स्वयोग्यां शोभाम्, न पुष्यति आवृतत्वात् लोकलोचनगोचरतया न दधाति । अतएव सततवल्कलावृततया स्तनवृद्ध्यादिप्रत्यक्षाभावात् यौवनाविर्भावः पूर्वं नानुभूत इति भावः ।

अत्र श्रौतोपमालङ्कारः । तथा पाण्डुशब्दः मुख्यं पिधानं प्रति न किञ्चिदुपकुरुते इति अपुष्टार्थत्वदोषः ; स च 'सान्द्रपत्रोदरेण' इति पाठेन समाधेयः । पत्राणां सान्द्रत्वे सुष्ठु पिधानं स्यादिति भाव्यम् ।

"परिणाहो विशालता" इत्यमरः । मालिनी वृत्तम् ॥१८॥

(ब) প্রিয়ংবদা। (হাস্তের সহিত) এ বিষয়ে স্তনবিস্তারের কারণ নিজের যৌবনারম্ভকে তিরস্কার কর, আমাকে তিরস্কার করিতেছ কেন ?।

(স) রাজা। এ, ঠিক্ কথা বলিয়াছে।

(१) क्वचिदयं पाठो न दृश्यते । (२) अयं श्लोकोऽपि क्वचिन्नास्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অথবা কামমননুরূপমস্যা বপুষো বল্কলং ন পুনরলঙ্কারশ্রিয়ং ন পুষ্যতি। কুতঃ—(১) (হ)

সরসিজমনুবিদ্ধং শৈবলেনাপি রম্যং
মলিনমপি হিমাংশোর্লক্ষ্ম লক্ষ্মীং তনোতি।
ইয়মধিকমনোজ্ঞা বল্কলেনাপি তন্বী
কিমিব হি মধুরাণাং মণ্ডনং নাকৃতীনাম্ ॥২০॥

(হ) প্রিয়ংবদোক্তিং সমর্থ্য পক্ষান্তরে স্বাভিমতং ব্যনক্তি অথবেতি। অস্যাঃ শকুন্তলায়াঃ, বপুষঃ শরীরস্য, কামং পর্য্যাপ্তম্ অত্যন্তম্ অননুরূপম্ অযোগ্যমপি, বল্কলম্, অলঙ্কারশ্রিয়ম্ আভরণজন্যশোভাম্, ন পুষ্যতি ন দধাতি ইতি ন, অপি তু পুষ্যত্যেবেত্যর্থঃ। "সম্ভাব্যমাননিষেধনিবর্ত্তনে নঞ্‌দ্বয়ম্" ইতি বামনোক্তের্নাধিকপদতাদোষঃ।

সরসিজমিতি। শৈবলেন অনুবিদ্ধং সম্বদ্ধমপি, সরসিজং পদ্মম্, রম্যং মনোহরমেব তিষ্ঠতি। তথা মলিনমপি হিমাংশোশ্চন্দ্রস্য লক্ষ্ম হরিণচিহ্নম্, লক্ষ্মীং তনোতি শোভাং বিস্তারয়তি। উভয়ত্রাপি বিশেষবৈচিত্র্যজননাদিত্যাশয়ঃ। তদ্বৎ ইয়মপি তন্বী কৃশাঙ্গী শকুন্তলা, বল্কলেনাপি তুচ্ছবল্কলপরিধানেনাপি অধিকমনোজ্ঞা বিশেষেণ মনোহরা জাতেতি শেষঃ। হি তথাহি, মধুরাণাং সৌন্দর্য্যাদিগুণেন প্রিয়াণাম্, আকৃতীনামঙ্গানাম্,

৩

এই বল্কল, স্কন্ধদেশে সূক্ষ্মবন্ধনে বদ্ধ রহিয়াছে এবং স্তনদ্বয়ের বিশালতাকে আবৃত করিয়াছে; তথাপি শুভ্রবর্ণ পত্রের অভ্যন্তরে বদ্ধ পুষ্পের ন্যায় শকুন্তলার এই নবীন দেহখানি যে স্বকীয় শোভা ধারণ করিতেছে না, এমন নহে। কারণ—॥১৯॥

(হ) অথবা বল্কলখানি, শকুন্তলার শরীরের অত্যন্ত অযোগ্য হইলেও যে অলঙ্কারের শোভা জন্মাইতেছে না, এমন নহে। কারণ—

(১) রাজা। কামমননুরূপমস্যা বয়সো বল্কলং ন পুনরলঙ্কারশ্রিয়ং ন পুষ্যতি। কুতঃ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि च, (१)

कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति ।
विकचसरसिजायाः स्तोकनिर्म्मुक्तकण्ठं
निजमिव कमलिन्याः कर्कशं वृन्तजालम् (२) ॥२१॥

किमिव वस्तु, मण्डनं भूषणम्, न भवति ? अपि तु सर्वमेव वस्तु मण्डनं भव वेत्यर्थः । अतएव इदं वल्कलमपि अस्या अलङ्कारश्रियं पुष्यत्येवेति भावः ।

अत्र रम्यत्वमनोज्ञत्वयोः लक्ष्मीतननमनोज्ञत्वयोश्च सुन्दरत्वरूपैकधर्मत्वेऽपि वाक्यभेदे पृथङ्‌निर्द्देशात् प्रतिवस्तूपमाद्वयम्, तथा लक्ष्म-लक्ष्मीमिति व्यञ्जनसङ्घस्य सकृत् सा छेकानुप्रासस्य, अनयोः संसृष्टिः । चतुर्थपादे सामान्येन विशेषसमर्थनरूपोऽर्थान्तर अर्थापत्तिश्चेत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः ; तादृशसङ्करस्य च उक्तसंसृष्ट्या निरपेक्षतयावस्थितेः पुनः संसृष्टिः । संसृष्टिसङ्करयोरपि संसृष्टिसङ्करौ सम्भवत प्रदर्शितमस्माभिः साहित्यदर्पणटीकायाम् ।

"चिह्नं लक्ष्म च लक्षणम्" इत्यमरः । "मधुरौ तु प्रियस्वादू" इत्यनेकार्थ मञ्जरी । सरसिजमिति "सप्तम्याः प्रायेण क्वति" इत्यलुक् । मालिनी वृत्तम् ॥२०॥

पुनरपि स्वाभिमतमाह कठिनमिति । मृगाक्ष्या हरिणनयनायाः शकुन्तला कठिनमपि अकोमलमपि, कान्तरूपम् एतच्छरीरसम्बन्धात् मनोज्ञभूतम्, वल्कलं का विकचं प्रस्फुटितं सरसिजं पद्मं यस्यास्तस्याः, कमलिन्याः पद्मलतायाः, स्तोकमल्पं स्यात्तया निर्म्मुक्तः त्यक्तजलसंयोगः जलोपरि उत्थित इत्यर्थः, कण्ठः पद्मनिम्नदेशो

পদ্ম, শৈবলসংযুক্ত হইলেও, সুন্দরই থাকে এবং চন্দ্রের কল মলিন হইলেও সৌন্দর্য্য বিস্তার করে ; আর এই কৃশাঙ্গী, বল্কলধার অধিক মনোহর হইয়াছে । কারণ, কোন্ বস্তু, স্বভাবসুন্দর আকৃতি অলঙ্কার না হয় ? ॥২০॥

(१) अपि चेति क्वचित् पुस्तके नास्ति । (२) अयं श्लोकोऽपि कुत्रचिन्न दृश्यते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । अग्रतोऽवलोक्य । सहीओ ! एस वादेरिदपल्लवाङ्गुलीहिं किम्पि वाहरेदि विअ मं चूअरुक्खओ । ता जाव णं सम्भावेमि (१) । इति तथा करोति । (च)

(च) सख्यौ ! एष वातेरितपल्लवाङ्गुलीभिः किमपि व्याहरतीव मां चूतवृक्षः । तद्यावदेनं सम्भावयामि ।

---

तत्, तथा कर्कशं कठिनम्, निजं स्वकीयम्, वृन्तजालं वृन्तसमूह इव, मनाग् चित्ते, स्वल्पमपि रुचिभङ्गम् अनुरागघातिम्, न आदधाति न जनयति ; वैचित्र्यकारित्वादिति भावः ।

अत्र श्रौतोपमालङ्कारः । तथा "तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्" इति दर्पणोदाहृतवत् मृगाक्ष्या इत्यत्र पदांशगता दुःश्रवत्वदोषः ; स च 'कठिनमपि मनोज्ञं वल्कलं चारुदृष्टेः' इति पाठेन समाधेयः । मालिनी वृत्तम् ॥२१॥

(च) शकु इति । हे सख्यौ ! एष चूतवृक्ष आम्रतरुः, वातेरिता वायुसञ्चालिताः पल्लवा एव अङ्गुल्यस्ताभिः, मां किमपि जलं दातुमिति भावः, व्याहरतीव वक्तीव व्याहारेणेव स्पष्टं सूचयतीवेत्यर्थः । तत्तस्मात् यावद्वाक्यालङ्कारे, एनं चूतवृक्षम्, सम्भावयामि जलसेचनेन सम्मानयामि । यथा अन्नादिपरिवेशनसमये कश्चिदङ्गुलीसङ्केतेन आत्मने दातुं परिवेष्टारं प्रणोदयति तद्वदिति भावः ।

अत एवात्र कार्य्येण चूतवृक्षे तादृशजनव्यवहारसमारोपात् समासोक्तिरलङ्कारः निरङ्गं केवलरूपकं क्रियोत्प्रेक्षा च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

---

আরও, হরিণনয়না শকুন্তলার বল্কলখানি কঠিন হইলেও সুন্দর দেখাইতেছে, সুতরাং প্রস্ফুটিতপদ্মসমন্বিত পদ্মিনীর জলোপরি ঈষদুত্থিত কঠিন স্বকীয় বৃন্তসমূহের ন্যায় এই বল্কল, মনে অল্পও অনুরাগের ক্ষতি করিতেছে না ॥২১॥

---

(१) एसो वादेरितपल्लवाङ्गुलीहिं तुवरावेइ विअ मं केसररुक्खओ । जाव णं सम्भावेमि । परिक्रामति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

প্রিয়ং। হলা সউন্তলে! ইধ জ্জেব মুহুত্তঅং চিট্ঠ (ক)।
শকু। কিং ণিমিত্তং ?। (খ)
প্রিয়ং। তএ সমীববট্টিদাএ লদাসণাধো বিঅ অঅং চূ
রুক্‌খঅো পড়িহাদি। (গ)

(ক) হলা শকুন্তলে! ইহৈব মুহূর্ত্তকং তিষ্ঠ।
(খ) কিং নিমিত্তম্‌ ?।
(গ) ত্বয়া সমীপস্থিতয়া লতাসনাথ ইব অয়ং চূতবৃক্ষ: প্রতিভাতি।

(ক) প্রিয়মিতি। মুহূর্ত্তং স্বল্পকালম্‌।
(খ) শকু ইতি। কিং নিমিত্তং তিষ্ঠামীতি শেষ:।
(গ) প্রিয়মিতি। লতাসনাথ ইব লতাসহিত ইব।
অত্র গুণোৎপ্রেক্ষালঙ্কার:। তেন চ শকুন্তলায়াং লতাসাদৃশ্যং ব্যজ্যত ইত্যলঙ্কারে
ঙ্কারধ্বনি:।

(ক্ষ) শকুন্তলা। (সম্মুখে দৃষ্টিপাত করিয়া) সখীরা!
আম্রবৃক্ষ, বায়ুসঞ্চালিত পল্লবরূপ অঙ্গুলীদ্বারা আমাকে যেন
বলিতেছে। তা ইহাকে সম্মানিত করি। (এই বলিয়া তা
করিল।)

(ক) প্রিয়ংবদা। ওলো শকুন্তলা! তুই এইখানেই একটু
থাক্‌।

(খ) শকুন্তলা। কি নিমিত্ত ?।

(গ) প্রিয়ংবদা। তুমি নিকটে থাকিলে এই আমগাছটীকে
যুক্ত বলিয়া মনে হয়।

(১) প্রিয়ংবদা। হলা সউন্তলে! এত্থ এব্ব দাব মুহুত্তঅং চিট্ঠ তুএ
দাএ লদাসণাধো বিঅ অঅং কেসররুক্‌খঅো পড়িভাই।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । अदो ज्जेव तुमं पिअम्वद त्ति भणीअसि (१) । (घ)

राजा । अवितथमाह प्रियंवदा । तथाह्यस्याः—(२) (ङ)

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥२२॥

(घ) अतएव त्वं प्रियंवदेति भण्यसे ।

(घ) शकु इति । अतएव ईदृशप्रियोक्तिकरणादेव । प्रियोक्तित्वञ्च लतासादृश्यसूचनेन लावण्यकोमलतादिसूचनादिति बोध्यम् । भण्यसे परिचितजनैरुच्यसे । प्रियं वदतीति प्रियंवदा "वदेः खः प्रियवशयोः" इति खः ।

(ङ) राजेति । अवितथम् अमिथ्या सत्यमित्यर्थः । तत् सत्यत्वं प्रतिपादयितुमाह तथाहीति । अस्याः शकुन्तलायाः । अस्य च अधर इत्यादिना श्लोकस्थेनान्वयः ।

अधर इति । अधर ओष्ठः, किसलयस्य पल्लवस्य राग इव रागो रक्तिमा यस्य स तादृशः ; बाहू भुजद्वयम्, कोमलयोर्विटपयोः शाखयोः अनुकारिणौ । तथा अङ्गेषु कुसुममिव, लोभनीयं हृदयाकर्षकम्, यौवनं सन्नद्धं विधिना निबद्धम् । अतएवेयं लतासदृशी, तेन च प्रियंवदा अवितथमेवाहेति भावः ।

अत्र प्रथमे पादे लुप्तोपमा, द्वितीये आर्थोपमा, तृतीये च श्रौतोपमा इत्येतासां परस्परनिरपेक्षतया संसृष्टिः ।

तथा अधरादिकोमलार्थानुरूपाणां कोमलानामेव पदानां निबन्धनात् पदोच्चयो नाम नाट्यलक्षणम्—"उच्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः" इति दर्पणात् ।

लोभयतीति लोभनीयम् "कृत्यल्युटोऽन्यत्रापि" इति कर्त्तर्यनीयः ।

आर्य्या जातिः ॥२२॥

(ঘ) শকুন্তলা। এই জন্যই তোমাকে সকলে প্রিয়ংবদা বলে।

(ঙ) রাজা। প্রিয়ংবদা সত্যই বলিয়াছে। তাহার কারণ—

(१) शकुन्तला । अदो क्खु, पिअंवदासि तुमं ।

(२) राजा । प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा । अस्याः खलु ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। हला सउन्तले! इअं सअम्बरबहू सहआर
तुए किदणामहेआ वनदोसिणी त्ति (१) णोमालिआ; णं वि
मरिदासि। (च)

शकु। तदो अत्ताणम्मि विसुमरिस्सं। लतामुपेत्य अवलोक्य।
हला! रमणीओ क्खु कालो इमस्स पादवमिहुण
रदिअरो (२) संवुत्तो। जेण णवकुसुमजोव्वणा णोमालि
(३) अअं पि वद्धफलदाए (४) उअभोअक्खमो सहआरो
इति पश्यन्ती तिष्ठति। (छ)

(च) हला शकुन्तले! इयं स्वयम्बरवधूः सहकारस्य त्वया कृतनामधेया
तोषिणीति नवमालिका; एनां विस्मृतासि?।

(च) अनेति। स्वयमेव वृणीते इति स्वयम्बरा चासौ वधूश्चेति स्वयम्बरा,
सहकारस्य अतिसौरभस्य आम्रतरोः, स्वयम्बरवधूः स्वयमेवाश्रयणात् स्वयम्बरव
स्थिता। वनं तोषयतीति वनतोषिणी इति इत्थं त्वया कृतं नामधेयं नाम
सा। एनां नवमालिकाम्, विस्मृतासि जलं दातुमिति शेषः।

विस्मृतेति ज्ञानार्थत्वात् कर्त्तरि वर्त्तमाने क्तः।

ইহার ওষ্ঠযুগল পল্লবের ন্যায় রক্তবর্ণ; বাহুযুগল কোমল শা
অনুকরণ করিতেছে এবং বিধাতা ইহার অঙ্গে পুষ্পের ন্যায় লোভ
যৌবন নিবদ্ধ করিয়াছেন ॥২২॥

——(চ) অনসূয়া। ওলো শকুন্তলা! এই নবমালিকা লতাটী আ
গাছটীর স্বয়ম্বরবধূর ন্যায় রহিয়াছে, তুমি ইহার 'বনতোষিণী' এই
নাম করিয়াছ; তা ইহাকে বিস্মৃত হইলে?।

(१) वणजोसिणी। (२) रमणीए क्खु काले इमस्स लदापादवमिहुणस्स वइअ
(३) वणजोसिणी। (४) बद्धपल्लवदाए।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

015, 2D40, 1
A



प्रिय'। सस्मितम्। अणसूए! जाणासि किं णिमित्तं सउन्तला वणदोसिणीं (१) अदिमेत्तं पेक्खदि त्ति। (ज)

(छ) तत आत्मानमपि विस्मरिष्यामि। हला! रमणीयः खलु कालः अस्य पादपमिथुनस्य रतिकरः संवृत्तः। येन नवकुसुमयौवना नवमालिका, अयमपि बहुफलतया उपभोगक्षमः सहकारः।

(छ) यक्तु इति। ततस्तदा अस्या नवमालिकाया विस्मरणं इत्यर्थः। तथा चेयं नवमालिका ममात्मसदृशी; तेनात्मा यथा विस्मरणायोग्यस्तथा इयमपीति इदानीमेवैनां सिञ्चामीति भावः। लतामुक्तां नवमालिकाम्। पादपमिथुनस्य पादपजातीयद्वयस्य नवमालिकासहकारयोरित्यर्थः, रतिकरः सौन्दर्य्यात् लोकानुरागजनकः सुरतघटकश्च। नवं कुसुमं पुष्पं रजश्च यस्मिन् तत्तादृशं यौवनं तारुण्यं यस्याः सा। बहूनि फलानि ग्रीष्मकालत्वादाम्राणि लाभाय यस्य तस्य भावस्तया हेतुना, उपभोगक्षमः लोकानां भोगयोग्यः सम्भोगसमर्थश्च। पश्यन्ती साभिलाषमिति शेषः। एतेनात्मनोऽपि तादृशसम्मेलनेच्छा व्यज्यते।

अत्र नवमालिकासहकारयोर्लिङ्गसाम्येन स्त्रीपुंसयोर्व्यवहारसमारोपात् समासोक्तिरलङ्कारः। तथा लतापादपरूपश्लिष्टार्थेन सह मानुषदम्पतिरूपाश्लिष्टार्थस्य प्रकाशनात् श्लिष्टविचित्रार्थत्वाच्च शोभा नाम नाट्यलक्षणम्—"सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाश्यते। श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते॥" इति दर्पणलक्षणात्।

"कुसुमं स्त्रीरजःपुष्पम्" "फलं जातीफले लाभे बाणाग्रे फलकेऽपि च" इति च त्रिकाण्डशेषः। "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः।

(छ) शकुन्तला। তাহা হইলে আপনাকেও বিস্মৃত হইব। (লতার নিকটে যাইয়া দেখিয়া) ওলো! এই তরুলতা দুইটীর এই সময়টী বড়ই মনোহর ও রুচিকর হইয়াছে। যে হেতু নবমালিকা নব-কুসুম-যৌবনা, আর এই আমগাছটীও বহুফলশালী বলিয়া উপভোগ যোগ্য। (এই বলিয়া দেখিতে লাগিলেন)

मुमुक्षु भवन वेद वेदाङ्ग पुस्तकालय
आगत क्रमांक 0048

(१)…किं वणजोसिणीं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। ण क्खु विभावेमि, ता कधेहि मे (१)। (झ)

प्रिय। जह वणदोसिणी अणुरूवेण पादवेण सङ्गद

तह अहम्मि अत्तणो अणुरूवं वरं लहेअं त्ति (२)। (ञ)

शकु। एस दे अत्तणो चित्तगदो मणोरहो। इति कल

मावर्जयति (३)। (ट)

---

(ज) अनसूये ! जानासि किं निमित्तं शकुन्तला वनतोषिणीमतिमात्रं प्रेक्षते

(झ) न खलु विभावयामि, तत् कथय मे।

(ञ) यथा वनतोषिणी अनुरूपेण पादपेन सङ्गता, तथा अहमपि आत्मनः अनु

वरं लभेय इति।

---

(ज) प्रियमिति। अतिमात्रमतिक्रान्तम्। प्रेक्षते पश्यति।

(झ) अनेति। विभावयामि विभाव्यापि सम्प्रधारयामि।

(ञ) प्रियमिति। अनुरूपेण स्वयोग्येन। सङ्गता सम्मिलिता। इति शं

अतिमात्रं प्रेक्षते इति पूर्वेणान्वयः।

(ट) शकु इति। आत्मनः स्वस्यैव। मनोरथः अभिलाषः। लभेयानु

वरं लब्धुमिच्छसीति भावः। आवर्जयति न्युब्जीकरोति।

---

(জ) প্রিয়ংবদা। (ঈষৎ হাস্য করিয়া) অনসূয়া! জানি

কি জন্য শকুন্তলা বনতোষিণীকে এত বেশী দেখিতেছে?।

(ঝ) অনসূয়া। আমি বুঝিতেছি না; তা আমায় বল দেখি।

(ঞ) প্রিয়ংবদা। বনতোষিণী যেমন অনুরূপ বৃক্ষের সহি

মিলিয়াছে, আমিও সেইরূপ নিজের অনুরূপ বর লাভ করিব।

(ট) শকুন্তলা। ইহা তোর নিজের মনোগত ইচ্ছা। (এই বলি

কলস ন্যুব্জ (উবুড়) করিল।)

---

(१) ता कहेहि। (२) वणजोसिणी। अवि णाम एव्वं अहम्पि···।

(३) एसो णूणं तुह अत्तगदो।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। हला सउन्तले! इअं तादकस्सेण तुमं विअ सहत्थेण सम्बड्ढिदा माहवीलदा, ता कधं इमं विसुमरिदासि ? (१)। (ठ)

शकु। तदो अत्ताणम्मि विसुमरिस्सं। लतामुपेत्यावलोक्य च सहर्षम्। अच्चरीअं अच्चरीअं, पिअम्बदे! पिअं दे णिवेदेमि। (ड)

प्रियं। सहि! किं मे पिअं ?। (ढ)

(ट) एष ते आत्मनश्चित्तगतो मनोरथः।

(ठ) हला शकुन्तले! इयं तातकण्वेन त्वमिव स्वहस्तेन संवर्द्धिता माधवीलता, तत् कथमिमां विस्मृतासि ?।

(ड) तत आत्मानमपि विस्मरिष्यामि। आश्चर्य्यमाश्चर्य्यम्, प्रियंवदे! प्रियं ते निवेदयामि।

(ढ) सखि! किं मे प्रियम् ?।

(ठ) अनेति। विस्मृतासीति स्वरविकारेण प्रश्नो व्यज्यते।

(ड) शकु इति। तत इत्यनेन माधवीलतापि आत्मसदृशीति व्यज्यते। लतां माधवीलताम्।

(ঠ) অনসূয়া। ওলো! শকুন্তলা! পিতা কণ্ব তোমার ন্যায় এই মাধবী লতাটীকে নিজহস্তে সংবর্দ্ধিত করিয়াছেন, তা ইহাকে বিস্মৃত হইলে কেন ?।

(ড) শকুন্তলা। তা হইলে আপনাকেও বিস্মৃত হইব। (লতার নিকটে যাইয়া এবং দেখিয়া আনন্দের সহিত) আশ্চর্য্য আশ্চর্য্য! প্রিয়ংবদে! তোর প্রীতিকর বিষয় জানাইতেছি।

(ঢ) প্রিয়ংবদা। সখি! আমার প্রীতিকর বিষয় কি ?।

(१) इत्यारभ्य पुनः कलसमावर्जयतीत्यन्तः पाठसन्दर्भो विद्यासागरेण परित्यक्तः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। असमए क्खु एसा आमूलादो मुउलिदा माहवी-लदा। (ण)

उभे। सत्वरमुपगम्य। सहि ! सच्चं सच्चं ?। (त)

शकु। सच्चं किं ण पेक्खध। (थ)

प्रियं। सहर्षं निरूप्य। सहि ! तेण हि पड़िप्पिअं दे णिवेदेमि। (द)

शकु। किं मे पड़िप्पिअं ?। (ध)

---

(ण) असमये खल्वेषा आमूलात् मुकुलिता माधवीलता।

(त) सखि ! सत्यं सत्यम् ?।

(थ) सत्यं किं न प्रेक्षेथे।

(द) सखि ! तेन हि प्रतिप्रियं ते निवेदयामि।

(ध) किं मे प्रतिप्रियम् ?।

---

(ण) शकु इति। मुकुलानि अस्याः सञ्जातानीति मुकुलिता तारकादित्वादितच् प्रत्ययः।

(त) उभे इति। अत्र काकुवशात् प्रश्नो व्यज्यते।

---

(ण) শকুন্তলা। এই মাধবীলতা, অকালে মূল হইতে মুকুলিত হইয়াছে।

(ত) অনসূয়া ও প্রিয়ংবদা। (সত্বর নিকটে যাইয়া) সখি! সত্য সত্য কি ?।

(থ) শকুন্তলা। সত্য কিনা দেখ।

(দ) প্রিয়ংবদা। (আনন্দের সহিত দেখিয়া) সখি! তোমারও প্রীতিকর বিষয় জানাইতেছি।

(ধ) শকুন্তলা। আমার কি প্রীতিকর বিষয় ?।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रिय'। आसस्रपाणिग्गहणासि तुमं। (न)

शकु। सासूयमिव। एस दे अत्तणो चित्तगदो मणोरहो, ता ण दे वअणं सुणिस्सं। (प)

प्रिय'। सहि! ण क्खु परिहासेण भणामि, सुदं मए तादकस्सस्स मुहादो तुह कल्लाणसूअअं एदं णिमित्तं त्ति। (फ)

अन। हला पिअम्बदे! अदो ज्जेव ससिणेहा सउन्तला माहवीलदां सिञ्चदि। (ब)

(न) आसन्नपाणिग्रहणासि त्वम्।

(प) एष ते आत्मनश्चित्तगतो मनोरथः, तन्न ते वचनं श्रोष्यामि।

(फ) सखि! न खलु ते परिहासेन भणामि, श्रुतं मया तातकखस्स मुखात् तव कल्याणसूचकम् एतन्निमित्तमिति।

(ब) हला प्रियंवदे! अतएव सस्नेहा शकुन्तला माधवीलतां सिञ्चति।

---

(न) प्रियमिति। आसन्नं निकटवर्त्ति पाणिग्रहणं विवाहो यस्याः सा।

(प) शकु इति। सासूयमिव मुखभङ्ग्या वहिरसूयां प्रकाश्य। एतेन पाणिग्रहणाकाङ्क्षा सूचिता। तत्तस्मात् स्वाकाङ्क्षायाः परोपरि प्रवर्त्तनादित्यर्थः।

(फ) प्रियमिति। परिहासेन परिहासकरणेच्छया। एतत् माधवीलताया असमये मुकुलितस्वरूपं निमित्तं लक्षणम्, कल्याणसूचकं पाणिग्रहणरूपमङ्गलज्ञापकम्।

---

(न) প্রিয়ংবদা। তোমার বিবাহ নিকটবর্ত্তী হইয়াছে।

(প) শকুন্তলা। (অসূয়ার সহিতই যেন) ইহা তোর নিজের মনোগত ইচ্ছা; তা তোর কথা আমি শুনিব না।

(ফ) প্রিয়ংবদা। সখি! পরিহাস করিয়া বলিতেছি না। আমি পিতা কণ্বের মুখ হইতে শুনিয়াছি যে, এই লক্ষণটী তোমার মঙ্গলসূচক।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । जदो वहिणी मे भोदि, तदो किं त्ति ण सिञ्चेमि।

इति कलसमावर्जयति । (भ)

राजा । अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा भवेत् ? (१) । अथवा कृतं सन्देहेन । (म)

(भ) यतो भगिनी मे भवति, ततः किमिति न सिञ्चामि ।

(भ) शकु इति । भगिनी एकेनैव कण्वेन परिवर्द्धिततया भगिनी तुल्यत्वे भागिनी, इयं माधवीलतेति शेषः । आवर्जयति जलसेकार्थं न्युब्जीकरोति ।

(म) राजेति । अपिशब्दः प्रश्ने । नामशब्दः सम्भावनायाम् । इति सम्भावयितुमर्हामि किमित्यर्थः । तथा च इयं शकुन्तला, कुलपतेः कण्वस्य, असवर्णम् असमानवर्णं ब्राह्मणजातीयभिन्नं यत् क्षेत्रं कलत्रं तत्र सम्भव उत्पत्तिर्यस्याः सा तादृशी भवेत्, तथा च इयं यदि ब्राह्मणस्य कण्वस्य क्षत्रियादिजातीयपत्नीगर्भजाता कन्या भवेत्, तदा मे परिणययोग्या स्यात्, ब्राह्मणजातीयपत्नीगर्भजातत्वे तु प्रतिलोमविवाहनिषेधात् मम आशापि निष्फलैवेति भावः । कृतमलम् ।

कुलपतिमाहुः साम्प्रदायिकाः । यथा—

"मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् ।
अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः ॥"

कण्वस्य असवर्णक्षेत्रसम्भवाया दुष्मन्तस्य परिणययोग्यत्वे प्रमाणं यथा मनुः—

"पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरनाम्नस्तु मातृदोषात् प्रचक्षते ॥"

"क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" "कृतं युगेऽलमर्थ च" इत्यादि च मेदिनी

(ব) অনসূয়া। ওলো প্রিয়ংবদা! এই জন্যই শকুন্তলা স্নেহ সহিত মাধবীলতাটীকে সিক্ত করিতেছে।

(ভ) শকুন্তলা। যে হেতু আমার ভগিনী হয়, সেই হেতু কি করিব না কেন ?। (এই বলিয়া কলস উবুড় করিল।)

(१) स्यात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥२३॥
तथापि तत्त्वत एवैनामुपलप्स्ये (१) । (य)

असंशयमिति । असंशयं ध्रुवमेव, क्षत्रस्य क्षत्रियजातेः परिग्रहक्षमा पत्नीत्वेन ग्रहणयोग्या, इयं शकुन्तलेति शेषः । यद्यस्मात्, आर्य्यं चिरसत्पथगामित्वात् साधुभूतम्, मे मम मनः, अस्यां शकुन्तलायाम्, अभिलाषि एतद्विषयाकाङ्क्षाशालि वर्त्तत इति शेषः । ननु मनसः अभिलाषित्वमात्रेण कथं क्षत्रपरिग्रहक्षमेति निश्चीयत इत्याह सतामिति । हि यस्मात्, सन्देहपदेषु संशयविषयेषु, वस्तुषु पदार्थेषु, सतां सज्जनानाम्, अन्तःकरणस्य मनसः, प्रवृत्तयो गतय एव प्रमाणम् एकतरनिश्चायिकाः । तथा चास्यां शकुन्तलायां मन्मनसो याद्यत्वेन प्रवृत्तिसत्त्वात् क्षत्रस्येयं परिग्रहक्षमैवेति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । तथा राज्ञः शकुन्तलानुरागरूपकाव्यार्थस्यात्र निश्चयेनोपस्थितेः परिन्यासो नाम मुखसन्धेरङ्गम् । तथा च दर्पणः—"तन्निष्पत्तिः परिन्यासः ।"

संशयस्याभावः असंशयम्, अभावार्थे अव्ययीभावः । "वेदाः प्रमाणम्" इत्यादिवदत्रापि द्वयोः सामानाधिकरण्येऽपि अजहल्लिङ्गत्वात् भिन्नलिङ्गत्वं बहुत्वावच्छिन्नप्रवृत्तीनामेवैकप्रमाणत्वाच्च भिन्नवचनत्वम् ।

"आर्य्यः साधौ सौविदल्ले" इत्यादि विश्वः । वंशस्थविलं वृत्तम् ॥२३॥

(य) तथापीति । अन्तःकरणप्रवृत्तिप्रमाणेन क्षत्रपरिग्रहक्षमत्वनिश्चयेऽपीत्यर्थः ।

---

(য) রাজা। এই শকুন্তলা কি কুলপতি কণ্বের অসবর্ণ স্ত্রীর গর্ভজাত সন্তান হইবেন ?। অথবা সন্দেহের প্রয়োজন নাই। ( কারণ, )

ইনি ( শকুন্তলা ), নিশ্চয়ই ক্ষত্রিয়ের গ্রহণযোগ্য ; যে হেতু আমার নির্দ্দোষ মন ইঁহার প্রতি অভিলাষী হইয়াছে। কারণ, সন্দিগ্ধ বিষয়ে সজ্জনের মনের প্রবৃত্তিই প্রমাণ ॥২৩॥

---

(१) तत्त्वत एनाम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

শকু। সসম্ভ্রমম্। অম্মো! সলিলসেঅসম্ভমুগ্গদো ণোমালিঅং উজ্ঝিঅ বঅণং মে মহুঅরো অহিবট্টদি। ইতি ভ্রমরবাধাং নাটয়তি (১)। (র)

রাজা। সস্পৃহং বিলোক্য। সাধু, বাধনমপি রমণীয়মস্যাঃ (২)। (ল)

যতো যতঃ ষট্চরণোঽভিবর্ত্ততে
ততস্ততঃ প্রেরিতবামলোচনা।

(র) অহো! সলিলসেকসম্ভ্রমোদ্গতো নবমালিকাং উজ্ঝিত্বা বদনং মে মধুকরোঽভিবর্ত্ততে।

---

তত্ত্বত এব শব্দাদিপ্রমাণান্তরেণ যথার্থত এব, এনাং শকুন্তলাম্, উপলপ্স্যে জ্ঞাস্যামি। অন্তঃকরণপ্রবৃত্তিমাত্রপ্রমাণস্য কদাচিৎ ব্যভিচারস্যাপি দর্শনাদিতি ভাবঃ।

(র) শকু ইতি। সসম্ভ্রমম্ আকুলভাবেন সহিতম্। অম্মো ইতি বিস্ময়ে। সলিলসেকেন জলসেচনেন যঃ সসম্ভ্রমো ব্যস্ততা তেন উদ্গত উড্ডীনঃ, মধুকরী ভ্রমরঃ নবমালিকাম্ উজ্ঝিত্বা পরিত্যজ্য, মে মম বদনম্, অভিবর্ত্ততে লক্ষ্যীকৃত্য আগচ্ছতীত্যর্থঃ। ভ্রমরস্য বাধাং দূরীকরণম্।

(ল) রাজেতি। সস্পৃহং শকুন্তলাকাঙ্ক্ষাসহিতম্। সাধু সমীচীনম্, বাধনং ভ্রমরদূরীকরণম। অস্যাঃ শকুন্তলায়াঃ।

---

(য) তথাপি যথার্থরূপেই ইহাকে জানিব।

(র) শকুন্তলা। (ব্যস্ততার সহিত) ওমা! জলসেকে ব্যস্ততাবশতঃ একটা ভ্রমর উড়িয়া, নবমালিকাকে পরিত্যাগ করিয়া, আমার মুখের দিকে আসিতেছে।

(ল) রাজা। (স্পৃহার সহিত দেখিয়া) ভাল, বাধা দেওয়াও ইহার সুন্দর বটে। (কারণ,)

---

(১) ভ্রমরবাধাং রূপয়তি। (২) সস্পৃহমবলোক্য।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विवर्त्तितभ्रूरियमद्य शिक्षते
भयादकामापि हि दृष्टिविभ्रमम् (१) ॥२४॥

अपि च, सासूयमिव । (व)

---

भ्रमरबाधनस्य रमणीयत्वे हेतुमाह यत इति । हि तथाहि । षट् चरणाः पादा यस्य स षट्चरणो भ्रमरः, यतो यतः यस्यां यस्यां दिशि, अभिवर्त्तते मुखं लक्ष्यीकृत्य तिष्ठति । यतो यतः यस्या यस्या दिशः सकाशात् मुखमभ्यागच्छतीति वा । ततस्ततः तस्यां तस्यां दिशि, प्रेरिते निक्षिप्ते वामे मनोहरे लोचने नयनद्वयं यया सा, तथा विवर्त्तिते मुहुः परिवर्त्तिते भ्रुवौ यया सा तादृशी, इयं शकुन्तला, अकामापि कारणा-भावात् कामप्रवृत्तिरहितापि सती, भयात् भ्रमरदंशनत्रासात्, अद्य इदानीम्, दृष्टिविभ्रमं नायके स्वमनोवृत्तिज्ञापकं दृष्टिविलासम्, शिक्षते ज्ञातुमारभत इवेत्यर्थः ।

दृष्टिविभ्रमं प्रति सकामत्वमेव कारणम् । तेन चात्र तत्सकामत्वरूपकारणा-भावेऽपि दृष्टिविभ्रमरूपकार्य्योत्पत्तिसत्त्वात् विभावनालङ्कारः ; सा च भयादित्यभिधाना-दुक्तनिमित्ता ; तथा शिक्षत इति सम्भावनावगमेऽपि तद्वाचकेवादिशब्दाभावात् प्रतीयमाना भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः । अनयोर्मिथो निरपेक्षतया संसृष्टिः ।

"वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे" इत्यादि विश्वः ।

वंशस्थविलं वृत्तम् ॥२४॥

(व) अपि चेति । सासूयमिव स्वं विना भ्रमरस्य शकुन्तलासम्भोगात्मककृतार्थता-दर्शनादसूयया सहितमिव ।

---

ভ্রমরটা যে যে দিক্ হইতে আসিতেছে, সেই সেই দিকে ( ইনি ) সুন্দর নয়নযুগল নিক্ষেপ করিতেছেন এবং ভ্রূদুইটী ঘুরাইতেছেন। সুতরাং শকুন্তলা আজ কামপ্রবৃত্তিশূন্য হইয়াও, ভয়বশতঃ দৃষ্টিবিলাস শিক্ষা করিতেছেন ॥২৪॥

(ব) আরও, ( অসূয়ার সহিতই যেন )

---

(१) लोकोऽयं विद्यासागरेण प्रक्षिप्तो मन्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करं (१) व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥२५॥

चलेति । हे मधुकर ! भ्रमर ! करं हस्तम्, व्याधुन्वत्या भ्रमरबाधनार्थं वि स्ततः सञ्चालयन्त्याः शकुन्तलायाः, वेपथुमतीं भयादन्यत्र कामावेगात् कम्पान्विता अतएव चलश्चञ्चलः अपाङ्गः प्रान्तभागो यस्यास्ताम्, दृश्यतेऽनयेति दृष्टिर्नयनं ता बहुशो वारं वारम्, स्पृशसि दंशनार्थमित्यर्थः, अन्यत्र तु चुम्बसि । रहस्यं गोपनी विषयम् आचष्ट इति रहस्याख्यायी स इव, कर्णान्तिकचरः कर्णसमीपगामी स मृदु कोमलं क्षुद्रमित्यर्थः, स्वनसि शब्दायसे अन्यत्र तु ब्रवीषि । तथा रतिसर्व सुरतस्य सर्वसम्पत्स्वरूपम्, अधरमोष्ठम्, पिबसि दशसि, अन्यत्र चुम्बसि । वय वयम् अहमित्यर्थः, तत्त्वान्वेषात् 'कस्येयं कन्या मम परिणेया न वा' इति तथा सन्धानात् तदाश्रित्येत्यर्थः, हता मनोहता व्यर्थमनोरथा इति तात्पर्य्यम्, किन्तु त्वं ख त्वमेव कृती कर्म्मकुशलः ।

अत्र भ्रमरस्य कृतित्वं प्रति प्रथमचरणत्रयगतवाक्यार्था हेतव इति वाक्यार्थहेतु काव्यलिङ्गम्, रहस्याख्यायीवेति क्रियोत्प्रेक्षा ; उक्तविधकार्य्यत्रयेण भ्रमरे गुप्तप्रेमि व्यवहारसमारोपात् समासोक्तिः ; उपमानभूतस्य भ्रमरस्य कृतित्वरूपाधिक्यवर्ण व्यतिरेकश्च ; इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ।

"दृग् दृष्टिः" इति "तत्त्वं ब्रह्मणि याथार्थ्ये" इति "मनोहतः प्रतिहतः प्रतिबद्धो हत सः" इति चामरः । "कृती स्यात् कर्म्मकुशले पण्डिते शर्व वर्म्मणि" इति क चन्द्रधृतः कोषः ।

वेपथुरस्या अस्तीति वेपथुमती । वयमिति "वास्मदश्च" इति बहुवचनम् । तत्त्वान्वे माश्रित्येति ल्यप्लोपे पञ्चमी ।

शिखरिणी वृत्तम् ॥२५॥

(१) करौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि च,

लोलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमाम्
आभुग्नेन विवर्त्तिता वलिमता मध्येन कम्रस्तनी ।
हस्ताग्रं विधुनोति पल्लवनिभं शीत्कारभिन्नाधरा
जातेयं भ्रमराभिलङ्घनभिया वाद्यैर्विना नर्त्तकी ॥२६॥

लोलामिति । कम्रौ कमनीयौ स्तनौ यस्याः सा तादृशी, इयं शकुन्तला, भ्रू-लतयोर्विभ्रमेण भ्रमणेन विलासेन च सहेति सभ्रूलताविभ्रमाम्, लोलां चञ्चलाम्, दृष्टिं चक्षुः, इतस्ततः सर्वासु दिक्षु, वितनुते विस्तार्य्य प्रेरयति । कुतो भ्रमर आगच्छतीत्येतत्-परीक्षार्थं लोकमोहनार्थञ्चेति भावः । आभुग्नेन ईषत् वक्रीभूतेन, वलिमता चर्म्म-तरङ्गवता, मध्येन देहमध्यभागेन, विवर्त्तिता भ्रमरदंशनादात्मत्राणाय किञ्चित् किञ्चित् परिवर्त्तिता, भङ्गीविशेषप्रदर्शनाय परिवर्त्तिता च । तथा शीत्कारेण भ्रमरदंशन-त्रासजनितेन शीदिति शब्देन भिन्नौ वियुक्तौ अधरौ यस्याः सा तथाविधा सती, पल्लवनिभं पल्लववत् रक्तकोमलम्, हस्ताग्रम्, विधुनोति भ्रमरबाधनाय भङ्गीविशेषप्रदर्शनाय च सञ्चालयति । अतएव भ्रमरेण यदभिलङ्घनमाक्रमणं तस्मात् भिया भयेन, वाद्यैर्विना नृत्यकालीनवाद्यानि विना, नर्त्तकी नर्त्तकीरूपा जाता । अतीवाश्चर्य्यमिदमिति भावः ।

अत्रापि नर्त्तकीरूपेण जातत्वं प्रति प्रथमचरणत्रयगतवाक्यार्थत्रयस्य हेतुत्वात् पूर्ववत् काव्यलिङ्गम्; तथा "मुखं तव कुरङ्गाक्षि! सरोजमिति नान्यथा" इति दर्पणोदाहृतवत् समासाभावेऽपि निरङ्गं केवलरूपकम्; तत्र वाद्यैर्विनेत्यभिधानादधिका-रूढवैशिष्ट्यरूपमित्यनयोर्मिथो निरपेक्षतया संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥२६॥

হে ভ্রমর! শকুন্তলা হস্ত সঞ্চালন করিতেছেন, এদিকে তুমি উঁহার চঞ্চলপ্রান্তসমন্বিত চঞ্চলনয়ন বার বার স্পর্শ করিতেছ, গুপ্তভাষার ন্যায় কাণের নিকটে যাইয়া ছোট ছোট শব্দ করিতেছ এবং সুরতসর্ব্বস্ব অধর পান করিতেছ। অতএব তত্ত্বান্বেষণ করিয়া আমি ব্যর্থমনোরথ হইলাম, আর তুমিই চরিতার্থ হইলে ॥২৫॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

শকু। হলা! পরিত্তাঅধ পরিত্তাঅধ মং ইমিণা দু মহুঅরেণ অহিহূঅমাণং (১)। (য)

উভে। সস্মিতম্‌। কা অহ্মো পরিত্তাণে। এত্থ দাব দুস্সন্ অক্কন্দ, জদো রাঅরক্খিদাইং তবোবণাইং (২)। (ষ)

(য) হলা! পরিত্রায়েথাং পরিত্রায়েথাং মামনেন দুষ্টমধুকরেণাভিভূয়মানাম্‌।

(য) শকু ইতি। পরিত্রায়েথাং যুবামিতি শেষঃ। অভিভূয়মানাম্‌ অত্যন্তমেবাকু ক্রিয়মাণাম্‌।

(ষ) উভে ইতি। অনসূয়াপ্রিয়ংবদে দ্বে এবেত্যর্থঃ। সামান্যমধুকরত্বো সকিঞ্চিৎকরমেব; তথাপি শকুন্তলা নিতরামেবাকুলীভূতা ইত্যতঃ কৌতুকাৎ স্মি তস্মাদেব কৌতুকাদাহ কে ইত্যাদি। কে অসমর্থে ইত্যর্থঃ, স্ত্রীমাত্রত্বাদিতি ম আক্রন্দ আহ্বয়। যত ইতি। ভীতেন রক্ষকাহ্বানস্যৌচিত্যাদিতি ভাবঃ। "ক্রন্দনে রোদনাহ্বানে" ইত্যমরঃ।

আরও, এই কমনীয়স্তনী শকুন্তলা, ভ্রূবিলাসের সহিত চক্ষ ইতস্ততঃ সঞ্চালন করিতেছেন, ঈষৎ বক্র এবং চর্ম্মতরঙ্গশালী (বিশিষ্ট) দেহমধ্যভাগদ্বারা বার বার ফিরিতেছেন, পল্লবতুল্য হ সঞ্চালন করিতেছেন এবং ওষ্ঠযুগল শীৎকারে বিশ্লিষ্ট হইতেছে; অ ভ্রমরদংশনের ভয়ে বাদ্য ব্যতীত নর্ত্তকী হইয়াছেন ॥২৬॥

(শ) শকুন্তলা। ওলো! এই দুষ্ট ভ্রমর আমাকে অত্যন্ত করিয়া তুলিয়াছে; তা আমাকে রক্ষা কর রক্ষা কর।

(১) শকুন্তলা। ণ এসো ধিট্টো বিরমই, অণ্ণদো গমিস্সং। পদান্তরে সদৃষ্টিক্ষেপম্‌। কধং ইদোবি আঅচ্ছই। হলা! পরিত্তাঅধং মং দুব্বিণীদেণ মহুঅরেণ অহিহূঅমাণং।

(২) কা বঅ পরিত্তাদু।···রাঅরক্খিদব্বাই তপোবণাই ণাম।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। অবসরঃ খল্বয়মস্মাকমাত্মানং দর্শয়িতুম্। ন ভেতব্যং ন ভেতব্যম্। ইত্যর্দ্ধোক্তে স্বগতম্। এবং হি রাজাহমস্মীতি পরিজ্ঞানং ভবিষ্যতি। ভবতু, অতিথিসমাচারমেবাবলম্বিষ্যে (১)। (স)

---

(ষ) কে আবাং পরিত্রাণে। অব তাবৎ দুষ্মন্তমাক্রন্দ; যতো রাজরক্ষিতানি তপোবনানি।

---

(স) রাজেতি। অবসরঃ সময়ঃ; মৎপ্রস্তাবস্যোত্থানাদিত্যাশয়ঃ। 'ন ভেতব্যং ন ভেতব্যম্, অয়মহমুপস্থিত এবাস্মি' ইতি বাক্যসমুদায়স্য 'ন ভেতব্যং ন ভেতব্যম্'-ইত্যয়মংশঃ অর্দ্ধ এব স্যাদত আহ ইত্যর্দ্ধোক্তে ইতি। এবং হি দুষ্মন্তপ্রস্তাবোত্থানানন্তরমেব আত্মপ্রকাশে, রাজা দুষ্মন্তরূপঃ। পরিজ্ঞানং পরিচয়ঃ। তথা চ সতি, অতর্কিতভাবেন কন্যাসমবায়ান্তিকে রাজ্ঞ এবোপস্থিতিঃ কথমিতি মহান্ সন্দেহঃ স্যাদিতি ভাবঃ। ভবতু পরিজ্ঞানমিতি পূর্বেণান্বয়ঃ। অতিথেঃ সমাচারং ব্যবহারম্। অবলম্বিষ্যে আশ্রয়িষ্যে। এবঞ্চ অতিথীনামতর্কিতভাবেনৈব সর্বত্রোপস্থিতেন সন্দেহসম্ভব ইত্যাশয়ঃ।

---

(ষ) অনসূয়া ও প্রিয়ংবদা। (ঈষৎ হাস্যের সহিত) আমরা রক্ষা করিতে কে?। এবিষয়ে দুষ্মন্তকে ডাক; যে হেতু তপোবনগুলি রাজার রক্ষিত।

(স) রাজা। আপনাকে দেখাইবার আমার এই-ই অবসর। ভয় করিবেন না, ভয় করিবেন না। (এই অর্দ্ধোক্তির পর স্বগত) ইহাতে 'আমি রাজা' ইহা পরিচয় হইবে; হউক, অতিথির আচরণই অবলম্বন করিব।

---

(১) অবসরোঽয়মাত্মানং প্রকাশয়িতুম্।...রাজভাবস্ত্বভিজ্ঞাতো ভবেৎ। ভবতু, এবং তাবদভিধাস্যে।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । स्वैरं स्वैरं गच्छन्तु भवत्यः । आश्रमबाधा य
न भवति, तथाहमपि यतिष्ये (१) । (ख)

सख्यौ । महाभाअ ! विदिदभूइट्ठोसि । सम्पदं
आरमज्झत्थदाए अवरद्ध ह्म ; तं मरिसेहि, असम्भाविदस
भूओ वि पच्चवेक्खणणिमित्तं अज्जं विस्सवेह्म (२) । (ग)

(ग) महाभाग ! विदितभूयिष्ठोऽसि । साम्प्रतमुपचारमध्यस्थतया अप
राद्धाः ; तन्मर्षय, असम्भावितसत्कारं भूयोऽपि प्रत्यवेक्षणनिमित्तमार्य्यं विज्ञापयामः।

मेवाव्ययं विशेषविषादसूचकम्, तस्यातिशये द्विरुक्तिः । एकस्मिन् स्थाने
यावदेकभावेनावस्थाने रक्तादीनां गमनागमनवन्धात् अङ्गानां स्तम्भो भवतीति
मेवानुभवविषयः । शकुन्तलाया अपि तथैकभावेनोपवेशनात् ऊरुस्तम्भ इति
ऊरुस्तम्भेन विह्वला व्याकुला । इतः शीघ्रगमनमावश्यकम्, इतश्च ऊरुस्तम्भात्
न चलतीति हेतोरिति भावः ।

(ख) राजेति । स्वैरं स्वैरं मन्दं मन्दम् । तथा च इदानीमपि इ
प्रति न किञ्चित् कारणमुपस्थितमिति भावः । तत्र हेतुमाह आश्रमेति ।

"मन्दस्वच्छन्दयोः स्वैर"मित्यमरः ।

(ग) सख्याविति । महान् भागो भाग्यं यस्य तत्सम्बोधनम् । विदित

(क) शकुन्तला । (গতিরোধ অভিনয় করিয়া) হায়!
ঊরুস্তম্ভবশতঃ আমি বিহ্বলা হইয়াছি ।

(খ) রাজা । আপনারা ধীরে ধীরে গমন করুন। যা
আশ্রমের ক্ষতি না হয়, আমিও সেইভাবে চেষ্টা করিব ।

(१) राजा । अलम्भ्रमम् । गच्छन्तु भवत्यः । वयमप्याश्रमपीडा
भवति, तथा प्रयतिष्यामहे । सर्वे उत्तिष्ठन्ति ।

(२) सख्यौ । अज्ज ! असम्भाविदअदिहिसक्कारा भूओ पेक्खणणिमि
अज्जं विण्णविदुं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। मा मैवम्। दर्शनेनैव भवतीनां सम्भूत-सत्कारोऽस्मि (१)। (घ)

शकु। हला अणसूए! अहिणव-कुस-सूइ-परिक्खद मे चलणं, कुरुवअ-साहा-परिलग्गं च वक्कलं, दाव परिवालेध मं जाव णं मोआवेमि। इति राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता। (ङ)

भूयिष्ठं बहुलम् अस्माकमाचारमनोभावादिर्येन सः। एतेन शकुन्तलाया अपि मनोभावावगमात् पुनरपि तवागमनमावश्यकमेवेति सूचितम्। उपचारे भवतः सत्कारे मध्यस्थतया उदासीनतया, अपराद्धाः अपराधिन्यः स्मो वयमिति शेषः; अवश्यकर्त्तव्याकरणादिति भावः। तत् अपराद्धत्वम्, मर्षय क्षमस्व। असम्भावितः अस्माभिरनिष्पादितः सत्कारः सेवा यस्य सः। अतएव भूयः पुनरपि प्रत्यवेक्षणनिमित्तं सन्दर्शनार्थम्। दर्शनदानाय सत्कारलाभाय च भवता पुनरप्यत्रागन्तव्यमिति प्रार्थयाम इति तात्पर्य्यम्।

(घ) राजेति। एवम् असम्भावितसत्कारत्वम्, मा मा न खलु न खलु जातमिति शेषः। तत्र हेतुमाह दर्शनेनैवेत्यादि। सम्भूतसत्कारः सञ्जातसत्कारः। तथा च प्रीतिकरो व्यापारो नाम सत्कारः। तेन च भवतीनां दर्शनेन ईदृशी मे प्रीतिः जाता, यथा व्यापारान्तरेण तादृशी कर्त्तुं न शक्यते। एवञ्च सत्काराकरणात् यदपराद्धत्वमात्मनामुद्घोषितं तदपि न जातमित्याशयः।

(গ) সখীদ্বয়। মহাশয়! বহুতর জানিয়াছেন। আপনার সেবায় ঔদাসীন্য করায় এখন আমরা অপরাধী হইয়াছি; তা ক্ষমা করুন। আপনার সেবা করা হয় নাই বলিয়া আবারও দর্শনদানের জন্য আপনাকে জানাইতেছি।

(ঘ) রাজা। না না; এরূপ হয় নাই। আপনাদের দর্শনেই আমার সৎকার হইয়াছে।

(१)···भवतीनां पुरस्कृतोऽस्मि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । निश्वस्य । गताः सर्वाः । भवतु, अहमपि गच्छा- शकुन्तलादर्शनादेव मन्दौत्सुक्योऽस्मि नगरगमनं प्रति यावदनुयात्रिकाननतिदूरे तपोवनस्य निवेशयामि । न ख- शक्तोऽस्मि शकुन्तलादर्शनव्यापारादात्मानं निवर्त्तयितु- मम हि—(१) (च)

---

(ङ) हला अनसूये ! अभिनव-कुश-सूचि-परिक्षतं मे चरणम्, कुरुवक-शा- परिलग्नञ्च वल्कलम् । तावत् प्रतिपालयतं माम्, यावदेनं मोचयामि ।

---

(ङ) शकु इति । अभिनवस्य कुशस्य सूच्या अग्रभागेन परिक्षतम् । वल्- परिहितवल्कलञ्च, कुरुवकस्य वृक्षविशेषस्य शाखायां परिलग्नम् असावधानतया संल- प्रतिपालयतं प्रतीक्षेथाम् । एनं वल्कलम । व्याजेन वल्कलमोचनच्छलेन - सव्याजम् । एतेन राजानं प्रति महाननुरागो व्यज्यते ।

अतएवात्र अनुरागरूपस्य बीजस्य पुनरुत्पत्तेरुद्भेदो नाम मुखसन्धेरङ्गम्—"बीज- प्ररोहः स्यादुद्भेदः" इति लक्षणात् ।

(च) राजेति । भवतु सर्वासामेव गमनमिति शेषः । अत्र तु निवार- एव नास्तीति भावः । अहमपि गच्छामि, अत्रावस्थानस्य निष्फलत्वादित्याशयः । मन्दीभूतम् औत्सुक्यमुद्योगो यस्य सः, नगरगमनं प्रति राजधान्यां गमनविषये अवा-

---

(ঙ) শকুন্তলা । ওলো অনসূয়া ! নূতন কুশাগ্রে আমার ক্ষত হইয়াছে এবং বল্কলখানি কুরুবকশাখায় লাগিয়া পড়িয়াছে; আমার জন্য প্রতীক্ষা কর, যাবৎ ইহা মুক্ত করি । ( এই বলিয়া রাজ- দেখিতে দেখিতে কপটতাবশতঃ বিলম্ব করিয়া, সখীদ্বয়ের স- চলিয়া গেল । )

---

(१) राजा । मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान् नातिदूरेण तपोवनस्य निवेशयेयम् । न खलु शक्नोमि शकुन्तलाव्यापाराद- निवर्त्तयितुम् । मम हि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥२६॥

---

यदि शकुन्तलां लभेयमित्याशयेत्यभिप्रायः। यावत् सर्वान्। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः। अनुयात्रिकान् अनुचरान्। निवेशयामि स्थापयामि; आश्रमबाधानिवृत्त्यर्थमिति भावः।

अतएवात्र करणं नाम मुखसन्धेरङ्गम्—"करणं पुनः। प्रकृतार्थसमारम्भः" इति लक्षणात्।

पुनरनुरागावस्थां व्यनक्ति न खल्विति। आत्मानं मनः। अनुरागाकर्षणस्य दुर्निवारत्वादित्याशयः।

गच्छतीति। ममेति प्रागुक्तमत्रान्वेति। तथा च मम शरीरम्, पुरः अग्रतो गच्छति, तपोवनस्यातिदूरे अनुयात्रिकाणां निवेशनार्थमिति भावः। किन्तु, प्रतिवातं वायोः प्रतिकूलं वाताभिमुखं यथा स्यात्तथा, नीयमानस्य केतोर्ध्वजस्य, चीनांशुकम् उपरिबद्धं राङ्कवं वस्त्रमिव तत्पताकेत्यर्थः, असंस्थितम् अस्थिरं चञ्चलमिति यावत्, चेतश्चित्तम्, पश्चाद्दिशि धावति वेगेन गच्छति; शकुन्तलारूपादिभिः समाकर्षणादित्याशयः। यथा ध्वजदण्डे वाताभिमुखं नीयमाने, तदीयपताका वायुना पश्चाद्दिशि चाल्यते; तथा शरीरे अनुयात्रिकाभिमुखं नीयमानेऽपि मनः शकुन्तलानुरागेण तां प्रति पश्चाद्दिशि चाल्यत इति सरलार्थः।

अत्र श्रौतोपमालङ्कारः। गच्छति पुरः शरीरमित्यनन्तरं सामर्थ्यादेव किन्त्वर्थावगमो भवतीति तदनुक्तावपि न न्यूनपदत्वदोषः "क्वचिन्न दोषो न गुणः" इति दर्पणाभिधानात्।

---

(চ) রাজা। ( নিশ্বাস ত্যাগ করিয়া ) সকলেই গেল। হউক, আমিও যাই। শকুন্তলার দর্শনবশতই রাজধানীতে যাইতে মন্দোৎসাহ হইয়াছি। অনুচরদিগকে তপোবনের অতিদূরে সংস্থাপিত করি। শকুন্তলার দর্শনব্যাপার হইতে আপনাকে নিবৃত্ত করিতে সমর্থ হইতেছি না। কারণ—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति निष्क्रान्ताः सर्वे (१)। (छ)

# प्रथमोऽङ्कः ॥०॥ (ज)

"चीनो देशे शतन्तुषु । स्त्रीही वस्त्रे" इति हेमचन्द्रः । तेन च चीननिर्म्मितमंशुकम् चीनांशुकम् इति मध्यपदलोपी समासः ।

आर्य्या जातिः ॥३६॥

(छ) इतीति । इति इत्युक्तेः परम् । राज्ञः केचन शरीररक्षिण आसन्निति मन्तव्यम्, ते च तदानीं दूरे अवस्थिताः, तैः सह राज्ञो बहुत्वात् बहुवचनं सर्वशब्दः दानञ्च सङ्गच्छते ।

पूर्वं शकुन्तलादीनाम् इदानीञ्च राज्ञः प्रस्थानेन संहतिभेदनात् भेदो नाम मुखसन्ध्यङ्गम्—"भेदः संहतिभेदनम्" इति दर्पणलक्षणात् ।

(ज) प्रथम इति । अङ्कः परिच्छेदः समाप्त इति शेषः ।

"प्रत्यक्षनेतृचरित" इत्यादि "अन्तनिष्क्रान्तनिखिलपात्रोऽङ्कः" इत्यन्तमङ्कलक्षणं साहित्यदर्पणे अनुसन्धेयम् ।

"अङ्कः स्थानेऽन्तिके मन्तौ रूपकोत्सङ्गलक्ष्मसु । नाटकादिपरिच्छेदे चिह्नभूषणयोः ॥" इति विश्वः । एवमन्यत्रापि बोध्यम् ।

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायाम् अभिज्ञानशकुन्तलटीकायामभिज्ञानकौमुद्यां प्रथमाङ्कविवरणं समाप्तम् ॥०॥

---

যেমন বায়ুর প্রতিকূলে ধ্বজ সঞ্চালিত করিলে, তাহার পতাকা পিছনের দিকে যায়, সেইরূপ আমার শরীর সম্মুখে যাইতেছে; কিন্তু অস্থির চিত্ত পিছনের দিক্ দৌড়াইতেছে ॥৩৬॥

(ছ) (ইহার পর সকলেই চলিয়া গেল।)

## (জ) প্রথম অঙ্ক ॥০॥

---

(१) क्वचित् इतिशब्दो नास्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्वितीयोऽङ्कः ।

—०:*:०—

ततः प्रविशति विदूषकः (१)। (क)

(क) तत इति। शृङ्गारिनायकस्य सहायविशेषो विदूषकः। तथा च साहित्य-दर्पणे—

"शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः।
भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः॥"

विदूषकस्य लक्षणमपि तत्रैव। यथा—

"कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः॥"

इतः प्रभृति तृतीयाङ्कगत-'स्पृष्टा जनेन समदुःखसुखेन बाला' इत्यादिश्लोकात् पूर्वपर्य्यन्तः प्रतिमुखसन्धिः। तथा चात्र शकुन्तलासम्मेलनरूपफलप्राप्तौ अतित्वरान्वितभावेन राज्ञो दुष्मन्तस्य शकुन्तलान्वेषणात्मकव्यापाररूपः प्रयत्नो नाम द्वितीया कार्य्यावस्था निबद्धा। यथा तत्रैव—

"प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः।"

एवं शकुन्तलादुष्मन्तयोः सम्मेलनरूपफलस्य प्रधानोपायभूतो यस्तयोः परस्परानुरागो मुखसन्धौ निविष्टः, तस्यात्र "कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि" इत्यादिना दुष्मन्ते लक्ष्यतया उद्भेदः; शकुन्तलायान्तु स्पष्टानभिधानात् अवस्थया सूचितत्वाच्च अलक्ष्य इव उद्भेदः कविना सन्दर्शितः। यथा तत्रैव—

"फलप्रधानोपायस्य मुखसन्धिनिवेशिनः।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत्॥"

अस्य तु विलासादीनि त्रयोदश अङ्गानि यथास्थानं निवेश्य लक्षणानि वक्ष्यामः।

(क) তদনন্তর বিদূষকের প্রবেশ।

(१) विप्रो विदूषकः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू । निश्वस्य । भो ! हदोह्मि (१) एदस्स मिअआ-सीलस्स रसो वअस्सभावेण णिव्विसो (२) अअं मिओ, अअं वराहो, अअं सद्दूलो त्ति मज्झन्दिणेवि गिह्मे विरलपादव-च्छाआसु वणराइसु आहिण्डिअ पत्तसङ्करकसाअविरसाइं उह्मकडुआइं पिज्जन्ति गिरिणईसलिलाइं (३) (ख)

(ख) भोः ! हतोऽस्मि एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विः अयं मृगः, अयं वराहः, अयं शार्दूल इति मध्यन्दिनेऽपि ग्रीष्मे विरलपादपच्छा- वनराजिषु आहिण्ड्य पत्रसङ्करकषायविरसानि उष्णकटुकानि पीयन्ते गिरिन-

(ख) विदू इति । भो इति विषादसूचकमव्ययम् । "भोस्तु सम्बोधनविषादः" इति मेदिनी । वयस्यभावेन सख्येन । निर्विःस्तः प्राप्तनिर्वेदो दुःखित इति या- तत्कारणमाह अयमित्यादि । दिनस्य मध्यमिति मध्यन्दिनम् "धेन्वनडुहादयश्च" नि- निपातः । ग्रीष्मे ग्रीष्मकाले मध्यन्दिनेऽपि मध्याह्नेऽपि । एतेन तापाधिक्यं सूचित- विरला अन्तरान्तरातपयुक्ताः पादपानां वृक्षाणां छाया यासु तासु, वनराजिषु वनश्रे- आहिण्ड्य विचर्य्य । "हिडि गतौ" इत्यस्य क्त्वाप्रत्ययप्रयोगः । पत्राणां नानाजाती- वृक्षपर्णानां सङ्करेण सम्मिश्रणेन कषायाणि सनिर्यासानि अतएव विरसानि कुत्सित- तथा उष्णानि च तानि आतपतापादिति भावः कटुकानि अल्पकटुरसानि चेति ग- गिरिनदीसलिलानि पर्व्वतप्रस्रवणजलानि पीयन्ते । अन्येषां सुस्वादुजलानामल- ईदृशजलपानस्य च गुरुतरक्लेशजनकत्वात् निर्विःस्त इति भावः ।

कषायविरसानि उष्णकटुकानीति च "प्रसन्नकर्कशा भारती" "भाष्यं प्रसन्नग- इत्यादिवत् परपदस्य विशेषत्वविवक्षया कर्म्मधारयः । कटुकेति अल्पार्थे कप्रत्ययः ।

(খ) বিদূষক। (নিশ্বাস ত্যাগ করিয়া) হায়! মারা গে- এই মৃগয়াসক্ত রাজার বয়স্যরূপে কষ্ট ভোগ করিয়া। গ্রীষ্মকালে মে-

(१) दिट्ठं । (२) णिव्विसो ह्मि (३) मज्झण्णेवि । गिह्मविरलरुक्ख- च्छाआसु वणराइसु आहिण्डीअदि कडुआइं गिरिणइजलाइं पीअन्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অণিঅদবেলঞ্চ উস্সোস্সমংসভূইট্ঠং ভুঞ্জীঅদি (১) (গ)। তুরঅ-গআণাং চ সদ্দেণ রত্তিং পি মে ণত্থি পকামসুইদব্বং (২) (ঘ)। মহন্তে জ্জেব পচ্চূসে দাসীএ পুত্তেহিং সাউণিঅলুদ্ধেহিং কণ্ণোপ-ঘাদিণা বণগমণকোলাহলেণ পড়িবোধিদহ্মি (ঙ)। এত্তি-

সলিলানি। (গ) অনিয়তবেলঞ্চ উষ্ণোষ্ণমাংসভূয়িষ্ঠং ভুজ্যতে। (ঘ) তুরগগজানাঞ্চ শব্দেন রাত্রাবপি মে নাস্তি প্রকামশয়িতব্যম্। মহত্যেব প্রত্যূষে দাস্যাঃ পুত্রৈঃ শাকুনিক-লুব্ধৈঃ কর্ণোপঘাতিনা বনগমনকোলাহলেন প্রতিবোধিতোঽস্মি। (ঙ) এতাবতাপি মে

(গ) অনিয়তেতি। অনিয়তা অনির্দ্দিষ্টা বেলা কালো যস্মিন্ কর্ম্মণি তদ্যথা তথা; আপেক্ষিকসুবিধয়া কদাচিৎ পূর্ব্বাহ্নে কদাচিৎ মধ্যাহ্নে কদাচিদপরাহ্ণ ইত্যর্থঃ, উষ্ণোষ্ণানি শৈত্যসম্পাদনাবসরাভাবাৎ অত্যুষ্ণানি মাংসান্যেব ভূয়িষ্ঠানি বহুলানি যস্মিন্ তৎ। এতেন চিরাভ্যস্তভোজনাভাবাৎ মহৎ দুঃখং সূচিতম্।

(ঘ) তুরগেতি। কিঞ্চেতি চার্থঃ। রাত্রাবপি তুরগগজানাং সৈন্যান্তর্গতঘোটক-হস্তিনাম্, শব্দেন কণ্ঠধ্বনিনা প্রকামশয়িতব্যং যথেষ্টনিদ্রা। সুষ্ঠু নিদ্রাভাবেনাপি গুরুতরং দুঃখমিতি ভাবঃ।

(ঙ) ননু প্রায়েণ প্রভাতে হস্তিঘোটকাদীনাং শব্দনিবৃত্তিদর্শনাৎ তত্রৈব প্রকামং

দুপুরের সময়েও এই হরিণ, এই শূকর এবং এই বাঘ এই করিয়া বনশ্রেণীর ভিতরে বিচরণ করিতে হয়; তাহাতে গাছের ছায়া কমই পাওয়া যায়; তাহাতে আবার পার্ব্বত্যনদীর যে জল পান করা হয়, সেগুলি গাছের পাতা পড়ায় কসও বিরস এবং রৌদ্রের তাপে গরম, আর স্বভাবতই কটু। (গ) তার পর অনির্দ্দিষ্ট সময়ে খাইতে হয়, সে খাদ্যের মধ্যে আবার গরম গরম মাংসই বেশী। (ঘ) এদিকে রাত্রিতেও যে একটু ইচ্ছামত ঘুমাইব তাহাও হাতী-ঘোড়ার শব্দে

(১) অণিঅদবেলং সুলভমংসভূইট্ঠো আহারো অণ্হীঅই।

(২) তুরগাণুধাবণকণ্ডিদসন্ধিণো রত্তিম্মি ণিকামং সইদব্বং ণত্থি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

কেণ বি মে পীড়া ণ সংবুত্তা; জদো অঅং গণ্ডস্স উবরি বিপ্‌ফোড়ও সংবুত্তো (১) (চ)। তেণ হি কিল অম্মেসুং অবহীণেসুং তত্থভঅদা মিআণুসারিণা অস্সমপদং পবিট্ঠেণ মম অধন্নদাএ সউন্তলা ণাম কাবি তবস্সিকঞ্ঞআ দিট্ঠা, তং পেক্খিঅ সম্পদং ণঅরগমণস্স কথম্পি ণ করেদি (২) (ছ)।

পীড়া ন সংবৃত্তা, যতঃ অয়ং গণ্ডস্য উপরি বিস্ফোটকঃ সংবৃত্তঃ। (চ) তেন হি কিল অস্মাসু অবহীনেষু তত্রভবতা মৃগানুসারিণা আশ্রমপদং প্রবিষ্টেন মম অধন্যতয়া শকুন্তলা

শব্দতামিত্যাহ মহত্যেবেতি। মহত্যেব প্রত্যূষে প্রত্যূষকালে দাস্যাঃ পুত্রৈর্নিতান্তনীচৈঃ শাকুনিকলুব্ধৈঃ পক্ষিহিংসকব্যাধৈঃ কর্তৃভিঃ, কর্ণোপঘাতিনা কর্কশত্বাৎ কর্ণপীড়াজনকেন, বনগমনে তৎকালে কোলাহলেন করণেন, প্রতিবোধিতো জাগরিতঃ। তৎ ভুক্ত প্রভাতেঽপি নিদ্রেতি ভাবঃ।

শকুনান্‌ পক্ষিণো হিংসন্তীতি শাকুনিকাঃ, তে চ তে লুব্ধাশ্চেতি শাকুনিকলুব্ধাঃ "ব্যাধো মৃগবধাজীবো মৃগয়ুর্লুব্ধকোঽপি সঃ" ইত্যমরঃ।

(চ) ততোঽধিকমপি দুঃখমাহ এতাবতেতি। এতৎপরিমাণেনাপি অসুবিধাসমূহেনেত্যর্থঃ। পীড়া অসহ্যদুঃখম্‌, সংবৃত্তা সঞ্জাতা। গণ্ডস্য কপোলস্য। বিস্ফোটঃ নিতান্তপীড়াকরী ব্রণবিশেষঃ, সংবৃত্তঃ সঞ্জাতঃ। তেনৈবাসহ্যং দুঃখং জাতমিতি ভাবঃ।

পারি না। (ঙ) তার পর অতিপ্রত্যূষেই বাঁদীর পো পাখীমারা ব্যাধগুলির বনগমনকালের কর্ণপীড়াজনক কোলাহলে জাগিয়া উঠি। (চ) এততেও আমার সেরূপ কষ্ট হয় নাই। কিন্তু যে হেতু গালের উপরে এই একটা বিস্ফোট হইয়াছে, সেই জন্যই অসহ্য কষ্ট হইতেছে।

(১) এত্তএণ দাণিং বি পীড়া ণ ণিক্কমদি। তদো গণ্ডস্স উবরি পিণ্ডবো সংবুত্তো।

(২) হিম্মো কিল অম্মেসু ওহীণেসু তত্তহোদো মিআণুসারেণ অস্সমপদং পবিট্ঠস্স তাবসকঞ্ঞআ সউন্তলা ণাম মম অধন্নদাএ দংসিদা। সংপদং ণঅরগমণস্স কহং বি ণ করেই।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं ज्जेव चिन्तअस्स मे पहादा अच्छिसु रअणी, का गदी। जाव णं किदआआरपरिग्गहं पिअवअस्सं पेक्खामि (१) (ज)। परिक्रम्यावलोक्य च। एसो वाणासणहत्थो हिअअ-णिहिद-पिअ-

नाम कापि तपस्विकन्यका दृष्टा, तां प्रेक्ष्य साम्प्रतं नगरगमनस्य कथामपि न करोति। (छ) एवमेव चिन्तयतः मे प्रभाता अक्ष्णोः रजनी, का गतिः। यावदेनं कृताचारपरिग्रहं प्रियवयस्यं प्रेक्षे। (ज) एष बाणासनहस्तः हृदयनिहितप्रियजनः,

(छ) दुःखान्तरमाह तेनेति। तेन उक्तविधेन दुःखप्रवाहेण पीड्यमानेष्वित्यर्थः, अवहीनेषु वेगेन राज्ञो गमनात् पश्चात् स्थितेषु सत्स्विति तात्पर्य्यम्, तत्रभवता माननीयेन राज्ञा, मृगानुसारिणा मृगस्य पश्चात् धावता, आश्रमपदं तपोवनम्, प्रविष्टेन सता। अधन्यतया पुण्यशून्यतया मन्दभाग्यतयेत्यर्थः। कथामपि प्रस्तावमपि। ततश्च मोऽस्मच्छान्तिलाभोपायोऽपि नास्तीत्याशयः।

(ज) एवमिति। एवमेव इत्थमेव, चिन्तयतः शयित्वैव भावयतः। अक्ष्णोश्चक्षुषोरपि, रजनी प्रभाता, बहिरालोकप्रसरणात् बहिः सर्वथैव प्रभाता, शयनकुञ्जेऽप्यालोकागमनात् चक्षुषोरपि प्रभातेत्यर्थः, का गतिः शान्तिलाभे क उपायः, अपि तु कापि नास्तीत्यर्थः। कृत आचारपरिग्रहः मृगयोचितवेशधारणं येन तम्।

(छ) তাহাতে আবার রাজা, আমাকে পিছনে ফেলিয়া, অত্যন্তবেগে একটা হরিণের অনুসরণ করিতে করিতে, তপোবনে প্রবেশ করিয়া, আমারই দুরদৃষ্টবশতঃ শকুন্তলা নামে কোনও তপস্বিকন্যাকে দেখিয়াছেন; তাহাকে দেখিয়া এখন আর বাড়ী যাওয়ার নামও করেন না। (জ) শয়ন করিয়া এইরূপই কেবল চিন্তা করিতেছিলাম, এই অবস্থায় আমার চোখে রাত পোহাইয়া গিয়াছে; তা উপায় কি? যাহা হউক, মৃগয়াবেশধারী প্রিয়সখার সহিতই সাক্ষাৎ করি। (ঝ) (পদক্ষেপ-

(१) अज्जवि तस्स तं एव्वं चिन्तअन्तस्स अच्छीसु पहादं आसि···किदाचार··· परिक्कमं (किदद्दारपरिग्गहं)।

CC-0, Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অণ্ণো বণপুপ্ফমালাহারী ইদো জ্জেব আঅচ্ছদি পিঅবঅস্সো (১) (ঝ)। ভোদু, অঙ্গ-ভঙ্গ-বিঅলো ভবিঅ চিট্টিস্সং। এব্বম্পি ণাম বিস্সামং লহেঅ (২)। ইতি দণ্ডকাষ্ঠমবলম্ব্য স্থিতঃ। (ঞ)

ততঃ প্রবিশতি যথানির্দ্দিষ্টো রাজা (৩)। (ট)

বনপুষ্পমালাধারী ইত এব আগচ্ছতি প্রিয়বয়স্যঃ। (ঝ) ভবতু, অঙ্গভঙ্গবিকলো ভূত্বা স্থাস্যামি। এবমপি নাম বিশ্রামং লভেয়।

(ঝ) পরীতি। পরিক্রম্য কিয়ন্তং পদক্ষেপং কৃত্বা। বাণান্ অস্যতি ক্ষিপতীতি বাণাসনং ধনুঃ হস্তে যস্য সঃ, হৃদয়ে নিহিতঃ স্থাপিতঃ প্রিয়জনঃ শকুন্তলা তাৎপর্য্যং যস্য সঃ, প্রিয়াং শকুন্তলাং চিন্তয়ন্নিত্যর্থঃ। এতত্তু নয়নভঙ্গ্যাদিনা অনুমিতমিতি বোধ্যম্।

(ঞ) ভবত্বিতি। ভবতু পুনরপি মৃগানুধাবনাদিপ্রস্তাব ইতি শেষঃ। অঙ্গানাং কটিদেশপ্রভৃত্যবয়বানাং ভঙ্গেন অস্বাস্থ্যব্যঞ্জককৌটিল্যকরণেন বিকলঃ অস্বাভাবিকাবস্থঃ। এবমপি অঙ্গভঙ্গবিকলভাবেনাবস্থানেনাপি। নাম সম্ভাবয়ামি। ঈদৃগবস্থাদর্শনাৎ অস্বাস্থ্যানুমানেন মাং প্রতি রাজ্ঞো বিশ্রামানুমতিদানস্যৈব সর্ব্বথা সম্ভাবিভাবঃ। দণ্ডকাষ্ঠং কাষ্ঠময়ং দণ্ডম্।

(ট) তত ইতি। যথানির্দ্দিষ্টঃ বাণাসনহস্তাদিরূপঃ।

পূর্ব্বক দর্শন করিয়া) এই যে বনপুষ্পমালাধারী প্রিয়বয়স্য, মনে মনে প্রিয়জনের চিন্তা করতঃ, ধনু হাতে করিয়া এই দিকেই আসিতেছেন। (ঞ) হউক, অঙ্গ-ভঙ্গ-বিকল হইয়া থাকি। দেখি ইহাতেও যদি বিশ্রাম লাভ করিতে পারি। (এই বলিয়া যষ্টি অবলম্বন করিয়া থাকিল।)

(১) বাণাসণহত্থাহিং জবণীহিং বণপুপ্ফমালাধারিণীহিং পরিবুদো···। (২) বিস্সমিস্সং ··· (৩) যথানির্দ্দিষ্টপরিবারো রাজা।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । आत्मगतम् (१) ।

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि (२) ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥१॥

---

काममिति । प्रिया शकुन्तला, कामं यथेष्टम्, न सुलभा अत्यनायासलभ्या न कथञ्चिदायासेन लभ्या तु स्यादेवेत्यर्थः । तथा च मां प्रति तस्या अनुरागे सत्यपि पराधीनतया आत्मदानासम्भवात् न अत्यनायासलभ्या, सख्यादिभिर्मत्कुलशीलावस्थादिवर्णनेन कण्वादीनां तत्प्रभूणां सम्मतिसम्भवात् कियदायासलभ्या तु स्यादेवेति भावः । तु किन्तु, मनो मम चित्तम्, तस्याः शकुन्तलाया भावदर्शनेन अनुरागव्यञ्जकस्निग्धदृष्ट्याद्यवलोकनेन आश्वसिति तत्प्राप्तिसम्भावनाजनितानन्दमनुभवतीति तत् तथोक्तं जातमिति शेषः । ननु लिप्सिताया असुलभत्वे कथमाश्वासानन्द इत्याह अकृतार्थेऽपीति । मनसिजे कामे, अकृतार्थेऽपि तत्फलीभूतसुरतसुखानुत्पत्त्या अचरितार्थे सत्यपि, उभयप्रार्थना नायकनायिकयोः परस्परप्राप्त्याकाङ्क्षा, रतिं सम्भाव्यमानं सम्मेलनानन्दम्, कुरुते जनयति । अतएव च मम मनस्तद्भावदर्शनाश्वासि जातमेवेत्याशयः ।

अत्र परार्द्धसामान्येन पूर्वार्द्धविशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः, तथा अप्रस्तुतात् नायकनायिकात्मकोभयसामान्यात् प्रस्तुतयोर्दुष्मन्तशकुन्तलारूपयोर्विशेषनायकनायिकयोः प्रतीतेरप्रस्तुतप्रशंसा च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः ।

तथात्र शकुन्तलायां दुष्मन्तस्य समीहाकरणात् विलासो नाम प्रतिमुखसन्ध्यङ्गम् । यथा साहित्यदर्पणे—

"समीहा रतिभोगार्था विलास इति कथ्यते ।"

इदमेव तत्रोदाहृतं द्रष्टव्यम् । आर्या जातिः ॥१॥

---

(ট) (তাহার পর নির্দ্দিষ্টরূপে রাজার প্রবেশ ।)

রাজা । (স্বগত) প্রিয়তমা শকুন্তলা একেবারে সুলভ নহে ; কিন্তু তথাপি আমার মন তাহার অবস্থা দেখিয়া আশ্বস্ত হইয়াছে ।

---

(१) क्वचित् आत्मगतमिति नास्ति । (२) तद्भावदर्शनायासि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मितं कृत्वा। एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विप्रलभ्यते (१)। कुतः—(२) (ठ)

स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।
मा गा इत्युपरुद्धया यदपि तत्सासूयमुक्ता सखी,
सर्व्वं तत् किल मत्परायणमहो कामः (३) स्वतां पश्यति॥

(ठ) स्मितमिति। स्मितम् आत्मनो भ्रान्तत्वसूचकं मन्दहास्यं कृत्वेत्यर्थः आत्मनो भ्रान्तत्वमेव व्यनक्ति एवमिति। एवम् अनेन प्रकारेण अहमिवेत्यर्थः, आत्मनः प्रायेण निजमनोवृत्तेरानुरूप्येणेति तात्पर्य्यम्, सम्भाविता निरूपिता इष्टजनस्य नायकस्य नायिकाया वा चित्तवृत्तिर्मनोभावो येन सः, प्रार्थयिता कामयिता जनः, विप्रलभ्यते प्रतार्य्यते। तथा च कश्चिज्जनो जनान्तरस्य भावविशेषमभिलक्ष्य "मयि खल्वयमनुरक्त" इत्येवं मन्यमानो यदा तस्मिन् प्रसक्तुमुपक्रमते, तदा तु तद्भावस्य विषयान्तरगतत्वात् स्वाभाविकतया वा स खल्विष्टजनः प्रकुप्यति उदास्ते उपहसति वा। तेन च सः इष्टजनेन प्रतारित एव भवतीति सरलार्थः। इत्यञ्च तेषां शकुन्तलाभावानां विषयान्तरगतत्वेनापि सम्भवात् मयाहं प्रतारित एव भवामीति भावः। ननु आत्माभिप्रायेण आत्मविषये तादृशी इष्टजनचित्तवृत्तिः कथं सम्भाविता, यत् एवमित्यादि सामान्यमुपन्यस्तमित्याह कुत इति।

स्निग्धमिति। तया शकुन्तलया, नयने नेत्रद्वयम् अन्यतः अन्यस्मिन् ...

তাহার কারণ এই যে, কাম চরিতার্থ না হইলেও, নায়ক-নায়িকার পরস্পরের প্রার্থনা, পরস্পরের আনন্দ জন্মাইয়া থাকে ॥১॥

(ঠ) (ঈষৎ হাস্য করিয়া) নিজের মনোবৃত্তি অনুসারে যিনি ইষ্টজনের মনোবৃত্তি স্থির করেন, সেই প্রার্থী ব্যক্তি এইরূপই প্রতারিত হন। কারণ—

(१) विडम्ब्यते। (२) क्वचित् कुत इति नास्ति। (३) कामी।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। तथास्थित एव। भो महाराअ! ण मे हत्थो पसरदि, ता वाआमेत्तेण जआवीअसि। जअदु जअदु भवं (१)। (ङ)

प्रेरयन्त्यापि प्रकाश्यभावेन निक्षिपन्त्यापि, स्निग्धं सानुरागम्, यत् वीक्षितं गोपनीयभावेन ताराद्वयं सञ्चाल्य मयि दृष्टिपातः कृतः; नितम्बयोर्गुरुतया स्थूलत्वेन भारवत्तया, विलासादिव मयि विभ्रमं प्रदर्श्येव, यत् मन्दं यातम् अल्पमल्पं गमनं कृतम्; तथा मा गा न गच्छ इति इत्थम्, उपरुद्धया प्रियंवदाकर्त्तृकमनुरुद्धया सत्या शकुन्तलया सखी प्रियंवदा, यदपि तत् "दाणिं किं तुह आपणीअम्हि" इत्यादिपूर्वोक्तप्रकारम्, सासूयं सेर्ष्यं यथा स्यात्तथा, उक्ता। तत् सर्वम्, अहमेव परम् अयनम् आश्रयो विषयो यस्य तत् तादृशम्, किल सम्भावयामीत्यर्थः। अहो आश्चर्य्यम्, कामः कामाविष्टः, स्वतां परविषयाणामपि भावानामात्मविषयताम्, पश्यति उत्प्रेक्षते सम्भावयतीत्यर्थः। तथा च तेषां शकुन्तलाभावानां पदार्थान्तरविषयकतायाः स्वाभाविकतायां वा सम्भवेऽपि यन्मया मद्विषयकत्वं सम्भावितम्, एतदेव मे भ्रान्तत्वम्। तेन च यदैवाहं तद्वशेन तस्यां प्रसक्तुं प्रवर्त्तिष्ये तदैव तया प्रकुप्यन्त्या उदासीनया उपहसन्त्या वा सत्या प्रतारणीय इति भावः।

अत्र कामः स्वतां पश्यतीति सामान्येन पूर्वविशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः। "वार्त्तासम्भाव्ययोः किल" इत्यमरः। शार्दूलविक्रीडितं वृत्तम् ॥२॥

---

শকুন্তলা অন্যদিকে নয়নযুগল নিক্ষেপ করিয়াও যে অনুরাগের সহিত দৃষ্টিপাত করিয়াছেন এবং আমাকে বিলাসভাব দেখাইবার জন্যই যেন নিতম্বযুগলের ভারবশতঃ যে অল্প অল্প গমন করিয়াছেন, আর "যাইও না" এইরূপ উপরোধ করিলে পর, অসূয়ার সহিত সখীকে সেই যাহা কিছু বলিয়াছেন, সে সমস্ত আমার বিষয়ে (করিয়াছেন)। কি আশ্চর্য্য! কাম পরবিষয়ক ব্যাপারকেও স্ববিষয়ক বলিয়া মনে করে ॥২॥

(১)…इत्यपाणा पसरन्ति…जीआवइस्स।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। विलोक्य सस्मितम् (१)। कुतोऽयं गात्रोपघातः। (ढ

विदू। कधं कुदो त्ति, सअं ज्जेव अच्छिं भञ्जि

अच्छु कारणं पुच्छसि (२)। (ण)

---

(ड) भो महाराज! न मे हस्तः प्रसरति, तत् वाचामात्रेण जाप्यसे। ज

जयतु भवान्।

(ण) कथं कुत इति, स्वयमेव अक्षि भङ्क्त्वा अश्रुकारणं पृच्छसि।

---

(ड) विदू इति। दण्डकाष्ठमवलम्ब्य वक्रभावेन स्थित एव। प्रसरति आयो उत्थानावश्यकत्वेऽपि उत्थातुं न शक्नोमि गात्रोपघातादिति भावः। तत् तस्मात्, वा मात्रेण केवलेन वाक्येन, न पुनर्हस्तस्याप्युत्तोलनेनेत्यर्थः, जाप्यसे जयपात्रीक्रियसे। वाचेति वाक्शब्दात् टाप्। तथा च—

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
टापञ्चापि हलन्तानां यथा वाचा निशा गिरा॥"

जाप्यस इति जयन् प्रयुज्यत इति इनि "क्रिजिक्रीङामिनि" इति जेरा आकारः "अर्त्तिह्री" इत्यादिना पकारागमश्च।

(ढ) राजेति। कुतः कारणात्। गात्रोपघातः अङ्गवैकल्यम्।

---

(ড) বিদূষক। (সেইভাবে থাকিয়াই) মহারাজ! আম হাত চলিতেছে না; তাই কেবল বাক্যদ্বারা আপনার সংব করিতেছি। আপনার জয় হউক, আপনার জয় হউক।

(ঢ) রাজা। (দেখিয়া ঈষৎ হাস্যের সহিত) তোমার এই বৈকল্য হইল কেন?।

(ণ) বিদূষক। নিজেই চোখে আঘাত করিয়া—'চোখের জ পড়িতেছে কেন?' ইহা জিজ্ঞাসা করিতেছ কি জন্য?।

---

(१) क्वचित् विलोक्य सस्मितमिति नास्ति।

(२) कुदो किल सअं अच्छी आउलीकरिअ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। न खल्ववगच्छामि, भिन्नार्थमभिधीयताम् (१)। (त)

विदू। जं वेदसो खुज्जस्स लीलं विड़म्बेदि, तं किं अत्तणो पहावेण? अधवा णईवेअस्स? (२)। (थ)

राजा। नदीवेगस्तत्र कारणम्। (द)

विदू। मम वि भवं। (ध)

(थ) यत् वेतसः कुब्जस्य लीलां विड़म्बयति, तत् किम् आत्मनः प्रभावेण? अथवा नदीवेगस्य?।

(ध) ममापि भवान्।

(ण) विदू इति। अक्षि भङ्क्त्वा नयनमुपमर्द्य, कुत इति कथमिदमस्रु? इत्थम् अस्रुणः निर्गतस्य तन्नयनजलस्य कारणम्, कथं पृच्छसीत्यन्वयः। भवानेव मम तद्गात्रोपघातस्य कारणमित्याशयः।

(त) राजेति। अवगच्छामि तव वाक्यार्थमिति शेषः। भिन्नः शक्त्या व्यङ्ग्यार्थात् पृथक् कृतः अर्थो यस्य तत् भिन्नार्थं स्पष्टार्थं वाक्यमित्यर्थः।

(थ) विदू इति। वेतसः स्वनामख्यातो लताविशेषः, यत् कुब्जस्य जनस्य, लीलां क्रियां कुब्जभावमित्यर्थः, विड़म्बयति अनुकरोति, तत्कुब्जलीलाविड़म्बनम्, प्रभावेण शक्त्या। नदीवेगस्य प्रभावेणेति सम्बन्धः।

(द) राजेति। अत्र कुब्जलीलाविड़म्बने। तथा च नदीवेग एव वेतसं कुब्जं करोति, स्वयन्तु स सरल एवेत्यर्थः।

(ত) রাজা। বুঝিতে পারিলাম না। স্পষ্ট করিয়া বল।

(থ) বিদূষক। বেত যে কুব্জলোকের অবস্থার অনুকরণ করে, সে কি নিজের শক্তিতে? না—নদীবেগের শক্তিতে?।

(দ) রাজা। সে বিষয়ে নদীর বেগই কারণ।

(१) क्वचित् भिन्नार्थमभिधीयताम् इति नास्ति।

(२) भो वअस्स!···खुज्जलीलं···णं णईवेअस्स।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । कथमिव ? । (न)

विदू । जुत्तं णाम एव्वं, जं तुए रज्जकज्जाइं उज्झि तादिसं अक्खलिदपदं पदेसं च वणचलवित्तिणा होद न्ति । किं एत्थ मन्तीअदु, अहं वह्मणो पच्चहं सापदाणुस णेहिं संक्खोहिदसन्धिवन्धणाणं अत्तणो अङ्गाणं अणीसो ता पसीद मे, एक्काहम्पि दाव विसमीअदु (१) । (प)

(प) युक्तं नाम एवम्, यत् त्वया राजकार्य्याणि उज्झित्वा तादृशं अस्खलित प्रदेशञ्च वनचरवृत्तिना भवितव्यमिति । किमत्र मन्त्र्यताम्, अहं पुनर्ब्राह्मणः प्र श्वापदानुसरणैः संक्षोभितसन्धिवन्धनानामङ्गानामनीशोऽस्मि । तत् प्रसीद मे, एक मपि तावद्विश्रम्यताम् ।

(ध) विदू इति । तद्वत् ममापि गात्रोपघाते भवान् कारणमित्यर्थः ।

(न) राजेति । कथमिव तव गात्रोपघाते अहं कारणमित्यर्थः ।

(प) विदू इति । एवं भवतश्चरित्रम्, युक्तं नाम सङ्गतं सम्भाव्यते, "अ वहु तव किमुच्यते" इत्यादिवद्विपरीतलक्षणया अतीवायुक्तं सम्भाव्यत इत्यर्थः किन्तदि यदिति । उज्झित्वा परित्यज्य । न स्खलितं न प्रच्युतं पदं त्राणं यस्मि सर्वदैव रक्षोपायसम्पन्नमित्यर्थः प्रदेशं राजधानीञ्च, उज्झित्वेत्यन्वयः, वन सततवनविचरणशीलस्य व्याधस्य वृत्तिरिव वृत्तिर्व्यवहारो यस्य तेन तादृशेन भवि तव्येति शेषः । तथा च पालनात्मकं राजकार्य्यं विहाय यत् हिंसात्मिका

(ध) विदूषक । आमारओ तुमि ।

(न) राजा । कि रकम ? ।

(१) एव्वं रायकज्जाइ उज्झिय एयारिसे पाउलप्पदेसे वणयरवुत्ति होदव्वं । नं सच्चं पच्चहं सावदसमुच्चारयेहिं. संखोहियसन्धिवन्धणाणं मम अ अणीसोह्मि संवुत्तो । तापसादइस्सं विसज्जिदुं मं एक्काइं वि विस्समिदुं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। आत्मगतम्। अयमेवमाह, ममापि कण्वसुतामनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः। तथाहि—(१) (फ)

क्रियते, यच्च सर्वथा निरापदं राजधानीं परित्यज्य नानाविपत्सङ्कुले वने विचर्य्यते, तदतीवायुक्तमित्याशयः।

"पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः।

नन्वास्तां तावत् तत् सर्वमयुक्तम्, तथापि तव गात्रोपघाते कथमहं कारणमिति मत्प्रश्नस्य भवतः किमुत्तरमित्याह किमिति। अत्र भवत्प्रश्ने, किं मन्यतां मया उत्तरं दीयतां स्वयं चिन्तामात्रेणैव ज्ञातव्यत्वात् मदुत्तरस्य कापि नापेक्षास्तीत्यर्थः। परन्तु स्पष्टमाह अहमिति। शुनां कुक्कुराणामापदो येभ्यस्ते श्वापदा हिंस्रजन्तवो व्याघ्रादयः तेषामनुसरणैः भवद्भिः सार्द्धं पश्चात् पश्चात् धावनैः संक्षोभितानि सञ्चालितानि सन्धिबन्धनानि संयोगस्थानस्थबन्धा येषां तेषाम् अङ्गानां हस्तपदादीनाम् अनीशः सञ्चालनादौ असमर्थः; गुरुतरवेदनानुभवादित्यर्थः। अतएव श्वापदानुसरणे मां प्रत्यनुमतिकरणेन मम गात्रोपघाते भवानेव कारणमिति भावः।

(फ) राजेति। कण्वसुतां शकुन्तलाम्, अनुस्मृत्य चिन्तयित्वा चिन्तया मृगैः सह शकुन्तलायाः सम्पर्कोऽस्तीत्यवधार्य्य।

---

(প) বিদূষক। ইহা সঙ্গতই হইতেছে যে; তুমি রাজ্যের কার্য্য এবং সেইরূপ নিরাপদস্থান পরিত্যাগ করিয়া, একেবারে ব্যাধবৃত্তি হইয়াছ। আমি তোমার এ প্রশ্নের কি উত্তর দিব; আমি ব্রাহ্মণ হইয়া প্রতিদিন হিংস্রজন্তুর অনুসরণ করিতেছি; তাহাতে আমার প্রত্যেক সন্ধিস্থানের বন্ধনগুলি, স্থানভ্রষ্ট হইয়াছে; সুতরাং আমি নিজের অঙ্গ সঞ্চালন করিতে পারিতেছি না। অতএব আমার প্রতি প্রসন্ন হও; একটী দিনের জন্যও বিশ্রাম কর।

---

(१) स्वगतम्। अयं चैवमाह। ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः। कुतः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ন নময়িতুমধিজ্যমুৎসহিষ্যে (১)
ধনুরিদমাহিতসায়কং মৃগেষু।
সহবসতিমুপেত্য যৈঃ প্রিয়ায়াঃ
কৃত ইব লোচনকান্তিসংবিভাগঃ ॥৩॥

নেতি। অধ্যারূঢ়া জ্যা গুণো যত্র তদধিজ্যম্, তথা আহিতঃ ক্ষেপণায় ধৃতঃ সায়কো বাণো যত্র তদাহিতসায়কম্, ইদং ধনুঃ, মৃগেষু হরিণেষু হরিণান্ লক্ষ্যীকৃত্য নময়িতুম্ আকষ্টুম্, ন উৎসহিষ্যে ন শক্ষ্যামি। কথমিত্যাহ সহেতি। যৈঃ সহবসতিম্ একত্রাবস্থানং তন্নিবন্ধনং সৌহার্দ্দমিতি তাৎপর্য্যম্, উপেত্য প্রাপ্য, প্রিয়ায়াঃ শকুন্তলায়াঃ সম্বন্ধে, লোচনয়োশ্চক্ষুষোঃ কান্তেঃ শোভায়াঃ সংবিভাগঃ সম্যক্ প্রদানং কৃত ইব। তথা চ প্রিয়ায়াঃ সুহৃৎসু মমাপি সৌহার্দ্দস্যৌচিত্যাৎ রক্ষণমেব ন্যায্যং ন পুনর্হিংসেত্যাশয়ঃ।

অত্র পূর্ব্বার্দ্ধং প্রতি পরার্দ্ধবাক্যার্থো হেতুরিতি বাক্যার্থহেতুকং কাব্যলিঙ্গমলঙ্কারঃ, বাচ্যা ভাবাভিমানিনী ক্রিয়োৎপ্রেক্ষা চ, অনয়োঃ পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ। তদ্বৈ চ হরিণনয়নমিব শকুন্তলানয়নং সুন্দরমিত্যুপমা ব্যজ্যত ইত্যলঙ্কারেণালঙ্কারধ্বনিঃ।

পুষ্পিতাগ্রা বৃত্তম্ ॥৩॥

(ফ) রাজা। (স্বগত) ইনি এইরূপ বলিতেছেন; এ শকুন্তলাকে মনে করিয়া, আমার চিত্তও মৃগয়ার প্রতি নিরু হইয়াছে। কারণ—

গুণ আরোপিত আছে, বাণও তাহার উপর স্থাপিত রহিয়াছে তথাপি কিন্তু হরিণগণের প্রতি এ ধনু আকর্ষণ করিতে পারিতেছি কারণ, যে হরিণগণ একত্র অবস্থাননিবন্ধন (বন্ধুতাবশতঃ) আপন নয়নের সৌন্দর্য্য, প্রিয়তমা শকুন্তলাকে যেন ভাগ করিয়া দিয়াছে।

(১) অস্মি শক্তঃ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। राज्ञो मुखमवलोक्य। अत्तभवं किम्पि हिअए कदुअ मन्तेदि, अरस्से क्खु मए रुदिदं (१)। (ब)

राजा। सस्मितम्। अनतिक्रमणीयं सुहृद्वाक्यमिति स्थितोऽस्मि (२)। (भ)

विदू। सपरितोषम्। तेण हि तुमं चिरं जीव (३)। इत्युत्थातुमिच्छति। (म)

(ब) अत्र भवान् किमपि हृदये कृत्वा मन्त्रयति, अरण्ये खलु मया रुदितम्।

(म) तेन हि त्वं चिरं जीव।

---

(ब) विदू इति। हृदये कृत्वा चिन्तयित्वेत्यर्थः मन्त्रयति स्वयमेव गुप्तं भाषते। अतएव मया खलु अरण्ये रुदितम् अरण्यरोदनमिव अनर्थकमुक्तम्, भवता अन्यमनस्कतया अश्रुतत्वादित्याशयः।

(भ) राजेति। सुहृदो भवतो वाक्यम्, अनतिक्रमणीयम् अलङ्घनीयम्, इति हेतोः, स्थितोऽस्मि अवस्थितोऽस्मि किमपि कथनात् विरतोऽस्मीत्यर्थः।

(म) विदू इति। सपरितोषं परितोषव्यञ्जकं मुखप्रफुल्लतादिकमभिनीयेत्यर्थः। तेन हि मद्वाक्यरक्षणेनैव हेतुना। उत्थानं विश्रामार्थं गमनायेति शेषः।

---

(ब) বিদূষক। (রাজার মুখের দিকে দৃষ্টিপাত করিয়া) তুমি মনে-মনে চিন্তা করিয়া কোন বিষয় আলোচনা করিতেছ, আর আমি অরণ্যে রোদন করিলাম।

(ভ) রাজা। (ঈষৎ হাস্যের সহিত) বন্ধুর বাক্য লঙ্ঘন করা যায় না, এই জন্য নীরব রহিয়াছি।

(ম) বিদূষক। (সন্তোষের সহিত) তা হইলে তুমি দীর্ঘজীবী হও। (এই বলিয়া চলিয়া যাইবার জন্য উঠিল।)

---

(१) अरण्ये मए रुदिदं आसि। (२) किमन्यत्। अनतिक्रमणीयं मे…। (३) विदूषकः। चिरं जीव।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । तिष्ठ, शृणु मे सावशेषं वचः (१) । (य)

विदू । आणवेदु भवं । (र)

राजा । विश्रान्तेन भवता ममान्यस्मिन्ननायासे कर्म्मणि सहायेन भवितव्यम् (२) । (ल)

विदू । किं मोदअ खज्जिआए (३) । (व)

(र) आज्ञापयतु भवान् ।

(व) किं मोदकखादिकायाम् ।

---

(य) राजेति । सावशेषम् अवशेषपर्य्यन्तम् । तथा च उक्तमात्रं शुत्वा न गन्तव्यम्, वक्ष्यमाणमपि श्रोतुं त्वया स्थातव्यमित्यर्थः ।

(ल) राजेति । विश्रान्तेन कृतविश्रामेण । "गत्यर्थाकर्म्मक" इत्यादिना वर्त्तमाने कर्त्तरि क्तः । अन्यस्मिन् मृगयाभिन्ने, न विद्यते आयासो यस्मिन् तत्र अनायाससाध्ये इत्यर्थः ; अतो न परिश्रमभयादस्वीकारः कर्त्तव्य इति भावः ।

(व) विदू इति । मोदकं लड्डुकविशेषस्तस्य खादिकायां खादने किं भवतः सहायेन भवितव्यमित्यर्थः । अनायाससाध्यत्वात्तत्र तवाहमवश्यमेव सहायो भविष्यामीति भावः । औदरि प्रायेण खाद्यपरमेव व्यवहरतीति कौतुककरमेतत् । अत्र नर्म्म नाम प्रतिमुखसन्धेरङ्गम्—"परिहासवचो नर्म्म" इति लक्षणात् । खादिकेति प्रश्ने खादधातोः "प्रश्नाख्यानयोरिञ् च वा" इति वुञ् प्रत्ययः ।

---

(য) রাজা । থাম ; শেষপর্য্যন্ত আমার কথা শোন ।

(র) বিদূষক । আদেশ কর ।

(ল) রাজা । তুমি বিশ্রাম করিয়া, অনায়াসসাধ্য অন্য কার্য্যে আমার সহায় হইবে ।

(ব) বিদূষক । কি মোদকভক্ষণে ?।

---

(१) वयस्य ! तिष्ठ सविशेषं मे वचः । (२)···ममाप्येकस्मिन्···।

(३) किं मोदअखण्डिआए । तेण हि अअं सुगहीदो जणो ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। यद्वक्ष्यामि (१)। (अ)

विदू। गहीदो क्खणो (२)। (ष)

राजा। कः कोऽत्र भोः !। (स)

दौवारिकः। प्रविश्य। आणवेदु भट्टा। (ह)

राजा। रैवतक ! सेनापतिस्तावदाह्वयताम्। (क्ष)

दौवा। तह। इति निष्क्रम्य सेनापतिना सह प्रविश्य। एदु एदु

(ष) गृहीतः क्षणः।

(ह) आज्ञापयतु भर्त्ता।

(अ) राजेति। यद्वक्ष्यामि, तत्र सहायेन भवितव्यमित्यर्थः।
विदूषकेण उक्तविधे परिहासे कृतेऽपि राज्ञो धैर्य्यादत्र नर्म्मद्युतिर्नाम प्रतिमुखसम्बं रङ्गम्—"धृतिस्तु परिहासजा। नर्म्मद्युतिः" इति लक्षणात्।

(ष) विदू इति। क्षणः समयः अवणावसर इत्यर्थः, गृहीतः स्वीकृतः, अवणसमाप्तिं यावत् स्थास्यामीति तात्पर्य्यम्।

(स) राजेति। भो इति परिजनसम्बोधने। कः कः परिजनः तिष्ठतीति शेषः।

(ह) दौवेति। द्वारि नियुक्तो दौवारिकः। भर्त्ता स्वामी राजेति यावत्।

(क्ष) राजेति। रेवती नामिकायाः स्त्रिया अपत्यमिति रैवतकः। अपत्यार्थे अण्प्रत्ययान्तात् रैवतशब्दात् संज्ञायां कप्रत्ययः।

(श) রাজা। যে বিষয় বলিতেছি।

(ষ) বিদূষক। শুনিবার অবসর লইলাম।

(স) রাজা। ওহে! এখানে কে কে আছ?।

(হ) দৌবারিক। (প্রবেশ করিয়া) মহারাজ আদেশ করুন।

(ক্ষ) রাজা। রৈবতক! সেনাপতিকে ডাক।

(१) यत्र वक्ष्यामि। कः कोऽत्र भोः !। (२) अयं पाठः क्वचित् नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अज्जो । एस आलावदिस्सकस्सो भट्टा इध ज्जेव चिट्ठदि, सप्पदु णं अज्जो (१) । (क)

सेनापतिः । राजानमवलोक्य स्वगतम् । दृष्टदोषापि स्वामिनि केवलं गुणायैव संवृत्ता । तथाहि देवः—(२)

(क) तथा । एतु एतु आर्य्यः । एष आलापदत्तकर्णः भर्त्ता इह एव उपसर्पतु एनमार्य्यः ।

(क) दौवेति । तथा यथा भवानाज्ञापयति तथा करोमीत्यर्थः । तव मम च कथोपकथने दत्तौ प्रेरितौ कर्णौ येन सः, भर्त्ता राजा । आर्य्यः भवान् ।

(ख) सेनापति इति । दृष्टः प्रत्यक्षसिद्धः दोषः हिंस्रजन्तुभ्यो विपद् अमव्याकुलतादिर्यस्यां सा दृष्टदोषापि अन्यस्मिन् जने इत्यर्थः, मृगया पशुहिंसा, राजनि, केवलमेकम्, गुणायैव गुणसम्पादनायैव । तथाहि तमेवार्थं जानीहि । गणपरिपठितो धातुर्गतौ" इति कातन्त्रपरिशिष्टटीकायां गोपीनाथः । देवी एतच्च विभक्तीतिश्लोकक्रियायाः कर्त्तृपदम् ।

(क) দৌবারিক। তাহাই। (এই বলিয়া নির্গত সেনাপতির সহিত পুনরায় প্রবেশ করিয়া) আসুন আসুন আ এই যে আমাদের আলাপে কাণ দিয়া মহারাজ এইখানেই রহি আপনি ইঁহার নিকট যান।

(খ) সেনাপতি। (রাজাকে দেখিয়া স্বগত) মৃগয়ার প্রত্যক্ষ দেখিতে পাইলেও, মহারাজের প্রতি তাহা কেবল বর্ত্তিয়াছে। কারণ—

(१)···एसो अणवधाणकण्णो इदो दिण्णादिट्ठी एव्व भट्टा चिट्ठदि। उवसप्पदु

(२) सेनापतिः। राजानमवलोक्य। दृष्टदोषापि स्वामिनि मृगया गुणाय एव संवृत्ता।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অনবরতধনুর্জ্যাস্ফালনক্রূরবর্ষ্মা (১)
রবিকিরণসহিষ্ণুঃ স্বেদলেশৈরভিন্নঃ (২)।
অপচিতমপি গাত্রং ব্যায়তত্বাদলক্ষ্যং
গিরিচর ইব নাগঃ প্রাণসারং বিভর্ত্তি ॥৪॥

অনেতি। অনবরতং সততং ধনুষো জ্যায়া গুণস্য আস্ফালনেন ক্রূরং কঠিনং বর্ষ্ম শরীরং যস্য সঃ, অতএব রবিকিরণান্ সূর্য্যরশ্মীন্ সহিষ্ণুঃ ন পুনস্তেভ্যঃ ক্লান্ত ইত্যর্থঃ, তথা স্বেদলেশৈঃ ঘর্ম্মবিন্দুভিঃ অভিন্নঃ অবিগলিতঃ অবিহ্বল ইতি তাৎপর্য্যম্। তেন চ গিরৌ পর্ব্বতে চরতীতি গিরিচরঃ সর্ব্বদা পর্ব্বতসঞ্চারী, নাগো হস্তীব, অপচিতমপি উক্ত-বিধপরিশ্রমাৎ ক্ষীণমপি, ব্যায়তত্বাৎ পরিচ্ছদপরিবৃতত্বেন ব্যায়ততয়া অতিশয়েন বিশালস্থূলতয়া লক্ষ্যমাণত্বাদিত্যর্থঃ, অলক্ষ্যং কৃশতয়া অদৃশ্যম্, তথা প্রাণো বলমেব সারঃ স্থিরাংশো যত্র তৎ প্রাণসারং গাত্রম্ অঙ্গনিবহম্, বিভর্ত্তি ধারয়তি। তথা চ অন্যো রাজা আজন্মসুখলালিততয়া কোমলদেহঃ রবিকিরণাসহিষ্ণুঃ ঘর্ম্মৈর্বিহ্বলঃ হিংস্রজন্তুভ্যো বিপন্নশ্চ ভবতি, অতএব তাদৃশী মৃগয়া দুষ্টদোষৈব; অস্মাকময়ং রাজা তু মৃগয়াবশাদেব কঠিনদেহঃ রবিকিরণসহিষ্ণুঃ ঘর্ম্মৈরবিহ্বলঃ, হিংস্রজন্তুভ্যঃ অবিপন্নশ্চ। অতএব দুষ্টদোষাপি মৃগয়া স্বামিনি কেবলং গুণায়ৈব সংবৃত্তেতি ভাবঃ।

অত্র শ্রৌতোপমালঙ্কারঃ।

"শরীরং বর্ষ্ম বিগ্রহঃ" ইত্যমরঃ। "ব্যায়তং ব্যাপৃতে দীর্ঘে দৃঢ়ে চাতিশয়েঽন্যবৎ" ইতি মেদিনী। মালিনী বৃত্তম্ ॥৪॥

ধনুর গুণ অনবরত আকর্ষণ করায় মহারাজের দেহ কঠিন হইয়াছে, সূর্য্যের কিরণ সহ্য করিতে পারিতেছে এবং ঘর্ম্মবিন্দু নির্গত হওয়ায় বিহ্বল হইতেছে না। অঙ্গসকল কৃশ হইয়া থাকিলেও, পরিচ্ছদাবৃত থাকায় বিশাল বলিয়া, তাহা লক্ষ্য করা যায় না; সুতরাং পার্ব্বত্য হস্তীর ন্যায় ইনি, কেবল বলসার দেহ ধারণ করিতেছেন ॥৪॥

(১) ক্রূক্রূরপূর্ব্বম্, রকর্ম্মা। (২) রবিকিরণসহিষ্ণুস্বেদলেশৈরভিন্নম্।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपगम्य। जयति जयति स्वामी। स्वामिन्! गृहीत॰ प्रचारं सूचितश्वापदमरण्यम्, तत् किमन्यदनु॰ ताम् (१)। (ग)

राजा। भद्रसेन! भग्नोत्साहः कृतोऽस्मि मृगयापवा॰ माधव्येन (२)। (घ)

(ग) उपेति। उपगम्य राज्ञः समीपं गत्वा। स्वामी प्रभुः। गृहीतः॰ मृगाणां हरिणानां प्रचारो गमनागमनं यस्मिन् तत्, तथा सूचिताः पदचिह्नप्रदर्श॰ स्ववर्गेषु ज्ञापिताः श्वापदा व्याघ्रादयो हिंस्रजन्तवो यस्मिन् तत्। तथा च वनि॰ कुत्र देशे हरिणाः प्रचरन्ति कुत्र वा व्याघ्रादयो अवतिष्ठन्ते तत् अवगतमस्माभि॰ एतेन एतदवगमार्थं सेनापतिं प्रति राज्ञ आज्ञा आसीदिति बोध्यम्। तस्मात्, अन्यत् उक्तकार्य्यद्वयभिन्नं किं कार्य्यम्, अनुष्ठीयतां मया क्रियताम्, तदा॰ मित्यर्थः।

(घ) राजेति। भद्रा उत्कृष्टा सेना यस्य स भद्रसेन इति सेनापतेर्नाम॰ सम्बोधनम्। मृगयापवादिना मृगयाया निन्दाकारिणा, माधवे वसन्ते साधुरिति॰ व्येन तन्नाम्ना विदूषकेणेत्यर्थः। एवञ्च "कुसुमवसन्ताद्यभिधः" इत्यालङ्कारिक॰ संगृहीत इति ज्ञेयम्। भग्नोत्साहो मृगयां प्रति नष्टोद्यमः। तदद्य न कि॰ दनुष्ठातव्यम्, विश्रम्यतामित्याशयः।

(গ) (নিকটে যাইয়া) মহারাজের জয় হউক, জয় ॰ মহারাজ! বনের ভিতরে হরিণগণের বিচরণস্থান জানিয়াছি॰ হিংস্রজন্তুগণেরও অনুসন্ধান করিয়াছি; অতএব আর কি করিব!

(ঘ) রাজা। ভদ্রসেন! মৃগয়ার অপবাদকারী মাধব্য॰ সম্বন্ধে আমাকে ভগ্নোৎসাহ করিয়াছে।

(१) उपेत्य। जयतु स्वामी। गृहीतश्वापदमरण्यं किमत्रावशिष्यते।

(२)…मन्दोत्साहः…माठव्येन।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सेना। जनान्तिकम्। सखे! माधव्य! स्थिरप्रतिज्ञो भव, अहं तावत् स्वामिनश्चित्तवृत्तिमनुवर्त्तिष्ये। प्रकाशम्। देव! प्रलपत्येष वैधेयः, ननु प्रभुरेव निदर्शनम्। पश्यतु देवः (१)। (ङ)

मेदश्छेदकृशोदरं लघु भवत्युत्साहयोग्यं वपुः (२)
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले,
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः॥५॥

(ङ) सेनेति। आत्मना सहापि विदूषकः सखेव व्यवहरतीति सेनापतिरपि 'सखे' इत्येव सम्बोधयति। स्थिरप्रतिज्ञो भव मृगया निवर्त्तनविषये इति शेषः। अनुवर्त्तिष्ये अनुसरिष्यामि। विधेयः आत्मनः कर्त्तव्याकर्त्तव्यज्ञानहीनतया सर्वेषामेव वचने स्थितः, विधेय एव वैधेयो मूर्खः प्रज्ञादित्वात् स्वार्थे अण्। प्रलपति अनर्थकं मृगयामपवदति। नन्विति दृढ़ामन्त्रणे। प्रभुर्भवानेव, निदर्शनं मृगयाया उपकारित्वे दृष्टान्तः।

मेद इति। वपुः शरीरम्, मेदसः देहस्थूलतासम्पादकधातुविशेषस्य छेदेन परिश्रमाधिक्यात् विनाशेन कृशं क्षीणमुदरम्, यत्र तत्, अतएव लघु भारहीनम्, अतएव च उत्साहयोग्यं सर्वेष्वेव कर्म्मसु उद्यमकरणक्षमं भवति। अपि तथा, सत्त्वानां हन्तव्यजन्तूनाम्, भयक्रोधयोः भयकाले क्रोधकाले चेत्यर्थः, विकृतिमत् सञ्जातविकारम्,

(ঙ) সেনাপতি। (বিদূষকের নিকট চুপি চুপি) সখে! মাধব্য! তুমি স্থিরপ্রতিজ্ঞ হও; আমি কিন্তু রাজার মনোবৃত্তি অনুসরণ করিব। (প্রকাশ্যে) মহারাজ! এ মূর্খ, অনর্থক বলিতেছে; কারণ, মৃগয়ার উপকারিতাসম্বন্ধে মহারাজই দৃষ্টান্ত। তাহা মহারাজ দেখুন—

(१) माधव्य! इति सम्बोधनं पश्यतु देवः, इति च क्वचित् नास्ति।
(२) उत्थानयोग्यं वपुः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू । सरोषम् । अवेहि रे उच्छाअहेतुअ । ... पड्डिं आवस्सो, तुमं दाव दासीए पुत्तो अड्डदो...

चित्तं लक्ष्यते चेष्टाविशेषदर्शनेन अवगम्यते । तथा च सति युद्धेऽपि भयस्य क्रोधस्य वा प्रागवगमात् बाहुल्येन सुविधैव जायत इति भावः । ... चार्थः । धन्विनां धनुर्द्धराणाम्, स उत्कर्षः प्राधान्यम्, यत् चले चलति ... इति यावत्, लक्ष्ये शरव्ये, इषवो बाणाः, सिध्यन्ति कृतकार्य्या भवितुमर्हन्ति ... लक्ष्यवेधाय शक्नुवन्तीत्यर्थः । अतएव मृगयां मिथ्या हि मिथ्यैव व्यसनं वदन्ति ... व्यसनम्' इति मन्वादयो मिथ्यैव ब्रुवन्तीत्यर्थः ; व्यसनस्य निरर्थकत्वात् ... उक्तरीत्या सार्थकत्वादित्याशयः । विशेषतश्च ईदृक् विनोद आमोदः, कुतः ... भिन्नात् कस्मात् कार्य्यात् भवति, अपि तु कुतोऽपि नेत्यर्थः । अतएव एष वैयर्थ्य... वेति भावः ।

अत्र मृगयाया व्यसनत्वस्य मित्यात्वं प्रति बहुकारणोपन्यासात् समुच्चयोऽलङ्कारः ... वदन्तीत्यन्तवाक्यं प्रति पूर्ववाक्यत्रयार्थो हेतव इति वाक्यार्थहेतुकं काव्यलिङ्गं ... अप्यस्तीति ; एषाञ्च परस्परनिरपेक्षतया संसृष्टिः ।

"द्रव्यासु व्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः ।

मृगयाया व्यसनत्वमाह मनुः—

"मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः ।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥"

शार्दूलविक्रीड़ितं वृत्तम् ॥५॥

মৃগয়ার পরিশ্রমে মেদধাতু নষ্ট হওয়ায় উদর কৃশ হয় এবং ... হালকা ও উৎসাহের উপযুক্ত হয় ; ভয় এবং ক্রোধের সময় ... চিত্তবিকার বুঝিতে পারা যায় ; ধনুর্দ্ধরদিগের তাহাই প্রাধান্য যে ... শীল লক্ষ্যের প্রতি বাণগুলি কৃতকার্য্য হইতে পারে । অতএব ... মৃগয়াকে যে ব্যসন বলিয়াছেন, তাহা মিথ্যা । কারণ, ... এমন আমোদ কোথায় পাওয়া যায় ॥৫॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आहिण्डन्तो जाव सिआलमिअलोलुअस्स कस्स वि जिसरिच्छस्स मुहे णिवड़िदो होहि (१)। (च)

राजा। सेनापते! आश्रमसन्निकर्षे स्थितोऽस्मीति वचनं ती नाभिनन्दामि। अद्य तावत्—(२) (छ)

(च) अपेहि रे उत्साहहेतुक! अत्रभवान् प्रकृतिमापन्नः, त्वं तावत् दास्याः पुत्रः अटवीतः अटवीमाहिण्डमानः यावत् शृगालमृगलोलुपस्य कस्यापि जीर्णऋक्षस्य मुखे निपतितो भव।

(च) विदू इति। अपेहि दूरं गच्छ। अत्रभवान् माननीयो राजा, प्रकृतिमापन्नः तृप्रणीयेन स्वभावं प्राप्तः। उत्साहजननात् मृपति त्वमिति। दास्याः पुत्रः हीन त्यर्थः, अटवीतः अटवीं वनात् वनम्, आहिण्डमानः पर्य्यटन्, शृगालमृगलोलुपस्य गालहरिणयोर्भक्षणाय अभिलाषिणः। जीर्णऋक्षस्य वृद्धभल्लूकस्य।

(छ) राजेति। आश्रमस्य सन्निकर्षे समीपे। नाभिनन्दामि न प्रशंसामि याभिहितं वचनमभिनन्द्य तदनुसारेण न खलु मृगयायां प्रवृत्तो भवामीत्यर्थः; आश्रम-न्निकर्षे अवस्थानेन तत्रत्यप्राणिनां हननस्य नितरामन्याय्यत्वादिति भावः। अद्य त्वस्य न्तामित्यादिभिः श्लोकस्थक्रियाभिरन्वयः।

(চ) বিদূষক। (ক্রোধের সহিত) ওহে উৎসাহজনক! তুমি রিয়া যাও। রাজা প্রকৃতিস্থ হইয়াছেন। দাসীর ছেলে তুমি, ক বন হইতে অন্য বনে বিচরণ করতঃ, শৃগাল ও মৃগলোভী বৃদ্ধ লুকের মুখে নিপতিত হও।

(ছ) রাজা। সেনাপতি! তপোবনের নিকটে রহিয়াছি;

(१) अत्तभवं पकिदिं आपन्नो। तुमं अडवीदो अड़वीं आहिण्डन्तो घरणासिआ-लुवस्स जिखरिच्छस्स कस्स विमुहे पड़िस्ससि।

(२) भद्र सेनापते! आश्रमसन्निकृष्टे स्थिताः स्मः, अतस्ते वचः...। ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले (१)
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥६॥

गाहन्तामिति । महिषाः, मुहुर्वारं वारं शृङ्गैस्ताडितम् आहतम्, अभिघ्नमिति निपानं जलाशयस्तस्य सलिलं जलम्, गाहन्ताम् आलोडयन्तु । निवृत्तिवशेन भयाशङ्काभावात् यथास्वभावमाचरन्त्विति भावः । एवमन्यत्रापि । हरिणसमूहः, छायायाम् अनातपे देशे बद्धं विहितं कदम्बकं समवेतभावो ये सत्, रोमन्थं गिलितं वस्तु समुद्गीर्य पुनस्तस्य चर्वणम्, अभ्यस्यतु पौनःपुन्ये वराहपतिभिः शूकरश्रेष्ठैः, विस्रब्धैः भयाशङ्काभावेन आश्वस्तचित्तैः पल्वले क्षुद्रजलाशये, मुस्ताक्षतिः मूलोत्पाटनेन मुस्तकानां हानिः, क्रियताम् । इदं अस्मद्धनुः, शिथिलः प्रान्तभागद्वये संश्लेषाभावात् श्लथीभूतः ज्यायाः एकप्रान्तस्य बन्धो यस्य तत् तथाभूतं सत्, विश्रामं लभतां मृगयानिवृत्त्या बाणक्षेपार्थं आकर्षणाभावात्
अत्र गाहन्ताम् इति बहुवचनेन प्रक्रम्य अभ्यस्यतु इत्येकवचनप्रयोगात् भग्नप्रक्रमतादोषः, आत्मनेपदपरस्मैपदाभ्यामन्योऽपि प्रत्ययविषयः ; किञ्च मृगकुलमिति च बहुवचनैकवचनाभ्याम् अपरोऽपि वचनविषयः, पुंलिङ्गनपुंसक अन्यो लिङ्गविषयः, क्रियतामिति कर्मणि प्रत्ययात् इतरो वाच्यविषयः, वराह बहुवचनात् आख्यवचनविषयः पुनर्लभतामिति कर्त्तरि प्रत्ययादपरोऽपि वा सर्वे व भग्नप्रक्रमतादोषाः । तेषां समाधानाय च श्लोक एवं पठनीयः—

शृङ्गैः कासरवृन्दमम्बु सरसो भूयाहतं गाहतां
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम् ।
विस्रब्धं कुरुतां वराहसमितं मुस्ताक्षतिं पल्वले
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥

(१) विस्रब्धं क्रियतां वराहततिभिः···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सेना। यथा प्रभविष्णवे रोचते (१)। (ज)

राजा। तेन हि निवर्त्तय पुरोगतान् धनुर्ग्राहिणः। यथा च मे सैनिकास्तपोवनं नाभिरुन्धन्ति दूरात् परिहरन्ति च, तथा निषेद्धव्याः। पश्य—(२) (झ)

---

एतत्पाठे अभ्यसनामिति "उपसर्गादस्यत्यूहो वा" इति पक्षे रुचादित्वादात्मनेपदम्। शार्दूलविक्रीडितं वृत्तम् ॥८॥

(ज) सेनेति। प्रभविष्णवे प्रभुत्वशीलाय भवते, यथा रोचते, तथैव भवत्वित्यर्थः। प्रभविष्णव इति "भ्राजालङ्कृञ्भुवि" इत्यादिना भवतेरिष्णुच्।

(झ) राजेति। तेन हि विश्रामस्य भवतोऽप्यभिमतत्वेनैव हेतुना। पुरोगतान् अग्रगतान् धनुर्ग्राहिणो धानुष्कान्। नाभिरुन्धन्ति नोत्पीडयन्ति, परिहरन्ति परित्यजन्ति। निषेद्धव्याः सैनिका इत्यन्वयः। ननु तत्तपोवनाभिरोधे को दोष इत्याह पश्येति। दोषं पर्य्यालोचयेत्यर्थः।

---

সুতরাং আপনার কথার প্রশংসা করিয়া মৃগয়ায় প্রবৃত্ত হইতে পারি না। অতএব আজ—

মহিষগণ, শৃঙ্গদ্বারা বার বার সন্তাড়িত সরোবরের জলে অবগাহন করুক; হরিণগণ ছায়াতে সমবেত হইয়া, চর্ব্বিত চর্ব্বণ করুক, বৃহৎ শূকরসমূহ, বিশ্বস্তচিত্ত হইয়া, ক্ষুদ্র জলাশয়ের তীরে মুথা নষ্ট করুক এবং শিথিলগুণ আমার এই ধনু, বিশ্রাম লাভ করুক।৮।

(জ) সেনাপতি। প্রভুর যাহা অভিরুচি।

(ঝ) রাজা। তাহা হইলে অগ্রগামী ধনুর্দ্ধরদিগকে নিবৃত্ত করুন। আমার সৈন্যগণ যাহাতে তপোবনের ক্ষতি না করে এবং দূর হইতেই

---

(१) यत् प्रभविष्णवे रोचते।

(२) तेन हि निवर्त्तय पूर्वगतान् वनग्राहिणः। यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः। पश्य—



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शमप्रधानेषु तपोवनेषु
गूढ़ं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला अपि सूर्य्यकान्ता
ते ह्यन्यतेजोऽभिभवाद्दहन्ति (१) ॥७॥

सेना । यथाज्ञापयति स्वामी ।

---

शमेति । शमः शान्तिरेव प्रधानं येषु तादृशेषु तपोवनेषु, गूढं हि गुप्तमेव भवावस्थायाम् अन्यैरलक्षितमेवेत्यर्थः, दाहो भस्मकरणमेव आत्मा स्वभावो य दाहात्मकं तेजः, अस्ति । हि तथाहि, स्पर्शे अनुकूला गूढतेजस्कतया बहिः अपि, ते प्रसिद्धाः, सूर्य्यकान्ताः स्वनामख्याता मणिविशेषाः, अन्यस्य तेजसः सूर्य अभिभवात् स्पर्शनाक्रमणात्, दहन्ति दाहजनकं तेज उद्‌गिरन्ति । तथा च य स्पर्शानुकूला अपि सूर्य्यकान्ताः सूर्य्यकिरणाक्रमणात् तेज उद्‌गीर्य्य दहन्ति; त शान्तिप्रधानान्येतानि तपोवनानि परैराक्रमणात् मुनिगणद्वारा तेज उद्‌गीर्य कुर्वन्त्येवेति तपोवनाभिरोधो न कर्त्तव्य एव इत्याशयः ।

अतएवात्र दृष्टान्तोऽलङ्कारः ।

"आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरः ।

उपेन्द्रवज्रेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥७॥

---

সে তপোবন পরিত্যাগ করে, সেইভাবে তাহাদিগকে নিষে[ধ] দিবেন। দেখুন—

শান্তিপ্রধান তপোবনে দাহকারী একপ্রকার তেজ [গু...] রহিয়াছে। স্পর্শযোগ্য সূর্য্যকান্তমণিও অন্য তেজের আক্রম[ণে] দাহ করিয়া থাকে ॥৭॥

সেনাপতি। প্রভু যাহা আদেশ করেন।

---

(१) स्पर्शानुकूला इव सूर्य्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। भो उच्छाअहेतुअ! णिक्कम णिक्कम (१)। (ञ) सेनापतिर्निष्क्रान्तः।

राजा। परिजनानवलोक्य। मृगयावेशमपनयन्तु भवन्तः। रैवतक! त्वमपि स्वनियोगमशून्यं कुरु (२)। (ट)

रैव। जं महाराओ आणवेदि (३)। इति निष्क्रान्तः। (ठ)

विदू। किदं भअदा णिम्मक्खिअं; ता इमस्सिं पादव-

(ञ) भोः उत्साहहेतुक! निष्क्राम निष्क्राम।

(ठ) यत् महाराज आज्ञापयति।

(ञ) विदू इति। उत्साहहेतुक! मृगयां प्रति उत्साहजनक!। हेतुकेति कुत्सायां कप्रत्ययः। कुत्सा च विदूषकस्यैव मते।

(ट) राजेति। अपनयन्तु परित्यजन्तु अद्य मृगयाया अकरणीयत्वादिति भावः। रैवत्याः तदाख्यायाः स्त्रिया अपत्यमिति रैवतः "वाणपत्ये" इत्यण् प्रत्ययान्तात् संज्ञायां कप्रत्ययः। रैवतकेति दौवारिकसम्बोधनम्। स्वनियोगम् आत्मानं प्रति आदेशम्, अशून्यं पूर्णं कुरु आदेशं पालयेत्यर्थः। अथवा स्वनियोगं द्वाररक्षारूपमात्मनोऽधिकारम् अशून्यं पूर्णं कुरु पूर्ववत् द्वारमेवेदानीं रक्षेत्यर्थः।

(ঞ) বিদূষক। ওহে উৎসাহজনক! নির্গত হও, নির্গত হও। (সেনাপতি চলিয়া গেলেন।)

(ট) রাজা। (পরিজনবর্গের প্রতি দৃষ্টিপাত করিয়া) তোমরা মৃগয়াবেশ পরিত্যাগ কর; রৈবতক! তুমিও নিজের স্থান পূর্ণ কর।

(ঠ) রৈবতক। মহারাজ যাহা আদেশ করেন। (এই বলিয়া চলিয়া গেল।)

(१) अंसदु दे उच्छाहवुत्तन्तो।

(२) परिजनं विलोक्य। अपनयन्तु भवन्तो मृगयावेशम्।...स्वं नियोगं...।

(३) परिजनः। जं देवो आणवेदि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्छाआ-विरइद-विदाण-सणाहे सिलाअले उववसदु भवं जाव अहम्मि सुहासीणो होमि (१)। (ड)

राजा। गच्छाग्रतः। (ढ)

विदू। एदु एदु भवं। (ण)

उभौ। परिक्रम्योपविष्टौ। (त)

---

(ड) कृतं भवता निर्म्मक्षिकम्; तदस्मिन् पादपच्छाया विरचित-वितान-स शिलातले उपविशतु भवान्; यावदहमपि सुखासीनो भवामि।

(ण) एतु एतु भवान्।

---

(ड) विदू इति। मक्षिकाणामभ्यभाव इति निर्म्मक्षिकम्। अभावार्थे ऽ भावः। स्थानमिदमिदानीं जनशून्यं कृतमित्यर्थः। पादपानां वृक्षाणां छायया वि विहितं यत् वितानं चन्द्रातपः तत्सनाथे तद्युक्ते पादपच्छायात्मकवितानाश तात्पर्य्यम्, शिलातले प्रस्तरोपरि। सुखं यथा स्यात्तथा आसीन उप स्वच्छन्दालापार्थमिति भावः।

(ढ) राजेति। अग्रतः पुरतो गच्छ, मदभिमुखीभवनायेति भावः।

(त) उभाविति। उभौ राजविदूषकौ। परिक्रम्य पादक्षेपं कृत्वा।

---

(ড) বিদূষক। তুমি স্থানটীকে একেবারে মক্ষিকাশূন্য করি তা এই প্রস্তরখণ্ডের উপরে উপবেশন কর, বৃক্ষের ছায়া ইহার চন্দ্রাতপ করিয়া রাখিয়াছে; আমিও সুখোপবিষ্ট হইতেছি।

(ঢ) রাজা। সম্মুখে যাও।

(ণ) বিদূষক। এস এস তুমি।

(ত) উভয়ে। (পদক্ষেপ করিয়া উপবেশন করিলেন।)

---

(१)...सम्पदं एतस्सिं पादवच्छाआए विरइदलदाविदाणदंसणीए णिसीददु भवं...।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । सखे ! माधव्य ! अनाप्तचक्षुःफलोऽसि ; येन त्वया द्रष्टव्यानां परं न दृष्टम् (१) । (थ)

विदू । णं भवं ज्जेव मे अग्गदो वट्टदि (२) । (द)

राजा । सर्वः खलु कान्तमात्मानं पश्यति । अहन्तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि (३) । (ध)

(द) ननु भवानेव मे अग्रतो वर्त्तते ।

(थ) राजेति । न आप्तं लब्धं चक्षुःफलं रमणीयवस्तुदर्शनरूपं नेत्रप्रयोजनं येन सः । येन हेतुना । द्रष्टव्यानां वस्तूनां मध्ये, परम् उत्कृष्टं वस्तु ।

"दूरानात्मोत्तमाः पराः" इत्यमरः ।

(द) विदू इति । नन्विति राजसम्बोधने । भवानेव द्रष्टव्यानां पर इत्यर्थः, अग्रतो वर्त्तते सम्मुखे तिष्ठति । अतएव कथं द्रष्टव्यानां परं न मया दृष्टमित्याशयः । एतेन राज्ञः परमसुन्दरत्वं व्यज्यते ।

अस्य उत्कृष्टोत्तररूपवाक्यत्वादिदं प्रगमनं नाम प्रतिमुखसन्धेरङ्गम् । यथा दर्पणे—

"प्रगमनं वाक्यं स्यादुत्तरोत्तरम् ।"

(ध) राजेति । सर्वो जनः, आत्मानम् आत्मीयं जनमित्यर्थः, कान्तं सुन्दरं पश्यति । सुन्दरत्वदर्शनं प्रति आत्मीयतायाः प्रयोजकत्वात् भवान् आत्मीयं मां यत् कान्तं पश्यति, न तत्र किञ्चित् वास्तवत्वमिति भावः । आश्रमस्य कण्वतपोवनस्य ललामभूतां भूषणस्वरूपाम् । अधिकृत्य आश्रित्य ।

"ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु" इत्यमरः ।

(थ) রাজা। সখে! মাধব্য! তুমি চোখের ফল লাভ কর নাই। যে হেতু তুমি দৃশ্য বস্তুর মধ্যে উৎকৃষ্ট বস্তু দেখ নাই।

(দ) বিদূষক। ওহে! তুমিই যে আমার সম্মুখে রহিয়াছ।

(१) माठव्य ! अनवाप्तचक्षुःफलोऽसि, तेन त्वया दर्शनीयं वस्तु न दृष्टम् ।
(२) णं भवं अग्गदो मे वट्टइ । (३) सर्वः कान्तम्… ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

বিদূ। স্বগতম্। ভোদু, ণ সে পস্সঅং বড্ঢইস্সং। প্রকা
ভো! জই সা তবস্সিকণ্ণআ অণব্‌ভত্থণীআ, তা কিং ত
দিট্টআএ ? (১)। (ন)

রাজা। ধিঙ্‌মূর্খ ! (২)। (প)

(ন) ভবতু, নাস্য প্রশ্রয়ং বর্দ্ধয়িষ্যামি। ভোঃ! যদি সা তপস্বি
অনভ্যর্থনীয়া ; তৎ কিং তয়া দৃষ্টয়া ?।

(ন) বিদূ ইতি। ভবতু শকুন্তলামধিকৃত্য অস্যোক্তিরিতি শেষঃ। অস্য
প্রশ্রয়ং প্রণয়ং শকুন্তলাং প্রতি অনুরাগমিত্যর্থঃ, ন বর্দ্ধয়িষ্যামি অনুকূলবাক্যৈরি
সা শকুন্তলা তপস্বিকন্যকা, অতএব অনভ্যর্থনীয়া অপ্রার্থনীয়া। দৃষ্টয়া
মিতি শেষঃ, ন কিঞ্চিদপীত্যর্থঃ। তপস্বিকন্যাত্বেন ব্রহ্মচারিত্বস্যৈব অবশ্
তদভ্যর্থনায়া দর্শনস্য চ নিষ্ফলত্বাৎ প্রতিলোমসংসর্গস্য চ গুরুতরপাপস্য
দিত্যাশয়ঃ।

(প) রাজেতি। হে মূর্খ ! ধিক্ ত্বামিতি শেষঃ। মূর্খত্বেন লোকস্বভাব
নভিজ্ঞতয়া ত্বাং নিন্দামীতি ভাবঃ। "ধিঙ্‌নির্ভৎর্সননিন্দয়োঃ" ইত্যমরঃ।

(ধ) রাজা। সকলেই আত্মীয় লোককে সুন্দর দেখে;
কিন্তু সেই তপোবনের অলঙ্কারস্বরূপা শকুন্তলাকে লক্ষ্য
বলিতেছি।

(ন) বিদূষক। (স্বগত) হউক, আমি ইহার প্রশ্রয় বা
না। (প্রকাশ্যে) ওহে! যদি তিনি তপস্বীর কন্যা বলিয়া প্র
নহেন, তবে তাঁহাকে দেখিয়া ফল কি ?।

(প) রাজা। দূর মূর্খ!।

(১) হোদু, সে অবসরং ণ দাইস্সং। ভো বঅস্স! দে তাবসকণ্ণআ অব্
দীঘই। (২) ইতি পাঠঃ ক্বচিন্নাস্তি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निवारितनिमेषाभिर्नेत्रपङ्क्तिभिरुन्मुखः।
नवामिन्दुकलां लोकः केन भावेन पश्यति (१) ॥८॥

न च परिहार्य्ये वस्तुनि दुष्मन्तस्य मनः प्रवर्त्तते (२)। (फ) विदू। ता कधेहि (३)। (व)

लोकस्वभावमेव दर्शयति निवारितेति। लोकः सर्व एव जनः, उन्मुख ऊर्द्ध-वदनः सन्, निवारितनिमेषाभिः अविरतदर्शनाय निवर्त्तितस्पन्दनाभिः, नेत्रपङ्क्तिभिः नयनश्रेणिभिः, केन भावेन अभिप्रायेण, नवां नवोदिताम्, इन्दुकलां चन्द्ररेखाम्, पश्यति। तथा च यथा अतिदूरवर्त्तित्वादलभ्यत्वनिश्चयेऽपि केवलनयनतृप्तिसाधनाय सर्वो लोकः नवोदितां चन्द्रकलां पश्यति; तथा तपस्विकन्यात्वेन अलभ्यत्वनिश्चयेऽपि केवलनयनतृप्तिसाधनाय सा नवीना शकुन्तला दर्शनीयैवेति भावः।

अतएवात्र अप्रस्तुतायाः समाया इन्दुकलायाः प्रस्तुतायाः समायाः शकुन्तलायाः प्रतीते-रप्रस्तुतप्रशंसालङ्कारः। तेन च शकुन्तलादर्शनमतीव प्रीतिकरमिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः।

"भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु" इत्यमरः ॥८॥

(फ) सा तपस्विकन्यात्वेन अनभ्यर्थनीया इति यदुक्तं तदपि नेत्याह न चेति। परिहार्य्ये येन केनापि कारणेन परित्याज्ये। तथा च मम मनःप्रवृत्तिवशात् न खलु सा परिहार्य्या, अपि तु सति सम्भवे ग्राह्यैवेत्याशयः।

মানুষ ঊর্দ্ধমুখ হইয়া নির্নিমেষ নয়নে নূতন চন্দ্রকলাকে কোন্ অভিপ্রায়ে দেখিয়া থাকে? ॥৮॥

(ফ) ইহাও জানিও যে, পরিত্যাগযোগ্য বস্তুর প্রতি দুষ্মন্তের মন প্রবৃত্ত হয় না।

(१) अयं श्लोकोऽपि क्वचिन्न दृश्यते।

(२) राजा। सखे! न परिहार्य्ये वस्तुनि पौरवाणां मनः प्रवर्त्तते।

(३) अयं पाठः क्वचिन्नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा।

ललिताप्सरोभवं किल मुनेरपत्यं तदुज्झिताधिगतम्।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम्(१)॥

(ब) तत् कथय।

(व) विदू इति। तत् तदा, कथय शकुन्तलावृत्तान्तमिति शेषः।

ललितेति। तत् शकुन्तलेत्यर्थः। अपत्यमिति प्रकृतसमानलिङ्गत्वात् क्लीवत्वम्, "य आधारस्तदधिकरणम्" इतिवत्। ललितायाः सुन्दर्य्या अप्सरसो भवतीति तथोक्तम्, मुनेर्विश्वामित्रस्य, अपत्यम् औरसी कन्येत्यर्थः, उज्झितं तया मेनकया परित्यक्तम्, परञ्च अधिगतं कण्वेन मुनिना लब्धं लालितमिति ... तथा च शिथिलं श्लथीभूतं वृन्तात् गलितमित्यर्थः अर्कस्य तदाख्यवृक्षस्य उपरि पतितम्, नवमालिकाया लतायाः कुसुममिव स्थितम्। तथा च कुसुमं यथा ... लतातो विच्छिन्नम्, इयमपि तथा मातुर्मेनकातो विच्छिन्ना; कुसुमं यथा ... प्रच्युतम्, एषापि जनकात् विश्वामित्रात् तथा प्रच्युता; कुसुमं यथा ... पतितम्, शकुन्तलापि तथा कण्वाश्रये पतितेति सर्वसामञ्जस्यम्। अतएव ... वर्णसङ्कराः" इति स्मृतेः शकुन्तला मे न खलु परिहार्य्या अपि तु ग्राह्यैवेति न ... नीया सफलदर्शना चेति भावः।

अत्र श्रौती उपमालङ्कारः। इदं तावदवधेयम्, शकुन्तलायाः स्वपरि... सूचनाय कस्यचिन्मुनेरसवर्णेवसम्भवत्वमात्रप्रदर्शनमपेक्षितम्; तच्च सामान्ये... सिध्यतीति मेनका इति विशेषमनभिधाय अप्सर इति सामान्याभिधानेऽपि विशे... विशेषमनुक्त्वा मुनेरिति सामान्योक्तावपि च न विशेषे अविशेषाख्यदोषः ... जनकजननीभूतयोः पुंस्त्रियोर्वैजात्यमात्रप्रदर्शनाय अर्कस्येति नवमालिकेति ... मिति न अविशेषे विशेषाख्यदोष इति।

(व) विदूषक। तवे बल।

(१) सुरयुवतिसम्भवं किल।...नवमल्लिकाकुसुमम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। विहस्य। भो! जधा पिण्डीखज्जुरेहिं उव्वेजिदस्स तिन्तिड़ीए सद्धा भोदि, तधा अन्तेउर-इत्थिआ-रअण-परिभोइणो भअदो इअं पत्थणा (१)। (भ)

राजा। सखे! तावदेनां न जानासि, येन त्वमेवमवादीः (२)। (म)

(भ) भोः! यथा पिण्डीखर्ज्जूरैरुद्वेजितस्य तिन्तिड्यां श्रद्धा भवति, तथा अन्तःपुरस्त्रीरत्नपरिभोगिनो भवत इयं प्रार्थना।

अत्र आख्यानं नाम नाट्यालङ्कारः—"आख्यानं पूर्ववृत्तोक्तिः" इति दर्पणलक्षणात्। उज्झिताधिगतमिति कृष्टमदीकृत इत्यादिवत् कर्म्मधारयः। आर्य्या जातिः ॥९॥

(भ) विदू इति। पिण्डीखर्ज्जूरैः अतीवमधुरैः पिण्डीनामकखर्ज्जूरैः, उद्वेजितस्य तद्भक्षणेन विरक्तीभूतस्य जनस्य, तिन्तिड्याम् अम्लरसवत्यां चिञ्चायाम्, श्रद्धा आकाङ्क्षा। इयं वन्यशकुन्तलाविषया। एतेन अन्तःपुरस्थस्त्रीभ्यः शकुन्तलाया हीनत्वं व्यज्यते।

"पिण्डी तु पिण्डीतगरेऽलाबूखर्ज्जूरभेदयोः" इति मेदिनी।

राजा। তিনি মুনির সন্তান, সুন্দরী অপ্সরার গর্ভে জন্মিয়াছেন; সে অপ্সরা তাঁহাকে ত্যাগ করিয়া চলিয়া গিয়াছিল; আবার কেহ তাঁহাকে পাইয়াছিল। সুতরাং নবমালিকাপুষ্প, বৃন্ত হইতে পরিভ্রষ্ট হইয়া অর্কবৃক্ষের পরে যেমন থাকে, তিনি তেমন ভাবে রহিয়াছেন ॥৯॥

(ভ) বিদূষক। (হাস্য করিয়া) ওহে! অত্যন্ত মিষ্ট খর্জ্জূর-ভক্ষণ করিয়া বিরক্ত হইলে পর তিন্তিড়ীভক্ষণে যেমন ইচ্ছা হয়, সেইরূপ তোমারও অন্তঃপুরস্থ রমণীরত্ন সম্ভোগের পর এই আকাঙ্ক্ষা হইয়াছে।

(१) जह कस्सवि पिण्डखज्जुरेहिं उव्वेजिदस्स तिन्तिणीए अहिलासो होइ, तह इत्थिआरअणपरिहाइणो भअदो इअं अब्भत्थणा।

(२) न तावदेनां पश्यसि, येनैवमवादीः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। तं क्खु रमणीअं णाम, जं भअदोवि वि
उप्पादेदि। (य)

राजा। वयस्य! किं बहुना। (र)

चित्ते निवेश्य परिकल्पितसत्त्वयोगान्
रूपोच्चयेन विधिना विहिता कृशाङ्गी।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः (१) ॥१०॥

(य) तत् खलु रमणीयं नाम, यत् भवतोऽपि विस्मयमुत्पादयति।

---

(म) राजेति। एनां शकुन्तलाम्। येन हेतुना। एवं यदि
शकुन्तला खलु अन्तःपुरस्थस्त्रीभ्य उत्कृष्टेति भावः।

(य) विदू इति। तत् शकुन्तलारूपं वस्तु, रमणीयं नाम परम
सम्भावयामि। यत् वस्तु, भवतोऽपि अनन्तरमणीयदर्शनेऽपि अविस्मितस्येत्यर्थः।

(र) राजेति। बहुना प्रचुरेणाभिहितेनेत्यर्थः, किं प्रयोजनमिति
अल्पाभिधानेनैव सर्वथा भवता ज्ञास्यमानत्वादिति भावः। संख्यावाचकबहु
नित्यबहुवचनान्तता; प्रचुरार्थकबहुशब्दस्य तु एकवचनद्विवचनान्ततापि।
एकवचनम्। न्यायकुसुमाञ्जलावपि यथा—"किं बहुना, यं कारवोऽपि विस्म
यन्ते" इति।

---

(ম) রাজা। সখে! তুমি ইহাকে দেখ নাই; সুতরাং
বলিতেছ।

(য) বিদূষক। আমি মনে করি—তিনি নিশ্চয়ই সুন্দরী
হেতু তোমারও বিস্ময় উৎপাদন করিয়াছেন।

(র) রাজা। সখে! অধিক বলিবার প্রয়োজন নাই।

---

(१) चित्ते निवेश्य परिकल्पितसत्त्वयोगा रूपोच्चयेन मनसा विधिना कृता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। सव्वधा पच्चादेसो क्खु सा रूववदीण (१)। (ल)

(ल) सर्व्वथा प्रत्यादेशः खलु सा रूपवतीनाम्।

चित्ते इति। धातुः स्रष्टुः, विभुत्वं सृष्टिसामर्थ्यम्, तस्याः शकुन्तलायाः वपुः शरीरञ्च अनुचिन्त्य विभाव्य वर्त्तमानस्येति शेषः विधातुः सर्वप्रकारनिर्म्माणक्षमताम् अलौकिकसौन्दर्य्यवत् शकुन्तलाशरीरञ्च स्मरत इत्यर्थः, मे मम, परिकल्पिताः तदानीमेव निर्म्मिताः सर्वे योगा उपादानकारणानि तान्, चित्ते निवेश्य मनसि निधाय विधिना सृष्टिकर्त्रा, रूपोच्चयेन सौन्दर्य्यराशिना, विहिता निर्म्मिता, कृशाङ्गी सा शकुन्तला, अपरा साधारणविलक्षणा, स्त्रीरत्नसृष्टिः सर्वश्रेष्ठरूपेण निर्म्मिता स्त्री, प्रतिभाति प्रतीतिगोचरी-भवति, तादृशसुन्दर्य्या अन्यत्रादर्शनादिति भावः।

अत्र शकुन्तलास्त्रीरत्नसृष्ट्योरभेदेऽपि अपरेत्यनेन भेदाध्यवसायादतिशयोक्तिरलङ्कारः, "अयं राजा अपरः पाकशासनः" इति दर्पणोदाहरणवत्।

"योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः। उपाय एव कारणम्। "रूपं स्वभावे सौन्दर्य्ये" इत्यादि मेदिनी। "विभुः प्रभौ" इत्यादि हेमचन्द्रः।

अनुचिन्त्य वर्त्तमानस्येत्यध्याहारात् नैककर्तृकत्वहानिरिति बोध्यम्।

वसन्ततिलका वृत्तम् ॥१०॥

(ल) विदू इति। सा शकुन्तला, सर्वथा ध्रुवमेव, रूपवतीनाम् अन्यासां सुन्दरीणाम्, प्रत्यादेशः खलु स्वसौन्दर्य्येण प्रत्याख्यानकारिण्येव इति मन्ये इति शेषः, तद्दर्शनाश्रवणादिति भावः।

বিধাতার সৃষ্টি করিবার সামর্থ্য এবং শকুন্তলার দেহখানি চিন্তা করিয়া আমার মনে হয় যে, বিধাতা সৃষ্টি করিবার সমস্ত উপকরণ মনে মনে চিন্তা করিয়া কেবল রূপরাশিদ্বারা সেই কৃশাঙ্গীকে সৃষ্টি করিয়াছেন; তাহাতে তিনি অন্যবিধ স্ত্রীরত্ন দাঁড়াইয়াছেন ॥১০॥

(ল) বিদূষক। তিনি তবে অন্য সুন্দরীরমণীগণের একেবারে প্রত্যাখ্যানকারিণী হইয়াছেন।

(१) तइ एव्वं पच्चादेसो दाणिं रूववदीणं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । इदञ्च मे मनसि वर्त्तते । (व)

अनाघ्रातं पुष्पं, किसलयमलूनं कररुहै-
रनामुक्तं रत्नं, मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि (१)।

अत्र हेतुमता (कार्य्येण) प्रत्यादेशेन सह हेतोः शकुन्तलाया अभेदेन हेतुर्नामालङ्कारः। तथा च दर्पणे—"अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह।" "सर्वथा हेतुवाढयोः" इति विश्वः।

(व) राजेति। इदम् इदानीमेवाभिधीयमानम्।

अनाघ्रातमिति। फलमिवेति इवशब्दः पुष्पमित्यादौ सर्वत्र सम्बध्यते। तथा च अनाघ्रातं केनापि अगृहीतगन्धं पुष्पमिव। आघ्राणार्थं ग्रहणेन कथमपि तथा कथञ्चित्सौन्दर्य्यहानिसम्भावनया अनाघ्रातविशेषणम्। कररुहैर्नखैः अच्छिन्नं किसलयं पल्लवमिव। नखच्छेदेन पल्लवस्य वैरूप्यापत्तेः अलूनमित्युक्तम्। अनामुक्तम् अपरिहितं रत्नमिव। परिधाने घर्षणादिना ... रित्यत उक्तम् अनामुक्तमिति। अनास्वादितः केनाप्यननुभूतः रसो माधुर्यं नवं नूतनं न पुनः पर्य्युषितमित्यर्थः मधु इव। पर्य्युषितत्वे आस्वादने च कथमपि स्वभाववैषम्यं स्यादिति नवमनास्वादितरसञ्चेति विशेषणद्वयम्। ... यागादिजनितधर्म्माणाम्, अखण्डं सम्पूर्णं फलमिव च। फलस्य खण्डत्वे ... वैकल्यं स्यादिति अखण्डमिति विशेषणम्। अनघं निष्पापं पापजनितकु... दोषरहितं मनोज्ञमित्यर्थः, तत् शकुन्तलागतम्, रूपं सौन्दर्य्यम्, इह ... पृथिव्याम्, कं जनम्, भोक्तारं स्वसम्भोगकर्त्तारम्, उपस्थास्यति उपगमिष्यति न जाने। यमुपस्थास्यति स खलु महाभाग्यवानिति भावः।

(व) রাজা। ইহাও আমার মনে হয় (যে,)

(१) अनाविद्धं रत्नम्...। समुपस्थास्यति विधिः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। तेण हि लहुं लहुं गच्छदु भवं; मा जाव सा कस्सवि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे णिवड़िस्सदि (१)। (ग्र)

(ग्र) तेन हि लघु लघु गच्छतु भवान्, मा यावत् सा कस्यापि तपस्विनः इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते निपतिष्यति।

अत्र इवशब्दस्य पुष्पमित्यादौ सर्वत्रान्वयात् श्रीरामचन्द्रेहादौ अखण्डपुण्यफलत्वस्य विज्ञत्वाच्च मालोपमालङ्कारः, अनाघ्रातमित्यादिविशेषणानां साभिप्रायप्रयोगात् परिकरालङ्कारश्च; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः। परिकरालङ्कारेण च शकुन्तलाया रूपं सम्भोगाभावेन सम्पूर्णं स्वस्थम् अभिनवञ्चेति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः, श्लोकसमुदायेन च बलवती तत्सम्भोगाकाङ्क्षा व्यज्यत इति वस्तुना वस्तुध्वनिश्च। अत्र गुणकीर्त्तनं नाम नाट्यलक्षणञ्च। यथा दर्पणे—

"गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तनम्।"

"अनघो निर्म्मलापापमनोज्ञेषु च मेध्यवत्" इति विश्वः। "रूपं स्वभावे सौन्दर्य्ये" इत्यादि मेदिनी।

शिखरिणी वृत्तम् ॥११॥

(ग्र) विदू इति। लघु लघु शीघ्रं शीघ्रम्। सा शकुन्तला। इङ्गुदीतैलेन इङ्गुदीफलसञ्जाततैलव्यवहारेण चिक्कणं समयकेशापगमात् मसृणं शीर्षं मस्तकं यस्य तपस्विनः तापसस्य दीनस्येत्यपि व्यज्यते। तथा च स्त्रीरत्नभूतायाः शकुन्तलायाः शृङ्गारविलासविहीनस्य विकृतरूपस्य तपस्विनो हस्ते पतनं पद्मिन्या गोमये अवस्थान-

অনাঘ্রাত পুষ্পের ন্যায়, নখদ্বারা অচ্ছিন্ন পল্লবের ন্যায়, অধৃত রত্নের ন্যায়, অনাস্বাদিতরস নূতন মধুর ন্যায় এবং পুণ্যের অখণ্ডফলের ন্যায় শকুন্তলার সেই মনোহর রূপ, পৃথিবীতে কোন্ ভোক্তার নিকট উপস্থিত হবে তাহা জানি না ॥১১॥

(१) तेण हि लहु परित्ताअदु णं भवं। मा कस्सवि·· इन्दुदितेल्लमिस्सचिक्कणसीसस्स हत्थे पड़िहिइ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । परवती खलु तत्रभवती, न च सन्निहि-
जना (१) । (ष)

विदू । अध तुह उवरि कीदिसो से चित्तराओ (२)

राजा । वयस्य ! स्वभावादेवाप्रगल्भास्तपस्वि-
तथापि तु—(३) (ह)

(स) अथ तव उपरि कीदृशः अस्याः चित्तरागः ? ।

मिव सर्वेषामेव महादुःखकरमित्यतो लघुगमनमेव भवत उचितम्, येन ह
हस्ते पततीति भावः ।

(ष) राजेति । तत्रभवती तपस्विकन्यात्वेन माननीया शकुन्तला प-
पराधीनैव । अतएव स्वयमेवात्मप्रदानं कर्त्तुं न शक्नुयादिति भावः ।
गुरुजन एव चेदन्यस्मै ददातीत्याह न चेति । सन्निहितो गुरुजनः प्रभुर्
जनो यस्याः सा तादृशी च न । अतो गुरुजनेनापि दानासम्भवात् त
परहस्ते पतनमसम्भवमेवेति भावः ।

(स) विदू इति । अस्याः शकुन्तलायाः, चित्तरागः मनसोऽनुरागः
भावे तत्प्राप्तिकामना नितरामनर्थिकैवेत्याशयः ।

(শ) বিদূষক । তবে তুমি সত্বর সত্বর যাও; যে
ইঙ্গুদীতৈল ব্যবহার করায় চক্‌মকেমাথা কোন তপ
না পড়েন ।

(ষ) রাজা । তিনি পরাধীনা; গুরুজনও নিকটে নাই
(স) বিদূষক । তোমার উপরে তাঁহার মনের অনুরাগ

(१)···न च सन्निहितोऽत्र गुरुजनः ।

(२) अत्तभवन्तं अन्तरेण कीदिसो से दिट्ठिराओ ।

(३) निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभिमुखे मयि संवृतमीक्षितं
हसितमन्यनिमित्तकथोदयम्।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः (१) ॥१२॥

(ह) राजेति। अप्रगल्भा अधृष्टा अतीवमुग्धा इत्यर्थः। नागरजनैरालापस्याप्य-सम्भवादिति भावः।

अभिमुख इति। मयि अभिमुखे तत्सम्मुखे तन्मुखोपरि दृष्टिपातकारिणि सतीत्यर्थः; तया ईक्षितं मन्मुखोपरि दृष्टिदानम्, संवृतं संवृतम् आकृष्यान्यत्र प्रवर्त्तितमिति तात्पर्य्यम्। तथा अन्यदेव निमित्तं यस्याः सा चासौ कथा चेति सा तस्या उदय उत्पत्तिर्यस्य तादृशम्, तथा हसितं हास्यं कृतम् अहास्यकारणीभूतामपि कथा-मवलम्ब्य हास्यं कृतमित्यर्थः। अतः कारणात्, तया शकुन्तलया, विनयेन स्वभिप्रायया वारिता निवर्त्तिता वृत्तिः प्रसारो यस्य स तादृशः, मदनः कामः न विवृतः ईक्षणसंवरणात् न प्रकटितः, न च संवृतः तादृशहसितात् न वा गोपितः।

अतएवात्र यथासंख्यमलङ्कारः।

"विनयः शिक्षाप्रणत्योर्विनया तु बलौषधौ" इति हेमचन्द्रः।

द्रुतविलम्बितं वृत्तम्—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥१२॥

(ह) রাজা! সখে! তপস্বিকন্যারা স্বভাবতই অপ্রগল্ভা। কিন্তু তাহা হইলেও—

আমি অভিমুখ হইলে, তিনি চোখ সরাইয়া নিয়াছেন; অন্য কথা উপলক্ষ্যে তিনি হাসিয়াছেন। অতএব তাঁহার কামপ্রবৃত্তি, বিনয়-দ্বারা রুদ্ধ হইয়াছিল; সুতরাং তিনি সে কাম, প্রকাশিতও করেন নাই, সংবৃতও করেন নাই ॥১২॥

(१)…मयि संहृतम्। कृतोदयम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। विहस्य। किं दिट्ठिमेत्तेण ज्जेव भअदो
आरोहदु (१)। (च)

राजा। सखीभ्यां मिथः प्रस्थाने पुनः सलीलया तत्र
मयि भूयिष्ठमाविष्कृतो भावः। तथाहि—(२) (क)

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा।

---

(च) किं दृष्टिमात्रेणैव भवतः अङ्कम् आरोहतु।

---

(च) विदू इति। राज्ञोऽधिकाकाङ्क्षानुमानात् विहसितम्। अङ्कं
आरोहतु अधिरोहेत्, शकुन्तलेति शेषः, कथमपि नेत्यर्थः।

आरोहत्विति "विध्यादिषु सप्तमी च" इति सम्भावनायां पञ्चमी।

(क) राजेति। अप्रथमे पुनःशब्दः सखीभ्याम् अनसूयाप्रियंवदाभ्यां सह
मिथो रहसि सख्योरग्रगमनात् निर्जनावस्थायामित्यर्थः, प्रस्थाने उटजं प्रति
सलीलया सविलासया, तत्रभवत्या शकुन्तलया, मयि मद्विषये, भावोऽनुरागः
बहुलं यथा स्यात्तथा आविष्कृतः प्रकाशितः। कीदृशो भाव इत्याह तथाहीति।

"मिथोऽन्योन्यं मिथो रहः" इति विश्वः। "भावः सत्तास्वभावाभिप्राय
जन्मसु। क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु। रत्यादौ" इति मेदिनी।

---

(क्ष) বিদূষক। (হাস্য করিয়া) দেখিবামাত্রই কি
কোলে উঠিবেন।

(ক) রাজা। তিনি সখাদের সহিত প্রস্থান করিবার
নির্জ্জন অবস্থায় আমার প্রতি বিলাসের সহিত বহুতর ভাব
করিয়াছেন। তাহাই বলিতেছি—

---

(१) ण क्खु, दिट्ठमेत्तस्स तुह अङ्कं आरोहदु।

(२) मिथः प्रस्थाने पुनः शालीनतयापि काममाविष्कृतो भावः।
तथाहि—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥१३॥ ৩২

विदू। गहीदपाधेश्रो किदोसि तए। श्रदो श्रणुरक्त' तपोवणं त्ति तक्केमि (१)। (ख)

(ख) गृहीतपाथेयः कृतोऽसि तया। अतः अनुरक्तं तपोवनमिति तर्कयामि।

दर्भेति। तन्वी कृशाङ्गी सा शकुन्तला, कतिचित् कतिपयानि पदानि गत्वैव, अकाण्डे अनवसरे हठादित्यर्थः, दर्भाङ्कुरेण कुशाग्रेण, चरणः क्षतो विदीर्णः, इति उक्त्वेति शेषः, स्थिता मम दर्शनार्थम् अवस्थिता। तथा द्रुमाणां वृक्षाणाम्, शाखासु विटपेषु, असक्तमपि अलग्नमपि, वल्कलं परिहितवृक्षत्वचम्, विमोचयन्ती विमोचनम् अभिनयन्ती सती, विवृत्तं मद्दर्शनार्थं परावर्त्तितं वदनं मुखं यया सा तादृशी च आसीत्। दर्भाङ्कुरेण चरणक्षतव्याजेनावस्थानं वल्कलविमोचनच्छलेन वदनविवर्त्तनञ्च भावाविष्कारलक्षणमिति।

अत्र उद्भिन्नस्य दुष्मन्तावलोकनार्थावस्थानस्य चरणक्षतव्याजेन गोपनात् एका व्याजोक्तिः, तथैव उद्भिन्नस्य दुष्मन्तावलोकनार्थमेव वदनविवर्त्तनस्य वल्कलविमोचन-व्याजेन गोपनात् अपरापि व्याजोक्तिः; अनयोः परस्परनिरपेक्षतया संसृष्टिः।

"काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः।

वसन्ततिलका वृत्तम् ॥१३॥

(ख) विदू इति। तया शकुन्तलया, गृहीतं प्राप्तं पाथेयं पथिव्ययोपयोगि धनं येन स तादृशः कृतोऽसि; सानुरागदृष्टिदानात् तेनैव च पथिकष्टनिवारणादिति

কৃশাঙ্গী শকুন্তলা, কয়েক পা যাইয়াই, "কুশের আগায় পা ক্ষত হইয়াছে" এই ছল করিয়া হঠাৎ দাঁড়াইয়াছিলেন এবং পরিহিত বল্কল, বৃক্ষের শাখায় সংলগ্ন না হইলেও, তাহা মুক্ত করিবার ছলে আমার দিকে মুখ ফিরাইয়াছিলেন ॥১৩॥

(१) तेण हि गहीदपाहेओ सीदि। किदं तुए उववणं तपोवणं त्ति पेक्खामि।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सखे! तपस्विभिः कैश्चित् परिज्ञातोऽस्मि (ग)। चिन्तय तावत् केनापदेशेन पुनराश्रमपदं गच्छामः (१)।

विदू। को अवरो अवदेसो; णं भवं राआ (२)।

राजा। ततः किम्? (३)। (ङ)

(घ) कः अपरः अपदेशः; ननु भवान् राजा।

भावः। अतः शकुन्तलाया एव अनुरक्तत्वात्, तपोवनमेव अनुरक्तं जातमिति इति तर्कयामि मन्ये; शकुन्तलाया एवेदानीं समग्रतपोवनस्याधिष्ठातृत्वात् तदनुरक्तत्वात् अधिष्ठातृभावस्य अधिष्ठितेन स्वभावत एव ग्रहणीयत्वादित्याशयः।

(ग) राजेति। परिज्ञातोऽस्मि अत्राहमागत इत्यवगतोऽस्मि। तथा च तपस्विभिरज्ञातः अभविष्यम्, तदा गोपनभावेन गमनागमने हठाच्च तपस्विभिर्दर्शने मेवायमागत इत्युक्त्वा दोषमुक्तः अभविष्यम्; किन्तु तपस्विभिः परिज्ञातत्वे सति भावेन गमनागमने हठाच्च तैर्दर्शने मम दुरभिसन्धिं ते जानीयुरिति भावः। छलेन। अत्र तापनं नाम प्रतिमुखसन्धेरङ्गम्—"उपायादर्शनं यत्तु तापनं तद्भवेत्" इति दर्पणलक्षणात्।

(घ) विदू इति। नन्वित्यवधारणे।

(খ) বিদূষক। তবে তিনি তোমাকে পাথেয় গ্রহণ করিতে দিয়াছেন, অতএব আমি মনে করি, সম্পূর্ণ তপোবনই তোমার অনুরক্ত হইয়াছে।

(গ) রাজা। সখে! অনেক তপস্বী আমাকে জানিয়াছে, অতএব চিন্তা কর দেখি, কোন্ ছলে আবার তপোবনে যাই।

(ঘ) বিদূষক। অন্য কোন ছলে হইবে, তুমি যে রাজা।

(१)…केनापदेशेन सकृदपि आश्रमे वसामः।

(२)…अवदेसो तुम्हाणं राआणं णीवारच्छट्ठभाअं अम्हाणं उवहरन्तु त्ति।

(३) पाठोऽयं क्वचित् न दृश्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। णीवारच्छट्ठभाअं तावसा मे उवहरन्तु त्ति (१)। (च)
राजा। मूर्ख! अन्यमेव भागधेयमेते तपस्विनो मे निर्वपन्ति, यो रत्नराशीनपि विहायाभिनन्द्यते। पश्य—(२) (छ)

(च) नीवारषष्ठभागं तापसा मे उपहरन्तु इति।

---

(ङ) राजेति। ततः किं राजत्वमाचात् कोऽपदेशो भवितुमर्हतीति भावः।
(च) विदू इति। नीवाराणां मुनिधान्यानाम्, षष्ठभागम्। उपहरन्तु करत्वेन ददतु। करादानमेव पुनराश्रमपदगमनस्यापदेशः अस्त्विति भावः।
अहो! बुद्ध्यनुरूप एवायं विदूषकस्य स्थूलापदेशोपदेशः।
धान्यानामधिकाल्पत्वभेदेन अष्टमादिभागः करत्वेन राज्ञा ग्राह्य इत्याह मनुः—
"पश्वाश्रद्भाग आदेयो राज्ञा पशुहिरण्ययोः।
धान्यानामष्टमो भागः षष्ठो द्वादश एव वा॥"
(छ) राजेति। अन्यमेव धनभिन्नमेव, भागधेयं करम्। निर्वपन्ति ददति। यो भागधेयः, अभिनन्द्यते प्रशस्यते। कोऽसौ भागधेय इत्याह पश्येति।
"भागधेयः करो बलिः" इत्यमरः।
अत्र मूर्ख इत्यनेन प्रत्यक्षनिष्ठुरोक्तेर्वज्रं नाम प्रतिमुखसन्धेरङ्गम्—"प्रत्यक्षनिष्ठुरं वज्रम्" इति दर्पणलक्षणात्।

---

(ঙ) রাজা। তা'তে কি?।
(চ) বিদূষক। তপস্বীরা উড়ীধানের ছয় ভাগের এক ভাগ আমাকে খাজনা দিন।
(ছ) রাজা। মূর্খ! এই তপস্বীরা অন্য প্রকার খাজনাই আমাকে দিয়া থাকেন, লোকে রত্নরাশি পরিত্যাগ করিয়াও যাহার আদর করে। দেখ—

---

(१) अयमपि क्वचित् नास्ति। (२) मूर्ख! अन्यद्भागधेयमेतेषां रक्षणे निपतति, यत् रत्नराशीनपि विहायाभिनन्द्यम्। पश्य—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम् ।
तपःषड़्भागमक्षय्यं ददत्यारण्यका हि नः (१) ॥१४॥

यदिति । नृपाणां राज्ञाम्, वर्णेभ्यो ब्राह्मणादिभ्यः, यत् उत्तिष्ठति क -ग्रहमागच्छति, तद्धनम्, क्षयि वह्नितस्करादिना क्षयशीलम्, नश्वरमेव प्रत्यक्षदृष्टं भावः । किन्तु आरण्यका वनवासिनस्तपस्विनः, अक्षय्यं हि वह्नितस्करादिना अशक्यमेव, तपः षड़्भागं स्वस्वकृततपस्यायाः षष्ठमंशम्, नः अस्मभ्यं राज्ञः ददति अप्रत्यक्षभावेन अर्पयन्ति ; न्यायतः शास्त्रतश्चेति तात्पर्य्यम् । अतश्च तं धनात्मककरग्रहणस्य कदाप्यकृतत्वात् तदादानापदेशेन तपोवनगमनमसम्भवमेवेति भा

अत्र क्षयिणः साधारणधनात् तपसः अक्षय्यत्वेन प्राधान्यप्रतिपादनात् व्यतिरेकालङ्कारः । आरण्यकपदेन वनवासिमात्रबोधकतया व्याधादिबोधनेऽपि तैः षड़्भागदानासम्भवात् आरण्यकपदेनैव तपस्विनः प्रत्याय्यन्त इति न विशेषे पर्य्यवसानदोषः ।

क्षयीति "जीर्णहृच्छिविश्रिपरिभूवमाभ्यमाव्यथां च" इति ताच्छील्ये क्षयतेरिनि षड़्भागशब्देनैव षष्ठो भागः प्रतिपाद्यते, वृत्तिविषये संख्याशब्दानां पूरणार्थं कारात् "त्रिभागशेषासु निशासु च क्षणम्" इति कुमारसम्भवश्लोकव्याख्याने मल्लिनाथेनापि एवमेव सिद्धान्तितत्वात् । अक्षय्यमिति क्षयतेः स्वराद्यः मत्वर्थे गुणः, "जिक्ष्योः शक्य" इति यकारस्य स्वरवत्त्वात् "ए अय्" इत्ययादेशः ।

राजा करत्वेन तपसोऽपि षड़्भागं गृह्णातीत्याह स्मृतिः—

"यदधीते यद्यजते यद्ददाति यदर्च्चति ।
तस्य षड़्भागभाग् राजा सम्यग् भवति रक्षणात् ॥" ॥१४॥

ব্রাহ্মণাদি বর্ণসমষ্টি হইতে খাজনারূপে রাজাদের যে ধন সে ধন ক্ষয় পাইয়া যায় ; কিন্তু বনবাসী তপস্বীরা আমাদিগকে ত ছয় ভাগের এক ভাগরূপ অক্ষয় ধন দিয়া থাকেন ॥১৪॥

(१)···क्षयि तत् फलम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेपथ्ये। हन्त! सिद्धार्थौ स्वः। (ज)

राजा। कर्णं दत्त्वा। अये! प्रशान्तस्वरैस्तपस्विभिर्भवितव्यम् (१)। (झ)

प्रविश्य दौवारिकः। जअदु जअदु भट्टा। एदे दुवे इसिकुमारआ पड़िहारभूमिं उवत्थिदा (२)। (ञ)

राजा। अविलम्बं प्रवेशय तौ (३)।

दौवा। जं भट्टा आणवेदि। इति निष्क्रम्य ऋषिकुमाराभ्यां सह पुनः प्रविश्य। इदो इदो भवन्ता (४)। (ट)

(ञ) जयतु जयतु भर्त्ता। एतौ द्वौ ऋषिकुमारौ प्रतिहारभूमिम् उपस्थितौ।

(ज) नेपथ्य इति। हर्षे हन्तशब्दः। सिद्धार्थौ सम्पन्नप्रयोजनौ, स्व आवामित्यादिः; राज्ञः साक्षात्कारलाभादिति भावः। नेपथ्यात् ऋषिकुमारयोरुक्तिरियम्।

(झ) राजेति। कर्णं दत्त्वा "हन्त! सिद्धार्थौ स्वः" इति शब्दं प्रति कर्णमवहितीकृत्येत्यर्थः। अये इति सम्भ्रमे। प्रशान्तस्वरैः अकर्कशकण्ठैः। मन्ये तपस्विनामेवेयमुक्तिः प्रशान्तस्वरत्वादित्यर्थः।

(ञ) प्रविश्येति। प्रतीहारभूमिं द्वारदेशम्। "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः। उपस्थितौ उपागतौ। तयोर्विषये कानुमतिरिति भावः।

(ज) নেপথ্যে। ভাল, আমাদের প্রয়োজন সিদ্ধ হইয়াছে।

(ঝ) রাজা। (কাণ দিয়া) ওহে! যখন শান্ত স্বর, তখন তপস্বীরাই হইবেন।

(ঞ) দৌবারিক। (প্রবেশ করিয়া) মহারাজের জয় হউক, জয় হউক। এই দুইজন মুনিকুমার দ্বারদেশে উপস্থিত হইয়াছেন।

রাজা। তাঁহাদিগকে সত্বর প্রবেশ করাও।

(१)···धीरप्रशान्तस्वरैः···। (२) जेदु जेदु···। (३) तेन हि अविलम्बितं···। (४) एदो पवेसेमि।···भअवन्ता।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभौ । राजानं विलोकयतः । (ठ)

एकः । अहो ! दीप्तिमतोऽपि विश्वसनीयताऽस्य वपु
अथवा उपपन्नमेतदस्मिन् ऋषिकल्पे राजनि । कुतः—(१)

अध्याक्रान्ता वसतिरमुनाऽप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ।

(ट) यत् भर्त्ता आज्ञापयति । इत इतो भवन्तौ ।

---

(ट) दौवेति । इत इतः अनेनानेन पथा, भवन्तौ आगच्छतामिति शेषः। इति "सर्वविभक्तिभ्यस्तस्" इति तृतीयान्तात्तस् ।

(ठ) उभाविति । ऋषिकुमारावित्यर्थः, राजानं विलोकयतः विलोकने भावं निरूपयत इत्यर्थः ।

(ड) एक इति । ऋषिकुमारयोर्मध्ये कश्चिदित्यर्थः । अहो इति अस्य राज्ञः, दीप्तिमतोऽपि महातेजःशालिनोऽपि वपुषो देहस्य, विश्वसनीयता कारित्वेनैव विश्वास्यता । तथा च प्रायेणैव तेजस्विन उग्रस्वभावतया स्यात्; अस्य तु तेजस्वित्वेऽपि विश्वसनीयतैव इत्याश्चर्यमेवेति भावः । एतत् नीयत्वम्, उपपन्नं युक्तम् ।

---

(ট) দৌবারিক। প্রভু যাহা আদেশ করেন। (ইহা নির্গত হইয়া ঋষিকুমারদ্বয়ের সহিত পুনরায় প্রবেশ করিয়া) আ এদিকে আসুন।

(ঠ) (মুনিকুমারেরা রাজাকে দেখিতে লাগিলেন।)

(ড) একজন মুনিকুমার। ওহে! তেজস্বী হইলেও ইঁহার বিশ্বাসের যোগ্যতা আছে। অথবা ঋষিতুল্য এই রাজাতে সম্ভবই বটে। কারণ,

---

(१)…उपपन्नमेतदृषिभ्यो नातिभिन्ने …।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥१५॥

अध्येति । अमुना दुष्मन्तेनापि, सर्वाणि भोग्यानि स्त्रीसंसर्गसुखादीनि यस्मिन् तत्र, अन्यत्र तु सर्वैर्धार्म्मिकजनैः भोग्ये भोगयोग्ये, आश्रमे गार्हस्थ्ये तपोवने च वसतिरवस्थानम्, अध्याक्रान्ता अवलम्बिता । अतएव आश्रमवासित्वादयमपि ऋषिरेवेति भावः । अयं दुष्मन्तोऽपि, रक्षायोगात् प्रजानां पालनसम्बन्धात्, प्रत्यहं तपः कृच्छ्र-चान्द्रायणादिकं पक्षे धर्म्मञ्च, सञ्चिनोति संगृह्णाति । अतश्च तपःसञ्चयादयमपि ऋषि-रेवेत्याशयः । तथा वशिनः जितेन्द्रियस्य, अस्य दुष्मन्तस्यापि, केवलं प्रकृतमुनिभ्यो विशेषेणेत्यर्थः, राजा इत्यानुपूर्वीकः शब्दः पूर्वस्मिन् यस्य सः, पुण्यः पवित्रः 'मुनिः' इति शब्दः 'राजमुनिः' 'राजर्षिः' इत्याद्युपाधिरित्यर्थः, मुहुर्वारं वारम्, चारयन्ति प्रख्यापयन्ति यशस्विनां यशांसीति चारणा नटाः तेषां द्वन्द्वैर्मिथुनैर्दम्पतिभिरित्यर्थः गीतः कीर्त्तितः सन्, द्यां स्वर्गम्, स्पृशति गच्छति । अतश्चास्य राजत्वात् दीप्तिमतः ऋषित्वाच्च शान्तस्य वपुषो विश्वसनीयतायां किमपि नाश्चर्य्यमिति भावः ।

अत्र 'ऋषिकल्पे राजनि' इति पूर्वमुक्तत्वात् द्वयोरपि ऋषिराज्ञोः प्रस्तुतत्वं ज्ञेयम् । तेन उभयोरपि ऋषिराज्ञोः वसत्यध्याक्रमणात्मकक्रियारूपैकधर्म्माभिसम्बन्धात् तपः-सञ्चयात्मकक्रियारूपैकधर्म्माभिसम्बन्धात् मुनिशब्दात्मकगुणरूपैकधर्म्माभिसम्बन्धाच्च तुल्य-योगितालङ्कारत्रयम्, 'केवलं राजपूर्वः' इत्यनेन इतरऋषिभ्य आधिक्यप्रतिपादनात् व्यतिरेकालङ्कारश्च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः ।

तथा अध्याक्रान्तेत्यादीन् बहून् प्रसिद्धान् सामान्यधर्म्मानुक्त्वा 'केवलं राजपूर्वः' इत्यनेन विशेषोक्तेर्विशेषणं नाम नाट्यलक्षणम्—"अर्थान् सिद्धान् बहूनुक्त्वा विशेषोक्ति-र्विशेषणम्" इति दर्पणलक्षणात् ।

"आश्रमो ब्रह्मचर्य्यादौ वानप्रस्थे वने मठे । अस्त्रियाम्" इति मेदिनी । "अथ द्विमन्तौ ना धर्म्मे व्रते तपः" इति त्रिकाण्डशेषः । "भरता इत्यपि नटाश्चारणाश्च कुशीलवाः" इत्यमरः ।

प्रजापालने राज्ञां धर्म्ममाह मनुः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

দ্বিতীয়ঃ । সখে ! অয়ং স বলভিৎসখো দুষ্মন্তঃ ? (ঢ)।

প্রথমঃ । অথকিম্ । (ণ)

দ্বিতীয়ঃ । তেন হি—(ত)

"সংগ্রামেষ্বনিবর্ত্তিত্বং প্রজানাঞ্চৈব পালনম্ ।

শুশ্রূষা ব্রাহ্মণানাঞ্চ রাজ্ঞাং শ্রেয়স্করং পরম্ ॥"

মন্দাক্রান্তা বৃত্তম্ ॥১৫॥

(ঢ) দ্বিতীয় ইতি । দ্বিতীয়ঃ পূর্ব্বভিন্ন ঋষিকুমার ইত্যর্থঃ । বলং তদাখ্যমসুরং ভিনত্তি বিনাশয়তীতি বলভিদিন্দ্রঃ, তস্য সখেতি বর্ত্ত "রাজাহন্ সখিভ্যষ্টচ্" ইতি রাজাদিত্বাদৎ । অত্র কাক্বা প্রশ্নো ব্যজ্যতে ।

"বলারাতিঃ শচীপতিঃ" ইত্যমরঃ ।

(ণ) প্রথম ইতি । অথকিমিত্যেকমেব অঙ্গীকারার্থমব্যয়ম্ ।

"অঙ্গীকারেঽপি চাথকিম্" ইতি হারাবলী ।

(ত) দ্বিতীয় ইতি । তেন হি দুষ্মন্তত্বেনৈব হেতুনা ।

ইনিও, সর্ব্বভোগ্য আশ্রমে বাস করেন, প্রজা পালন করায় প্রত্যহ তপস্যা সঞ্চয় করেন এবং জিতেন্দ্রিয় এই মহাত্মারও এইরূপ পবিত্র নাম আছে, তবে তাঁহার পূর্ব্বে 'রাজ' এই শব্দটি সেই 'রাজমুনি বা রাজর্ষি' শব্দ, নটদম্পতিগণকর্ত্তৃক কীর্ত্তিত স্বর্গ স্পর্শ করিয়া থাকে ॥১৫॥

(ঢ) দ্বিতীয়মুনিকুমার। সখে! ইনি কি সেই ইন্দ্রের দুষ্মন্ত ?।

(ণ) প্রথমমুনিকুমার। হাঁ।

(ত) দ্বিতীয়মুনিকুমার। তাহা হইলে—

(১) গৌতম ! অয়ং সঃ…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीम्
एकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यैः
अस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे (१) ॥१६॥

---

नैतदिति । नगरस्य नगरद्वारस्य यः परिघः अर्गलं तद्वत् प्रांशू दीर्घौ बाहू यस्य सः, एक एव अयं दुष्मन्तः, उदधिः समन्तात् परिवेष्टनकारी समुद्र एव श्यामा तज्जलस्य श्यामत्वात् श्यामवर्णा सीमा यस्याः ताम्, कृत्स्नां समग्राम्, धरित्रीं पृथिवीम्, यत् भुनक्ति पालयति ; एतत् चित्रम् आश्चर्यं न ; एकस्यैव समग्रपृथिवीपालनम् आश्चर्य्यमेव भवितुमर्हति, किन्तु अस्मिन् तदाश्चर्य्यं नेत्यर्थः । कुत इत्याह हि यस्मात्, दैत्यैः सह सक्तं प्रवृत्तं वैरं विरोधो येषां ते, सुरा देवाः, समितिषु युद्धेषु, अधिज्ये आरोपितगुणे, अस्य दुष्मन्तस्य धनुषि, पुरु प्रचुरं हूतं यज्ञीयघृतादिकं यस्य स पुरुहूत इन्द्रस्तस्येदमिति तस्मिन् पौरुहूते वज्रे च, विजयम्, आशंसन्ते उभयोरपि दुष्करकार्य्यसाधकत्वविश्वासात् आकाङ्क्षन्ति । अतश्च इन्द्रसमानवीरत्वादिकस्यैव दुष्मन्तस्य समग्रपृथिवीपालने न किञ्चिदाश्चर्य्यमिति भावः ।

अत्र दुष्मन्तस्य प्रस्तुतत्वेन तदङ्गतया तद्धनुषोऽपि प्रस्तुतत्वात् पौरुहूतवज्रस्य चाप्रस्तुतत्वात् तयोरुभयोरेकविजयक्रियाभिसम्बन्धात् दीपकमलङ्कारः, नगरेत्यादिविशेषणे लुप्तोपमा च, अनयोर्मिथो निरपेक्षतया संसृष्टिः । तथा श्यामशब्दः समस्तधरित्रीपालनं प्रति न किञ्चिदुपकुरुत इति "विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये !" इति दर्पणोदाहृतवत् अपुष्टार्थत्वदोषः, एवं नगरपदेन नगरद्वारे लक्षणाकरणात् तत्र च रूढि-प्रयोजनाभावात् नेयार्थत्वदोषः ; 'उदधिप्रान्तसीमाम्' इति पाठेन 'एकः कृत्स्नामवति नगरद्वारकीलप्रविष्टौ' इति पाठेन च तयोः समाधानम् । नगरद्वारस्य कीलवत् अर्गलवत् प्रविष्टौ बाहू यस्य स इति तदर्थः ; तेनैव च बाह्वोर्दीर्घत्वप्रतीतिः, "राजते मृगलोचना" इत्यादौ मृगलोचनवत् सुन्दरलोचना इति प्रतीतिवत् । उदधिसीमत्वेऽपि

---

(१) सुरा बद्धवैराः···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभौ। उपगम्य। विजयस्व राजन् ! ।

राजा। आसनादुत्थाय। अभिवादये भवन्तौ।

उभौ। स्वस्ति भवते। इति फलान्युपहरतः (१)। (थ)

---

अभ्यन्तरे खण्डविशेषेषु अन्येषां पालनस्य निरासाय कृत्स्नामिति विशेषणम्; ए
नाधिकपदतादोषः।

अध्याक्रान्तेत्यादित एतदन्ते राज्ञः प्रशंसनात् पुष्पं नाम प्रतिमुखसन्धेरङ्ग
"पुष्पं विशेषवचनं मतम्" इति दर्पणलक्षणात्।

"परिघो योगभेदे स्यात् मुद्गरेऽर्गलघातयोः" इति विश्वः। "दीर्घे प्रांशु विशा
इति धनञ्जयः। मन्दाक्रान्ता वृत्तम् ॥१६॥

(थ) उभाविति। स्वस्ति शुभमस्त्विति शेषः। उपहरतः उपहारभावेन द
"स्वस्त्याशीःक्षेमपुण्यादौ" इत्यमरः। भवते इति "नमः स्वस्ति" इत्यादिना चतुर्थी।

शून्यहस्तेन राजादिदर्शनं निषिध्य पुनः किञ्चिद्दाने फलमाह स्मृतिः—

"रिक्तपाणिर्न पश्येत्तु राजानं देवतां गुरुम्।
नैमित्तिकञ्च वैद्यञ्च फलेन फलमादिशेत् ॥"

---

পুরের অর্গলের ন্যায় দীর্ঘবাহু ইনি একাই যে, শ্যামসমুদ্রবে
সমগ্রপৃথিবী পালন করিতেছেন, ইহা আশ্চর্য্য নহে। কারণ, দৈ
দিগের সঙ্গে শত্রুতা উপস্থিত হইলে দেবতারা যুদ্ধে ইহার আরোপি
গুণ ধনুতে এবং ইন্দ্রের বজ্রে জয়ের আশা করেন ॥১৬॥

দুই জনই। ( নিকটে যাইয়া ) মহারাজের জয় হউক।

রাজা। ( আসন হইতে উঠিয়া ) আপনাদিগকে অভি
করিতেছি।

(থ) মুনিকুমারদ্বয়। আপনার মঙ্গল হউক। ( এই
কতকগুলি ফল উপহার দিলেন। )

---

(১)···উপনয়তः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सप्रणामं परिगृह्य। आगमनप्रयोजनं श्रोतुमिच्छामि (१)। (द)

उभौ। विदितो भवानिहस्थस्तपस्विनाम्। ते च भवन्तमभ्यर्थयन्ते (२)। (ध)

राजा। किमाज्ञापयन्ति ?।

उभौ। तत्रभवतः कण्वस्य कुलपतेरसान्निध्यात् रक्षांसि न इष्टिविघ्नमुत्पादयन्ति ; तत् कतिपयदिवसमात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति (३)। (न)

---

(द) राजेति। सप्रणामं प्रणामं कृत्वेत्यर्थः। परिगृह्य ऋषिकुमाराभ्यामुपहृतानि फलानि गृहीत्वा।

(ध) उभाविति। भवान् इहस्थः अत्र तपोवन एव तिष्ठतीत्येवंरूपेण तपस्विनां विदितः अवगतः। ते च तपस्विनः। अभ्यर्थयन्ते किञ्चिद्विषयं प्रार्थयन्ति। विदित इति "मतिबुद्धिपूजार्थेभ्यः क्तः" इति वर्त्तमाने क्तप्रत्ययः, तद्योगाच्च तपस्विनामिति "वर्त्तमानाधिकरणयोः क्तस्य च वर्त्तमाने" इति कर्त्तरि षष्ठी।

---

(द) রাজা। (প্রণামপূর্ব্বক সেগুলি গ্রহণ করিয়া) আপনাদের আগমনের উদ্দেশ্য শুনিতে ইচ্ছা করি।

(ধ) মুনিকুমারদ্বয়। আপনি যে এখানে আছেন, তাহা তপস্বীরা জানিয়াছেন। তাঁহারা আপনার নিকট কোন বিষয় প্রার্থনা করিতেছেন।

রাজা। কি আদেশ করিতেছেন ?।

---

(१)...श्रोतुमिच्छामि।

(२) विदितो भवानाश्रमसदामिहस्थः। तेन भवन्तं प्रार्थयन्ते।

(३) कण्वस्य महर्षेः। तत् कतिपयरात्रम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । अनुगृहीतोऽस्मि ।

विदू । अपवार्य्य । एस दाणिं भअदो अणुऊलो ग-
हत्थो (१) । (प)

(प) एष इदानीं भवतः अनुकूलः गलहस्तः ।

(न) उभाविति । तत्रभवतः पूजनीयस्य, कुलपतेः प्रागुक्तलक्षणस्य कण्वस्य, असान्निध्यात् सान्निध्याभावेन भयाभावादित्यर्थः, रक्षांसि राक्षसाः, नः अस्माकं इष्टिविघ्नं यज्ञान्तरायम् । तत् तस्मात्, कतिपयदिवसमात्रं न पुनर्दीर्घकालं आश्रमपदस्यार्थः ; सारथिरेव द्वितीयो यस्य तेन अन्यान् जनान् विसृज्य केवलेन सारथि-सहेत्यर्थः । बहुतरलोकसन्निधाने आश्रमपीड़ा स्यादिति भावः । सनाथीकरणं प्रभुयुक्तः क्रियताम् । इति अभ्यर्थयन्त इति सम्बन्धः । तथा च कण्वस्य ... भवतः शरात् भीता राक्षसा यज्ञविघ्नकरणाय नागमिष्यन्तीति भावः ।

अत्र उपन्यासो नाम प्रतिमुखसन्धेरङ्गम्—"उपन्यासः प्रसादनम्" इति ... लक्षणात् ।

(प) विदू इति । अपवार्य्य ऋषिकुमारौ श्रवणे वारयित्वा । तल्लक्षणं ... दर्पणे—"तद्भवेदपवारितम् । रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते ॥"

यतो बलपूर्वकहस्तदानेन प्रेरणं गलहस्तः । तथा च एष भवतो ... गलहस्तवत् मुनिभिर्बलपूर्वकी राक्षसापसारणकार्य्ये नियोग इदानीम् एतत्सम... -मित्यर्थः, अनुकूलः कार्य्यसाधकः संवृत्त इति शेषः, शकुन्तलादर्शनादिजनकत्वादित्याशयः ।

(न) मुनिकुमारद्वय । 'পূজনীয় কুলপতি কণ্বের অসান্নিধ্যে রাক্ষসগণ আমাদের যজ্ঞের বিঘ্ন জন্মাইতেছে ; অতএব আপনি ... সারথিকে নিয়া, কয়েকটী দিন মাত্র আমাদের আশ্রমটীকে সনাথ ... ইহাই প্রার্থনা করিতেছেন ।

রাজা । অনুগৃহীত হইলাম ।

(१) एसा दाणिं अणुऊला दे अब्भत्थणा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । स्मितं कृत्वा । रैवतक ! मद्वचनादुच्यतां सारथिः, सबाणकार्म्मुकं रथमुपस्थापयेति (१) । (फ)

दौवा । जं देवो आणवेदि । इति निष्क्रान्तः । (ब)

उभौ । सहर्षम् ।

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥१७॥

(ब) यत् देव आज्ञापयति ।

(फ) राजेति । स्मितं कृत्वा, उक्तविदूषकोक्तिश्रवणादेवेति भावः । बाण-कार्म्मुकाभ्यां सहेति सबाणकार्म्मुकम् । इतिशब्दस्य उच्यतामित्यनेनान्वयः ।

अन्विति । पूर्वेषां पूर्वपुरुषाणाम्, अनुकारिणि अनुकरणकर्त्तरि त्वयि, इदम् अस्माकं राक्षसभयात् त्राणस्वीकरणं युक्तरूपं योग्यमेव जातमिति शेषः । तथा च पौरवाः पुरुवंशीया राजानः, आपन्नानां विपन्नजनानाम् अभयसत्रेषु सर्वदा अभयदानेषु, दीक्षिताः खलु व्रतिन एव । पौरवत्वात् त्वय्यपि युक्तरूपमिदमित्याशयः ।

अत्र पराद्धगतकारणेन पूर्वार्द्धगतकार्य्यस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः । "आपन्न आपत्प्राप्ते स्यात्" इत्यमरः । "सत्रं यज्ञे सदादानाच्छादनारण्यकैतवे" इति मेदिनी ॥१७॥

(प) विदूषक । (রাজার প্রতি চুপি চুপি) বর্ত্তমান সময়ে ইহা তোমার অনুকূল গলাধাক্কা ।

(ফ) রাজা । (ঈষৎ হাস্য করিয়া) রৈবতক ! আমার আদেশ অনুসারে সারথিকে বল—'বাণ ও ধনুর সহিত রথ উপস্থিত কর ।'

(ব) দৌবারিক । মহারাজ যাহা আদেশ করেন (এই বলিয়া চলিয়া গেল ।)

(१)...सबाणासनं रथम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। সপ্রণামম্। গচ্ছতাং ভবন্তৌ; অহমনুপদমা
এব (১)। (ভ)

উভৌ। বিজয়স্ব। ইতি নিষ্ক্রান্তৌ।

রাজা। মাধব্য! অপ্যস্তি কুতূহলং শকুন্তলাদর্শ
প্রতি (২)। (ম)

বিদূ। পঢ়মং অপরিবাধং আসী; সম্পদং রক্খসবু
ন্তেণ সপরিবাধং (৩)। (য)

(য) প্রথমমপরিবাধমাসীৎ; সাম্প্রতং রাক্ষসবৃত্তান্তেন সপরিবাধম্।

(ভ) রাজেতি। পদাৎ ভবতীঃ পদক্ষেপাৎ অনু পশ্চাদিত্যনুপদং ভবতোঃ
পশ্চাদেবেত্যর্থঃ।

(ম) রাজেতি। অপিশব্দঃ প্রশ্নে।

মুনিকুমারদ্বয়। (আনন্দের সহিত) আপনি পূর্ব্বপুরু
অনুকরণকারী, সুতরাং আপনাতে ইহা উপযুক্তই হইয়াছে।
পুরুবংশীয়গণ, বিপন্ন ব্যক্তিদিগকে অভয়-দান-যজ্ঞে চিরকালই
হইয়া আসিতেছেন ॥১৭॥

(ভ) রাজা। (প্রণামপূর্ব্বক) আপনারা যান; আমি আ
পিছনে পিছনেই আসিতেছি।

মুনিকুমারদ্বয়। আপনার জয় হউক। (এই বলিয়া
গেলেন।)

(ম) রাজা। মাধব্য! শকুন্তলাকে দেখিবার জন্য
কৌতুক আছে কি?।

(১)·· পুরী ভবন্তৌ। (২) মাঢব্য! অপ্যস্তি শকুন্তলাদর্শনে কুতূহলং
(৩) পঢ়মং অপরিবাহং আসি। দাণিং রক্খসবুত্তন্তেণ বিন্দুবি ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। मा भैषीः, ननु मत्समीप एव वर्त्तिष्यसे (१)। (र)

विदू। एस तुह रध-चक्क-रक्खीभूदोह्मि, जइ ण कोवि आअच्छिअ विग्धं करेदि (२)। (ल)

प्रविश्य दौवारिकः। जअदु जअदु भट्टा। सज्जो रधो भत्तुणो विजअप्पआणं अवेक्खदि। एस उण णअरादो देवीणं आणत्तिहरो करभओ आअदो (३)। (व)

(ल) एष तव रथचक्ररक्षीभूतोऽस्मि, यदि न कोऽपि आगत्य विघ्नं करोति।

(व) जयतु जयतु भर्त्ता। सज्जो रथः भर्त्तुर्विजयप्रयाणमपेक्षते। एष पुनर्नगरात् देवीनामाज्ञप्तिहरः करभक आगतः।

(य) विदू इति। प्रथमं राक्षसवृत्तान्तश्रवणात् पूर्वम्, अपरिबाधं निर्बाधम्, आसीत् तत् कुतूहलमित्यन्वयः, निरुपद्रवत्वादित्याशयः। सपरिबाधं कुतूहलं वर्त्तत इति शेषः, राक्षसभयादिति भावः।

(र) राजेति। भैषीरिति माथोगे अद्यतनी। नन्विति सम्बोधने। स्वसमीपवर्त्तने तु राक्षसभयाभाव इत्याशयः।

(ल) विदू इति। रथचक्रे रथस्य चक्रद्वयं रक्षतीति रथचक्ररक्षी तद्भूतोऽस्मि, युध्यमानस्य रथिनश्चक्ररक्षकस्यावश्यकत्वादिति भावः। एतेन गमनानुमतिः सूचिता। विघ्नं रथचक्ररक्षाया व्याघातम्।

(য) বিদূষক। প্রথম অবাধ ছিল, এখন রাক্ষসের বৃত্তান্তে সবাধ হইয়াছে।

(র) রাজা। ওহে! ভীত হইওনা, আমার নিকটেই থাকিবে।

(ল) বিদূষক। এই তোমার রথের চক্ররক্ষক হইলাম, যদি কেহ আসিয়া বিঘ্ন না করে।

(१) क्वचित् एवशब्दो नास्ति। (२) एस रक्खआदो रक्खिदोह्मि।

(३) सज्जो रहो भट्टिणो विजअप्पत्थाणं अवेक्खइ।...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। সাদরম্। কিমম্বাভিঃ প্রেষিতঃ ?। (শ)

দৌবা। অধই। (ষ)

রাজা। তেন হি প্রবিশ্যতাম্ (১)। (স)

দৌবা। তহ। ইতি নিষ্ক্রম্য পুনঃ করভকেণ সহ প্রবিশ্য। করভ

এসো ভট্টা, উবসপ্পদু ভবং (২)। (হ)

(ষ) অথকিম্।

(হ) তথা। করভক ! এষ ভর্ত্তা উপসর্পতু ভবান্।

(ব) প্রবিশ্যেতি ; ভর্ত্তুঃ স্বামিনো ভবতঃ। বিজয়প্রযাণং বিজয়ায় য
নগরাৎ রাজধানীতঃ, দেবীনাং ভবতো মাতৃণাম্, আজ্ঞাপ্তিহর আদেশগ্রাহী, করে
শ্রাবক ইব বলবানিতি করভকঃ তদাখ্যো দূতঃ। সংজ্ঞায়াং কপ্রত্যয়ঃ।

(শ) রাজেতি। সাদরম্, মাতৃভিঃ প্রেষিতত্বাদিতি ভাবঃ।

(ষ) রাজেতি। তেন হি অম্বাভিঃ প্রেষিতত্বেনৈব হেতুনা।

(হ) দৌবেতি। তথা প্রবেশ্যতে ময়েত্যর্থঃ।

(ব) দৌবারিক। ( প্রবেশ করিয়া ) মহারাজের জয় হউক,
হউক। রথ সজ্জিত হইয়া মহারাজের বিজয়যাত্রার অপেক্ষা করি
এদিকে আবার রাজধানী হইতে করভক, দেবীগণের আদেশ
—এই-আসিয়াছে।

(শ) রাজা। ( আদরের সহিত ) মাতারা পাঠাইয়াছেন কি

(ষ) দৌবারিক। হাঁ।

(স) রাজা। তবে প্রবেশ করাও।

(হ) দৌবারিক। তাহাই। ( ইহার পর নির্গত হইয়া

(১) ননু প্রবিশ্যতাম্।

(২) এষো ভট্টা, উবসপ্প।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करभकः । उपसृत्य प्रणम्य च । जअदु जअदु भट्टा । देवीओ आणवेन्ति (१) । (च)

राजा । किमाज्ञापयन्ति ? । (२)

कर । आआमिणि चउट्टदिअसे पुत्तपिण्डपालणो णाम उववासो भविस्सदि ; तहिं दीहाउणा अवस्सं अह्मे सम्भावइ-दव्वा त्ति (३) । (क)

(च) जयतु जयतु भर्त्ता । देव्य आज्ञापयन्ति ।

(क) आगामिनि चतुर्थदिवसे पुत्रपिण्डपालनो नाम उपवासो भविष्यति, तस्मिन् दीर्घायुषा अवश्यं वयं सम्भावयितव्या इति ।

(च) करभक इति । देव्यः भवन्मातरः ।

(क) करेति । पुत्रपिण्डानाम् आत्मनो पुत्रदातव्यपिण्डानां पालनं रक्षणं यस्मात् सः । आत्मनः पूर्वं पुत्रमरणे आत्ममरणात् परं वा जीवत एव पुत्रस्य मतिर्भवत्ये पुत्रदातव्यपिण्डलोपाशङ्का स्यात् तन्निवृत्त्यर्थोऽयमुपवासस्तत्कालीनयोषित्प्रचलित इति बोध्यम् । दीर्घायुषा त्वया पुत्रेण । सम्भावयितव्या सम्मानयितव्या उपस्थित्या सन्तोष-णीया इत्यर्थः ।

करभकের সহিত প্রবেশ করিয়া) করভক! এই প্রভু রহিয়াছেন; তুমি নিকটে যাও ।

(ক) করভক । ( নিকটে যাইয়া প্রণাম করিয়া ) মহারাজের জয় হউক, জয় হউক । দেবীগণ আদেশ করিয়াছেন ।

রাজা । কি আদেশ করিয়াছেন ? ।

(१) जेदु जेदु भट्टा । देई आणवेइ, आआमिणि चउत्थदिवहे पउत्तपारणो मे उववासो होहिइ, तहिं दीहाउणा अवस्सं संभाविदव्व त्ति ।

(२) पाठोऽयं पुस्तकान्तरे नास्ति । (३) एष पाठोऽपि पूर्वकरभकवाक्ये संलग्नः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । इतस्तपस्विनां कार्य्यम्, इतो गुरुजनाज्ञा, उभ-मप्यनतिक्रमणीयम्, तत् किमत्र प्रतिविधेयम् (१) । (ख)

विदू । भो ! तिसङ्कु विअ अन्तरा चिट्ठ (२) । (ग)

(ग) भोः ! त्रिशङ्कुरिव अन्तरा तिष्ठ ।

---

(ख) राजेति । इतः अस्मिन् आश्रमे । कार्य्यं राक्षसविघ्ननिवारणम् । ... स्थात्र स्थातव्यमित्याशयः । इतो नगरे, गुरुजनानां मातृणाम् आज्ञा तत्र गमनाज्ञा ... अतश्च तत्र गन्तव्यमिति भावः । अनतिक्रमणीयम् उभयपक्षयोरपि गुरुत्वादिति ... तत् तस्मात्, अत्र सङ्कटे, किं प्रतिविधेयं कः प्रतीकारः कर्त्तव्यः ।

(ग) विदू इति । त्रिशङ्कुर्नाम कश्चित् सूर्य्यवंशीयो राजा, स इव अन्तरा ... —त्रिशङ्कुः सशरीर एव स्वर्गं यियासुर्गुरुं वशिष्ठमुपागतस्तेन च प्रत्याख्यातो गुरु... ययौ, ते च 'गुरुं विहायान्यानुपागत इति चाण्डालो भव' इत्यभिशप्तः सोऽपि ... विद्वेषिणं विश्वामित्रं शरणमगात् । विश्वामित्रस्तु तं याज्यत्वेन गृहीत्वा याग... च सशरीरमेव तं स्वर्गं प्रेरयामास । अथ तु देवराजः गुरुद्रोही अभिशप्त इति ... पातयामास । अधः पतंश्च त्रिशङ्कुः 'न पत' इति विश्वामित्रेणाभिहितः स्वर्ग... रन्तराल एव तस्थौ इति रामायणवार्त्तानुसन्धेया ।

—रामायणे त्रिशङ्कुनाम्नः कारणञ्चोक्तं यथा—

---

(क) करभक । "আগামী চতুর্থ দিবসে 'পুত্রপিণ্ডপাল...' উপবাস হইবে, সেই দিন তুমি উপস্থিত হইয়া অবশ্যই আমা... আনন্দিত করিবে ।"

(খ) রাজা । এদিকে তপস্বীদিগের কার্য্য ; ওদিকে গু... আদেশ ; দুই-ই অলঙ্ঘনীয় । অতএব এই সঙ্কটে কি প্রতি... করা যায় ।

(গ) বিদূষক । ওহে ! ত্রিশঙ্কুর ন্যায় মধ্যখানে থাক ।

---

(१)···तपस्विकार्य्यम् ।···द्वयमपि । (२)···अन्तराले ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सत्यमाकुलीभूतोऽस्मि। (घ)

कृत्ययोर्भिन्नदेशत्वात् द्वैधीभवति मे मनः।
पुरः प्रतिहतं शैलैः स्रोतः स्रोतोवहां यथा ॥१८॥

विचिन्त्य। सखे! माधव्य! त्वमप्यम्बाभिः पुत्र इव गृहीतः, स भवानितः प्रतिनिवृत्य तपस्विकार्य्यव्यग्रतामस्माकमावेद्य तत्रभवतीनां पुत्रकार्य्यमनुष्ठातुमर्हति? (१)। (ङ)

"पितुश्च परितोषेण गुरोर्दोग्ध्रृवधेन च।
अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः॥
एवं त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महातपाः।
त्रिशङ्कुरिति होवाच त्रिशङ्कुरिति स स्मृतः॥"

(घ) राजेति। आकुलीभूतोऽस्मि व्यग्रीभूतोऽस्मि, कर्त्तव्यविमूढत्वादिति भावः। अथ कीदृगाकुल इत्याह कृत्ययोरिति। कृत्ययोः कार्य्ययोः तपस्विनां राक्षसविघ्नापसारणस्य मातृणां सम्भावनस्य चेत्यर्थः, भिन्नौ परस्परदूरवर्त्तिनावित्यर्थः देशौ आश्रयस्थाने ययोस्तस्य भावस्तस्मात् हेतोः, मे मम मनः, पुरः अग्रतः, शैलैः शिलासमूहैः, प्रतिहतं प्रतिरुद्धम्, स्रोतोवहां नदीनाम्, स्रोतो यथा प्रवाह इव, द्वैधीभवति उभयदिग्गतं भवति। अतएव एकतरनिर्द्धारणाभावात् आकुलीभूतोऽस्मीति भावः।

अत्र श्रौती उपमा, तथा स्रोतः स्रोत इत्यनयोः पौनरुक्त्यात् प्रथमान्तलुप्तद्वितीयान्ततया तात्पर्य्यमात्रतो भेदाच्च लाटानुप्रासः; अनयोः संसृष्टिः ॥१८॥

(घ) রাজা। যথার্থই আকুল হইয়া পড়িয়াছি।

প্রস্তরসমূহে সম্মুখভাগ প্রতিহত হইলে নদীর স্রোত যেমন দুই ভাগে বিভক্ত হইয়া চলিতে থাকে, আমার মনও তেমন, দুইটী কার্য্য, দূরবর্ত্তী ভিন্ন ভিন্ন স্থানে বলিয়া দুই দিক চলিতেছে॥১৮॥

(१) विचिन्त्य। सखे! त्वमम्बया पुत्र इति प्रतिगृहीतः। अतः भवान्… तपस्विकार्य्यव्यग्रमनसम्…पुत्रकृत्यम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। भो! मा रक्खसभीरुअं मं अवगच्छ (१)। (च)

राजा। स्मितं कृत्वा। भो महाब्राह्मण! कथमिदं त्वयि सम्भाव्यते ? (२)। (छ)

(च) भोः! मा राक्षसभीरुकं माम् अवगच्छ।

(ङ) विचिन्त्येति। गृहीतः ज्ञातः, सततमत्सहचरत्वादिति भावः। "वाअदय" इति बहुवचनात् मम, तपस्विकार्य्ये व्यग्रताम् आसन्नताम्, ज्ञापयित्वा, तत्रभवतीनां पूज्यानां मातृणाम्, पुत्रकार्य्यमनुष्ठातुमर्हति ? ... भाविनेति भावः।

(च) विदू इति। राजादेशेनावश्यमेव राजधान्यां गन्तव्यम्। तथा ... राक्षसदर्शनमपि न स्यादित्यतः प्राप्तावसर आसङ्कते भो इति। न खलहं राक्षस... स्वयमेव राजधान्यां गच्छामि, अपि तु भवानेव मां तत्र प्रेषयतीत्याशयः। ... वीरत्वं विदूषकस्य।

(छ) राजेति। इदानीं राक्षसदर्शनस्यासम्भवत्वादेव तवेयमाशङ्का इति ... राज्ञः स्मितमिति बोध्यम्। महाब्राह्मण! निकृष्टविप्र! इदं राक्षसेभ्यो ... त्वयि कथं सम्भाव्यते, अपि तु महावीरत्वात् कथमपि नेत्यर्थः। ... शब्दस्वभावादेव महाब्राह्मणशब्दोऽग्रहारकब्राह्मणरूपं निकृष्टविप्रमभिधत्ते। एवोक्तम्—

"शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे।
यात्रायां पथि निद्रायां महच्छब्दो न दीयते॥"

(ঙ) (চিন্তা করিয়া) সখে! মাধব্য! মাতৃগণ তোমাকে পুত্রের ন্যায় জ্ঞান করেন; সুতরাং তুমি এস্থান হইতে ফিরিয়া ... আমি মুনিগণের কার্য্যে ব্যগ্র আছি ইহা জানাইয়া, মাতৃগণের ... কার্য্য করিতে পার।

(চ) বিদূষক। ওহে! আমাকে রাক্ষসভীরু মনে করিও না

(१) ण क्खु, मं रक्खोभीरुअं गणेहि। (२) एष पाठः क्वचिन्नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। तेण हि राआणुअ विअ गच्छिदुं इच्छेमि (१)। (ज)

राजा। ननु तपोवनोपरोधः परिहरणीय इति सर्वानेवानुयात्रिकांस्त्वयैव सह प्रेषयिष्यामि (२)। (झ)

विदू। सगर्वम्। जुअराआह्मि दाणिं संवुत्तो (३)। (ञ)

राजा। आत्मगतम्। चपलोऽयं ब्राह्मणवटुः कदाचिदिमामस्मत्प्रार्थनामन्तःपुरिकाभ्यो निवेदयेत्। भवत्वेवं तावद्वक्ष्यामि। विदूषकस्य हस्तं गृहीत्वा प्रकाशम्। सखे! माधव्य!

(ज) तेन हि राजानुज इव गन्तुमिच्छामि।

(झ) युवराजोऽस्मि इदानीं संवृत्तः।

(ज) विदू इति। राजानुज इवेति महाड़म्बरेणेत्यर्थः।

(झ) राजेति। तपोवनापरोधः वृक्षलतादिभञ्जनेन तपोवनक्षतिः, परिहरणीयो वर्जनीयः। अनुयात्रया पश्चाद्गमनेन संसृष्टा इति अनुयात्रिका अनुचरास्तान्। तथा सति तपोवनोपरोधो न स्यादिति भावः।

(ञ) विदू इति। इदानीं सर्वेषामेव राजानुयात्रिकाणां ममानुयात्रिकत्वे, युवराजोऽस्मि संवृत्तः, तथैव गमनाड़म्बरस्य भावित्वादित्याशयः।

(ছ) রাজা। (ঈষৎ হাস্য করিয়া) ওহে মহাব্রাহ্মণ! তোমার প্রতি এরূপ সম্ভাবনা করিব কেন?।

(জ) বিদূষক। তাহা হইলে আমি রাজার ছোট ভাইর মত যাইতে ইচ্ছা করি।

(ঝ) রাজা। ওহে! তপোবনের ক্ষতি নিবারণ করিতে হইবে, এই জন্য সমস্ত অনুচরদিগকে তোমার সঙ্গেই পাঠাইব।

(ঞ) বিদূষক। (গর্ব্বের সহিত) এখন আমি যুবরাজ হইলাম।

(१) जह राआणुएण गन्तव्वं तह गच्छामि।

(२)···प्रस्थापयामि। (३) तेण हि···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋषिगौरवादाश्रमपदं प्रविशामि, न खलु सत्यमेव तापस-
कन्यायामभिलाषो मे । पश्य—(१) (ट)

क्व वयं, क्व परोक्षमन्मथो
मृगशावैः सह वर्द्धितो जनः ।
परिहासविजल्पितं सखे !
परमार्थेन न गृह्यतां वचः ॥१८॥

(ट) राजेति । चपलः अधीरप्रकृतिः ब्राह्मणवटुः ब्राह्मणबालकः अल्पवयस्क-
त्वादपि कर्त्तव्याकर्त्तव्यज्ञानहीनो ब्राह्मण इत्यर्थः, इमां शकुन्तलाविषयाम्, अस्मत्प्रार्थ-
नाम् मम लिप्साम्, अन्तःपुरिकाभ्यः अन्तःपुरवासिनीभ्यः प्राक् परिणीताभ्यो मम स्त्रीभ्यः
तथात्वे च तासां मानस्यावश्यम्भावित्वेन महाननर्थो भवेदित्याशयः । एवं वक्ष्यमाण-
प्रकारम् । ऋषिगौरवात् ऋषीणां गुरुत्वज्ञानेन तदनुरोधस्यावश्यरक्षणीयत्वादित्यर्थः ।

अत्र कृतस्य शकुन्तलावृत्तान्तप्रकाशरूपदोषस्य अपलापाय हस्तधारणेन विदूषक-
अनुनयकरणात् पर्य्युपासनं नाम प्रतिमुखसन्धेरङ्गम्—"कृतस्यानुनयः पुनः । स्यात्
पर्य्युपासनम्" इति दर्पणलक्षणात् । विपर्य्ययो नाम नाट्यलक्षणञ्च—"विचारस्या-
भावः सन्देहात्तु विपर्य्ययः" इति तल्लक्षणात् ।

"बालको माणवो बालः किशोरो वटुरित्यपि" इति शब्दरत्नावली । निर्वेदे
सम्भावनायां सप्तमी ।

(ট) (স্বগত) ক্ষুদ্রব্রাহ্মণ, চঞ্চলস্বভাব; সুতরাং হয় ত আমার
এই অভিলাষ কখনও অন্তঃপুরের রমণীদিগের নিকট জানাইয়া দি-
হউক, এইরূপ বলিব। (বিদূষকের হাত ধরিয়া প্রকাশ্যে) সখে
মাধব্য! মুনিগণের গুরুত্ববোধেই তপোবনে প্রবেশ করিতেছি;
বাস্তবিকই তপস্বিকন্যার প্রতি আমার অভিলাষ নাই। দেখ—

(१)…चपलोऽयं वटुः। कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत्।
एनमेवं वक्ष्ये। विदूषकं…। वयस्य!…आश्रमं गच्छामि। अभिलाषः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। एवम्मेदं (१)। (ठ)

(ठ) एवमेतत्।

क्वेति। वयं कामकलायामतीवनिपुणा नागरिकजना इत्यर्थः, क्व कुत्र वर्त्तामहे इति शेषः। मृगशावैः हरिणशिशुभिः सह वर्द्धितः कालेन परिपोषितः, अतएव परोक्षः इन्द्रियाणामविषयः सर्वथैवाविदितः मन्मथः कामो येन सः वन्यभावादेकान्तमुग्ध इत्यर्थः जनः शकुन्तला च क्व कुत्र वर्त्तते। नितान्तविभिन्नप्रकृतिकत्वात् वन्यां प्रति नागरस्याभिलाषः सर्वथैवासम्भव इति भावः। अतएव हे सखे! परिहासेन परिहासकरणाभिप्रायेण विजल्पितम् अनर्थकमभिहितम्, वचः शकुन्तलाविषयकं वाक्यम्, परमार्थेन यथार्थरूपेण, न गृह्यतां नावधार्य्यताम्, परिहासार्थोक्तवाक्यस्य प्रायेणैव मिथ्यात्वादिति भावः।

अत्र वयमित्यस्य परोक्षमन्मथजनस्य च परस्परविरूपस्य संघटनात् विषमालङ्कारः, परोक्षमन्मथत्वं प्रति मृगशावैः सह वर्द्धितत्वं हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्च; अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

सुन्दरी वृत्तम्—"अयुजोर्यदि सौ जगौ, युजोः सभरालगौ यदि सुन्दरी तदा" इति लक्षणात्॥१९॥

(ठ) विदू इति। एतत् त्वयोक्तम्, एवं परिहासविजल्पितं वच एवेत्यर्थः, अतएव मयापि परमार्थेन नावधार्य्यत इत्याशयः।

আমরাই বা কোথায়; আর কামকলা যাহার একেবারে অবিদিত, সেই হরিণশাবকদিগের সহিত বর্দ্ধিত ব্যক্তিই বা কোথায়। অতএব সখে! পরিহাসের জন্য যাহা বলিয়াছি, তাহা সত্য বলিয়া মনে করিও না॥১৯॥

(ঠ) বিদূষক। ইহা এইরূপই হইবে।

(१) अहइं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। माधव्य! त्वमपि स्वनियोगमनुतिष्ठ, अहमपि तपोवनरक्षार्थं तत्रैव गच्छामि (१)। (ड)

इति निष्क्रान्ताः सर्वे। (ढ)

## द्वितीयोऽङ्कः ॥०॥

(ड) राजेति। स्वस्मिन् नियोगम् आत्मानं प्रति समादिष्टं नगरगमनमित्यर्थः।

(ढ) इतीति। इति राज्ञ उक्तौ सत्याम्। राज्ञः केचित् शरीररक्षिण स्तैः सह राजविदूषकयोर्यहुत्वात् सर्वशब्दस्य बहुवचनस्य च उपपत्तिर्बोद्धव्या।

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायाम् अभिज्ञानशकुन्तलटीकायामभिज्ञानकौमुद्यां द्वितीयाङ्कविवरणं समाप्तम् ॥०॥

---

(ড) রাজা। মাধব্য! তুমিও নিজের প্রতি আদেশ পালন কর, আমিও তপোবনরক্ষার জন্য সেইখানেই যাই।

(ঢ) (ইহার পর সকলেই চলিয়া গেল।)

## দ্বিতীয় অঙ্ক ॥০॥

---

(१) क्वचित् एष पाठो न दृश्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# तृतीयोऽङ्कः ।

—०:*:०—

ततः प्रविशति कुशानादाय यजमानशिष्यः । (क)

शिष्यः । विचिन्त्य सविस्मयम् । अहो ! महाप्रभावो राजा दुष्मन्तः ; येन प्रविष्टमात्र एवाश्रमं तत्रभवति सारथिद्वितीये राजनि निरुपप्लवानि नः कर्म्माणि संवृत्तानि (१) । (ख)

का कथा वाणसन्धाने ज्याशब्देनैव दूरतः ।
हुङ्कारेणेव (२) धनुषः स हि विघ्नान् व्यपोहति ॥१॥

(क) तत इति । यजमानो यागे प्रवृत्तस्तस्य शिष्यश्चेति सः ।

(ख) शिष्य इति । महान् प्रभावो दण्डजं तेजो यस्य सः । येन हेतुना, तत्रभवति माननीये, सारथिरेव द्वितीयो यस्य तस्मिन् अनन्यसहाये इत्यर्थः, राजनि, आश्रमम् अस्माकं तपोवनम्, प्रविष्टमात्रे एव प्रविष्टे सत्येव, नः अस्माकम्, कर्म्माणि यागकार्य्याणि, निरुपप्लवानि अनुपद्रवाणि, संवृत्तानि सञ्जातानि ।

ननु कथं निरुपप्लवानीत्याह केति । हि यस्मात्, वाणसन्धाने लक्ष्यं प्रति धनुषि

(क) তদনন্তর কুশ লইয়া যজ্ঞপ্রবৃত্ত কোন মুনিশিষ্যের প্রবেশ ।

(খ) শিষ্য । (চিন্তা করিয়া বিস্ময়ের সহিত) ওহে ! রাজা দুষ্মন্ত মহাপ্রভাবশালী ; যে হেতু কেবল সারথির সহিত সেই রাজা আশ্রমে প্রবিষ্ট হইবামাত্রই আমাদের যজ্ঞকার্য্য নিরুপদ্রব হইয়াছে ।

(१) शिष्यः । अहो महानुभावः पार्थिवो दुष्मन्तः । प्रविष्टमात्र एवाश्रमं तत्र-भवति राजनि निरुपद्रवाणि नः कर्म्माणि प्रवृत्तानि भवन्ति ।

(२) हुङ्कारेणेव...।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावदेतान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपाहरामि
परिक्रम्यावलोक्य च । आकाशे । प्रियंवदे ! कस्येदमुशीरानुले
मृणालवन्ति च नलिनीदलानि नीयन्ते ? (१) । श्रुतिमभिनी
किं कथयसि "आतपलङ्घनाद्बलवदसुस्थशरीरा शकुन्तला, तस्
शरीरनिर्वापणाय" इति ? । प्रियंवदे ! यत्नादुपचर्य्यता
सा हि तत्रभवतः कुलपतेर्द्वितीयमुच्छ्वसितम् । अहम
तावद्वैतानिकं शान्त्युदकमस्या एव गौतमीहस्ते विसर्जयामि
इति निष्क्रान्तः (२) । (ग)

बाणयोजने, का कथा, अपि तु कापि नेत्यर्थः । बाणसन्धानेन तु विघ्नान् व्यपोह
भावः । स राजा, धनुषो हुङ्कारेणेव हुमिति शब्देनेव, दूरतः ज्याशब्देनैव, वि
विघ्नस्वरूपान् राक्षसान्, व्यपोहति निरस्यति । अतो महाप्रभाव एव स राजेति भावः
अत्र का कथेति अर्थापत्तिः हुङ्कारेणेवेति गुणोत्प्रेक्षा च, अनयोर्मिश्रो निरपेक्ष
संसृष्टिः ॥१॥

(ग) यावदिति ; यावच्छब्दो वाक्यालङ्कारे । एतान् दर्भान् कुशान्
यागाय परिष्कृतभूमौ संस्तरणार्थं पातनार्थम्, ऋत्विग्भ्यो याजकेभ्यः, उपा
समर्पयामि । परिक्रम्य यागस्थाने गमनार्थं पादक्षेपं कृत्वा, अवलोक्य प्रियं
नलिनीदलानि नीयन्ते इति दृष्ट्वा । आकाशे शून्ये रङ्गालये वस्तुतः प्रियं
अभावेऽपीत्यर्थः । तथा च "किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम् ॥"

কারণ, বাণসন্ধানের কথা আর কি বলিব ; ধনুর হুঙ্কারের
দূর হইতে জ্যাশব্দদ্বারাই তিনি বিঘ্ন দূর করিয়া থাকেন ॥১॥

(१)···इमान्···उपनयामि । नलिनीपत्राणि ।

(२) किं ब्रवीषि···अस्वस्था शकुन्तला···। तद्धि त्वरितं गम्यताम् । सखि
खलु भगवतः काश्यपस्य कुलपतेरुच्छ्वसितम् ।···अस्यै गौतमीहस्ते विसर्जयिष्यामि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कस्य जनस्य निमित्तं, उशीरानुलेपनं पिष्टवीरणमूलकृतानुलेपनम्, मृणालवन्ति मृणालयुक्तानि, नलिनीदलानि पद्मपत्राणि। स्रुतिम् उत्कर्णत्वादिरूपां श्रवणभङ्गीम्। आतपेन रविकिरणेन लङ्घनात् उपवनपरिष्कारादौ प्लवनात् शरीरव्यापनादित्यर्थः, बलवत् अत्यन्तम् असुस्थं सन्तप्ततया अप्रकृतिस्थं शरीरं यस्याः सा। तस्याः शकुन्तलायाः शरीरस्य निर्वापणाय तापोपशमाय। इति किं कथयसीति पूर्वेणान्वयः।

"लङ्घनन्तूपवासे स्यात् क्रमणे प्लवनेऽपि च" इति मेदिनी। हि यस्मात्, सा शकुन्तला, तत्रभवतः पूजनीयस्य, कुलपतेः प्रागुक्तलक्षणस्य कण्वस्य, द्वितीयम् उच्छ्वसितं जीवनम्, तथैव तेन समादरकरणादिति भावः। वैतानिकं यज्ञसम्बन्धीयम्, शान्त्युदकं तापशान्तिकरं जलम्, अस्यै शकुन्तलायै एव शकुन्तलार्थमेव, गौतम्याः तदाख्यायाः कण्वस्य धर्म्मभगिन्या हस्ते, विसर्ज्जयामि अन्येन केनचित् दापयामि। इति उक्त्वा इति शेषः।

द्वितीयमुच्छ्वसितमिति शकुन्तलोच्छ्वसितयोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्ति-रलङ्कारः।

"वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकम्। क्लीवं वृत्तविशेषे स्यात् त्रिलिङ्गो मन्दतुच्छयोः॥" इति मेदिनी।

---

(গ) বেদির উপরে আস্তরণ করিবার জন্য এই কুশগুলি পুরোহিতদিগের নিকট সমর্পণ করি। ( পাদক্ষেপপূর্ব্বক দেখিয়া শূন্যে ) প্রিয়ংবদা! তুমি কাহার জন্য এই বিণ্যার মূলের অনুলেপন এবং মৃণালযুক্ত পদ্মের পাতাগুলি নিয়া যাইতেছ ?। ( শ্রবণ অভিনয় করিয়া ) কি বলিলে ? রৌদ্রে পরিশ্রম করায় শকুন্তলার শরীর অত্যন্ত অসুস্থ হইয়াছে ; তাহার শরীর শীতল করিবার জন্য। প্রিয়ংবদা! যত্নপূর্ব্বক পরিচর্য্যা কর ; কারণ, শকুন্তলা মাননীয় কুলপতি কণ্বের দ্বিতীয় জীবন। আমিও ইহার জন্যই গৌতমীর হাতে যজ্ঞীয় শান্তির জল পাঠাইয়া দিতেছি। ( এই বলিয়া চলিয়া গেল। )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## विष्कम्भकः। (घ)

ततः प्रविशति समदनावस्थो राजा (१)। (ङ)

राजा। सचिन्तं निश्वस्य (२)।

जाने तपसो वीर्य्यं सा बाला परवतीति मे विदितम्।
न च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम् (३)॥

(घ) विष्केति। विष्कम्भाति पूर्वापरम् उपाख्यानं संयोजयति यः स विष्कम्भकः। तल्लक्षणन्तु साहित्यदर्पणे यथा—

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः॥"

तथा चात्र 'अहो महाप्रभावो राजा' इत्यादिना 'विज्ञान् व्यपोहति' इत्यं सन्दर्भेण यज्ञायतनात् राक्षसापसारणरूपवृत्तकथांशनिदर्शनम्; 'प्रियंवदे! कस्ये' इत्यादिना 'विसर्जयामि' इत्यनेन च शकुन्तलासन्तापशुश्रूषात्मकवर्त्तिष्यमाणकथां निदर्शनं सूचितमित्यनुसन्धेयम्। स चायं मध्यमपात्रेण यजमानशिष्येण प्रयोजितत्वात् शुद्ध इति बोध्यम्।

(ङ) तत इति। मदनावस्थया उत्कण्ठादिकामदशया सहेति समदनावस्थः राजा प्रकरणात् दुष्मन्तः।

---

(घ) বিষ্কম্ভক।

(ঙ) তদনন্তর সকাম অবস্থায় রাজার প্রবেশ।

রাজা। (চিন্তার সহিত নিশ্বাস ত্যাগ করিয়া)

---

(१) कामयमानावस्थः। (२) राजा। निश्वस्य।

(३)...चलमपि ततो हृदयं तथापि नेदं निवर्त्तयितुम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवन्! मन्मथ! कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्य-मेतत् (१)। स्मृत्वा। आं ज्ञातम् (२)। (च)

नन्वात्मनः कामपीड़ानिवृत्तये रहो वा बलाद्वा शकुन्तलया सह सङ्गम्यतामित्याह-जाने इति। तपसो मुनीनां तपस्यायाः, वीर्यं सामर्थ्यम्, अहं जाने अवगच्छामि। तथा च रहःसङ्गमे बलात्सङ्गमे वा महर्षिः कण्वस्तदवगत्य मां भस्मीकरिष्यतीति तदुभयविधोऽपि सङ्गमो न सम्भवतीति भावः। अथ तर्हि यथा शकुन्तला तुभ्यमात्मदानं करोति तथा चेष्ट्यतामित्याह चेति। सा बाला शकुन्तला, परवती पराधीना, इति मे विदितं ज्ञातमस्ति। अतस्तस्या आत्मदानमपि न सम्भवतीति भावः। ननु तदा ततो हृदयं निवर्त्य सुस्थो भवतु इत्याह न चेति। निम्नात् गभीरदेशात् सलिलं जलमिव, ततः शकुन्तलातः, मे मम हृदयस्य कन्तु, न निवर्त्तते न उत्तिष्ठति न प्रत्यावर्त्तते च। अतएव इदानीं का गतिरिति भावः।

अत्र श्रौतोपमालङ्कारः। आर्य्या जातिः ॥१॥

(च) भगवन्निति। हे भगवन्! जगति सर्वत्र समानघमताप्रकाशात् महा-माहात्म्यशालिन्! मनो मथ्नातीति हे मन्मथ! कुसुमं पुष्पमेव आयुधमस्त्रं यस्य तादृशस्य सतः, एतत् ईदृशं तैक्ष्ण्यं तीक्ष्णता प्रखरता। तथा च भवतः पुष्परूप-कोमलायुधतया कोमलत्वस्यैव सम्भवे ईदृशी तीक्ष्णता आश्चर्य्यैवेति भावः।

अतएवात्र हेतुविरुद्धगुणोत्पत्तेर्विषमालङ्कारः। तैक्ष्ण्यमिति पदांशगतो दुःश्रवत्व-दोषः 'प्रखरतैषा' इति पाठेन समाधेयः। स्मृत्वा स्मरणभङ्गीमभिनीय। आमिति स्मरणार्थमव्ययम्। ज्ञातं चिन्तया तीक्ष्णताकारणमवगतमित्यर्थः।

"आं ज्ञाने निश्चयस्मृत्योः" इति मेदिनी।

আমি তপস্যার শক্তি জানি; আবার সেই বালিকা যে পরাধীনা তাহাও আমার জানা আছে। কিন্তু নিম্নস্থান হইতে জলের ন্যায়, আমার মন শকুন্তলা হইতে নিবৃত্তি পাইতেছে না ॥১॥

(চ) হে মাহাত্মশালী কামদেব! তুমি কুসুমায়ুধ; সুতরাং

(१) क्वचिदयं पाठो नास्ति। (२) क्वचित् एष पाठो न दृश्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्यापि नूनं हरकोपवह्नि-
स्त्वयि ज्वलत्यौर्व इवाम्बुराशौ ।
त्वमन्यथा मन्मथ ! मद्विधानां
भस्मावशेषः कथमेवमुष्णः (१) ॥२॥

किं ज्ञातमित्याह अद्यापीति । हे मन्मथ ! अम्बुराशौ समुद्रे, और्वो वड़वानल इव, हरस्य महादेवस्य कोपवह्निः क्रोधोत्थिततृतीयनयनाग्निः, अद्यापि इदानीमपि त्वयि ज्वलति, इति नूनं निश्चितम् । अन्यथा न ज्वलति चेत् तदेत्यर्थः, हे त्वं हरेण दग्धीकरणात् भस्मैव अवशेषश्चरमावस्था यस्य स तादृशः त्वम्, मद्विधानां मादृशां कामातुराणां जनानां सम्बन्धे इति तात्पर्य्यम्, कथम् एवम् इत्थम् उष्णः, एवम् इति शेषः ।

अत्र श्रौतीपमालङ्कारप्रौढोक्तिभ्यां विच्छित्तिवशात् उष्णत्वरूपसाधनेन मन्मथे ज्वलनात्मकसाध्यस्य ज्ञानादनुमानालङ्कारः, शीतलीभूतभस्मावशेषात् उष्णत्वरूपगुणं विषमालङ्कारश्च ; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः । न च नूनमित्युत्प्रेक्षाव्यञ्जकतया उत्प्रेक्षैवेयमिति वाच्यम्, अत्र नूनमित्यस्य निश्चयार्थकत्वस्य चानुभवात् तर्कार्थकत्वस्थल एव चोत्प्रेक्षाव्यञ्जकत्वाङ्गीकारात् "उत्प्रेक्षायामनिश्चितप्रतीतिः, इह तु निश्चिततयेत्युभयोर्भेदः" इति दर्पणकारोक्तेश्च ।

अत्र ज्ञप्तिर्नाम नाट्यलक्षणञ्च—"ज्ञप्तिः केनचिदंशेन किञ्चिदयत्नानुमीयते" इति दर्पणलक्षणात् ।

उर्वस्य ऋषेरपत्यमिति और्वः । पुरा किल उर्वेण ऋषिणा अयोनिजं पुत्रं स्वचो निर्मथ्य यः पुरुषो निर्गमितः, समुद्रे वड़वामुखे स्थापितश्च, स एव वाड़वः इति पौराणिकीवार्त्ता । "और्वस्तु वाड़वो वड़वानलः" इत्यमरः ।

इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिवृत्तम् ॥२॥

তোমার এরূপ প্রখরতা আসিল কোথা হইতে ! । ( স্মরণ ক... ও ! বুঝিয়াছি ।

(१) क्वचित् पुस्तके एष श्लोकोऽपि नास्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि च, त्वया चन्द्रमसा च अतिविश्वसनीयाभ्यामभि-
सन्धीयते कामिसार्थः (१)। कुतः—(छ)

तव कुसुमशरत्वं शीतरश्मित्वमिन्दोः
द्वयमिदमयथार्थं दृश्यते मद्विधेषु।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैः
त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥३॥

(छ) इदानीमुपालम्भमारभते अपि चेति। अतिविश्वसनीयाभ्यां कोमलत्वेन लोकैरत्यन्तविश्वास्याभ्यां युवाभ्याम्, कामिसार्थः कामुकसमूहः, अभिसन्धीयते परं प्रखरताप्रकाशात् प्रत्यार्यते।

"स घसार्थौ तु जन्तुभिः" इत्यमरः। "वञ्चनञ्चाभिसन्धानं व्यलीकञ्च प्रतारणम्" इति हेमचन्द्रः।

तवेति। तव प्रकरणात् मन्मथस्य, कुसुमानि पुष्पाण्येव शरा यस्य तत्त्वम्, इन्दोः चन्द्रस्य, शीताः शीतला रश्मयः किरणा यस्य तत्त्वम्, इदं द्वयं मद्विधेषु मादृशेषु कामिजनेषु विषयेषु, अयथार्थं मिथ्याभूतम्, दृश्यते। कथमयथार्थमित्याह विसृजतीति। इन्दुश्चन्द्रः हिमं गर्भे अभ्यन्तरे येषां तैस्तादृशैः, मयूखैः किरणैः, अग्निम्, विसृजति वर्षति; अत्रापि मद्विधेष्वित्यन्वीयते। मद्विधैस्तथैवानुभवादिति भावः। तथा त्वं मन्मथोऽपि, कुसुमबाणान्, वज्राणामिव सारो बलं येषां ते वज्रसाराः, अवज्रसारान्

समুদ্রে বড়বানলের ন্যায়, নিশ্চয়ই তোমাতে অদ্যাপি মহাদেবের ক্রোধানল জলিতেছে; না হইলে, হে কামদেব! তুমি ভস্মাবশিষ্ট হইয়া, আমাদের মত লোকের পক্ষে এরূপ উষ্ণ হইলে কিরূপে ॥২॥

(ছ) আরও, তুমি এবং চন্দ্র এই দুইজন অত্যন্ত বিশ্বাসের পাত্র হইয়া কামী লোকদিগকে প্রতারণা করিয়া থাক। কারণ,

(१) मदनबाधां निरूप्य। भगवन्! कुसुमायुध! त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः। कुतः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथवा (१) । (ज)

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति (२) ॥४॥

भगवन् ! एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः (३)।

वज्रसारान् करोषीति वज्रसारीकरोषि ; मद्विधेष्वित्यनुषङ्गः। मद्विधानाम... दित्याशयः। अतएव कुसुमशरत्वेन शीतरश्मित्वेन च अतिविश्वसनीययोः... कामिसार्थः अभिसन्धीयत एवेति समुदायाभिप्रायः।

अत्र अयथार्थत्वं प्रति पराद्धवाक्यार्थद्वयस्य हेतुत्वात् वाक्यार्थहेतुकं काव्य... हिमगर्भमयूखेभ्यः अग्निविसर्गोत्पत्तेः कुसुमबाणाभ्यां वज्रवत्प्रहारोत्पत्तेश्च ... लङ्कारद्वयम्, इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

गुणातिपाती नाम नाट्यलक्षणञ्च—"गुणातिपातः कार्य्यं यद्विपरीतं गुण... इति दर्पणलक्षणात्।

मालिनी वृत्तम् ॥३॥

(ज) पक्षान्तरमभिधत्ते अथवेति।

अनिशमिति। मकरकेतुर्मन्मथः, मदिरे मत्तखञ्जनपक्षिद्वयमिव आयते... नयने नेत्रद्वयं यस्यास्ताम्, तां शकुन्तलाम्, अधिकृत्य अवलम्ब्य प्रहारे ... मां प्रहरति मदुद्देशेन तां प्रहृत्य तदुद्देशेन यदि माञ्च प्रहरतीत्यर्थः, इति एवं... अनिशं सर्वदा, मे मम मनसो रुजं पीड़ाम्, आवहन्नपि जनयन्नपि, अभि... कुशलेन सम्मतः स्यादिति शेषः, मदुद्देशेन तस्या अपि प्रहारात् तथैव ... लाभादिति भावः।

তোমার কুসুমশরত্ব, আর চন্দ্রের শীতরশ্মিত্ব, এই দুইটী... আমার মত লোকের পক্ষে মিথ্যা দেখিতেছি। কারণ, চন্দ্র... কিরণদ্বারা অগ্নিবর্ষণ করেন, আর তুমিও পুষ্পময় বাণগুলিকে... ন্যায় তীক্ষ্ণ কর ।৩।

(१·२·३) चिह्नितपाठाः पुस्तकान्तरे न दृश्यन्ते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृथैव सङ्कल्पशतैरजस्रम्
अनङ्ग! नीतोऽसि मयातिवृद्धिम्।
आकृष्य चापं श्रवणोपकण्ठे
मय्येव युक्तस्तव बाणमोक्षः (१) ॥५॥

---

अत्र पीड़ाजनकोऽपि अभिमत इति विरोधाभासोऽलङ्कारः।

आर्य्या जातिः ॥४॥

(झ) भगवन्निति। एवम् अनेन प्रकारेण प्रतारकत्वेनेत्यर्थः, उपालब्धस्य मयैव तिरस्कृतस्य, ते तव, मां प्रति अनुक्रोशो दया न जायत इति शेषः। तथा च दुःखेन तिरस्कृतो दुःखयिता दुःखितं प्रति दयां करोतीति रीतिस्त्वयि न दृश्यत इति भावः।

वृथैवेति। हे अनङ्ग! मया अजस्रं सर्वदा सङ्कल्पशतैः 'प्रियतमया शकुन्तलया सममेवं विचरिष्यामि इत्थञ्च विहरिष्यामि' एवम्भूताभिर्बहुतराशाभिः, त्वं वृथैव अनर्थकमेव, अतिवृद्धिम् अत्यन्तमभ्युदयम् अत्याधिक्यञ्च, नीतः प्रापितोऽसि; अनङ्गस्य सङ्कल्पजत्वात् सङ्कल्पबाहुल्ये अतिवृद्धेरेव सम्भवादित्याशयः। नन्वतिवर्द्धनस्य कथं फलमित्याह आकृष्येति। तथा च श्रवणोपकण्ठे कर्णसमीपे आकर्णमित्यर्थः, चापं धनुः, आकृष्य विद्यमानस्येति शेषः तव, मय्येव अतिवर्द्धयितारं मां प्रत्येव, बाणमोक्षः शरनिक्षेपः, युक्तः उचितः, "उपकृतं बहु तव किमुच्यते" इत्यादिदर्पणोदाहरणवत्

---

(ज) অথবা, কামদেব যদি আমার উদ্দেশে সেই খঞ্জনদীর্ঘনয়না শকুন্তলাকে প্রহার করিয়া, আমাকে প্রহার করিতেন, তবে সর্ব্বদার জন্য, আমার মনের দুঃখ জন্মাইয়াও আমার অভিমত হইতেন ॥৪॥

(ঝ) হে মহিমান্বিত! এইরূপে তোমার তিরস্কার করিতেছি, তথাপি আমার প্রতি তোমার দয়া হইতেছে না।

---

(१) अयं श्लोकोऽपि क्वचिन्नास्ति।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सखेदं परिक्रम्य । क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञा... खिन्नमात्मानं विनोदयामि । न च प्रियादर्शनादृते शर... मन्यत् । यावदेनामन्विष्यामि । ऊर्द्धमवलोक्य । इमामुग्रा... वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना ... भवती शकुन्तला गमयति । भवतु, तत्रैव तावद्गच्छामि... परिक्रम्यावलोक्य च । अनया बालपादपवीथ्या सुतनुरचिरं ग... तर्कयामि । कुतः—(१) (ञ)

विपरीतलक्षणया कथमपि न युक्त इत्यर्थः ; वर्द्धनेन उपकर्त्तारं प्रति तादृशम... प्रत्युपकारस्यैव युक्तत्वादिति भावः ।

अत्र अतिवर्द्धनात्मकारम्भकार्यस्य वैफल्यात् वाणाघातप्राप्तिरूपस्यानर्थस्य च ... विषमालङ्कारः, अतिवर्द्धनस्य इथात्वं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्या... काव्यलिङ्गञ्च ; अनयोर्मिथो निरपेक्षतया संसृष्टिः ।

तथा बाणमोक्षेण विपत्प्राप्त्या विरोधो नाम प्रतिमुखसन्ध्यङ्गम्—"विरोधो... प्राप्तिः" इति दर्पणलक्षणात् ।

आकर्ण्येत्यनन्तरं विद्यमानस्येत्यध्याहारात् नैकवक्तृकत्वहानिः ।

उपजातिर्वृत्तम् ॥५॥

(ञ) सखेदमिति । सकामपीड़मित्यर्थः । निरस्ता मयैव दूरीकृ...

হে কামদেব! সর্ব্বদা শত শত কামনাদ্বারা অনর্থক তো... অত্যন্ত বর্দ্ধিত করিতেছি। কর্ণপর্য্যন্ত ধনু আকর্ষণ করিয়া... প্রতিই তোমার বাণক্ষেপ করা উচিত হইতেছে ॥৫॥

(১) परिक्रम्य । क्व नु खलु संस्थिते कर्म्मणि सदस्यैरनुज्ञातः श्रमक... विनोदयामि । निश्वस्य । किं नु खलु मे प्रियादर्शनादृते शरणमन्यत् । ... मन्विष्यामि । सूर्य्यमवलोक्य । इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मा... ससखीजना शकुन्तला गमयति । तत्रैव तावद्गच्छामि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्मीलन्ति न तावद्बन्धनकोषास्तयावचितपुष्पाः ।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः (१) ॥६॥

...कृतकर्मव्याघाता येषां तैः तपस्विभिः, अनुज्ञातः यथेष्टविचरणादावनुमतः ...अहम्, क्व कस्मिन् स्थाने; नु खलु, खिन्नं सन्तप्तम्, आत्मानं मनः, विनोदयामि आश्वासयामि । ननु पवनभ्रमणादिना विनोदयेत्याह न चेति । प्रियायाः शकुन्तलायाः दर्शनात् ऋते साक्षात्कारं विना, अन्यत् किमपि शरणं सन्तापनिवर्त्तकतया रक्षकम् अस्तीति शेषः । एनां शकुन्तलाम् । उग्रं भीषणमत्यन्तमित्यर्थः यथा स्यात्तथा तपति सन्तापं जनयतीति ताम्, वेलां समयं मध्यन्दिनमित्यर्थः । लतावलयानि एषां सन्तीति ...षु लतामण्डपशालिषु तदभ्यन्तरे प्रविश्येति तात्पर्य्यम्, मालिन्या नद्याः तीरेषु । गमयति अतिवाहयति । सुतनुः सुन्दरदेहा शकुन्तला, अनया दृश्यमानया, बालपादपवीथ्या नूतनतरुश्रेण्या तदन्तर्गतपथेनेत्यर्थः, अचिरम् अनतिपूर्वम् ।

अत्र विचारो नाम नाट्यलक्षणम्—"विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम्" इति ...र्पणलक्षणात् ।

सम्मीलन्तीति । तया शकुन्तलया, अवचितानि सञ्चितानि पुष्पाणि येषां ते, अमी

(ঞ) (দুঃখের সহিত পাদক্ষেপ করিয়া) বিঘ্ন দূর হইলে পর, তপস্বীরা আমাকে যাইবার জন্য অনুমতি দিয়াছেন, এখন আমি সন্তপ্ত মনকে কোথায় যাইয়া আশ্বস্ত করি। শকুন্তলার দর্শন ভিন্ন অন্য কিছুই আমার সন্তাপনিবর্ত্তক হইবে না। সুতরাং উঁহাকেই অন্বেষণ করি। (উপরের দিকে চাহিয়া) সেই শকুন্তলা, সখীজনের সহিত, লতামণ্ডপসম্পন্ন মালিনীনদীর তীরে, প্রায়ই এই দারুণরৌদ্রসম্পন্ন সময় অতিবাহিত করিয়া থাকেন। হউক, সেইখানেই যাই। (পাদক্ষেপ করিয়া দেখিয়া) এই ছোট ছোট গাছগুলির ভিতর দিয়া সুন্দরী ...ই গিয়াছে বলিয়া মনে করি। কারণ—

(१) अयं पाठः क्वचिन्नास्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्पर्शं रूपयित्वा। अहो ! प्रवातसुभगोऽयं वनोद्देशः (१)।

शकुन्तलाश्वीत नलिनीवनयोः कण्वाहो मालिनीतरङ्गाणाम्।
अङ्गैरनङ्गतप्तैर्निर्दयमालिङ्गितुं पवनः (२) ॥७॥

बन्धनकोषा वृन्तोपरिभागाः, न सम्मीलन्ति इदानीमपि न सङ्कोचं प्राप्नुवन्ति। मदुपूर्वं सञ्चये तु सम्मीलन्त्येवेति भावः। अमी किसलयच्छेदाः पल्लवखण्डाः क्षीरस्निग्धा निर्यासेन सञ्चेदाः दृश्यन्ते। मदुपूर्वं पल्लवच्छेदने तु क्षीरशोषः स्यादिति भावः। तावच्छब्दो वाक्यालङ्कारे।

अत्र अप्रस्तुतयोरेव बन्धनकोष-किसलयच्छेदयोरेकदर्शनक्रियया सह अभिसम्बन्धात् तुल्ययोगितालङ्कारः; शकुन्तलया अचिरगमनप्रतिपादनकार्यं प्रति कारणद्वयोपन्यासात् समुच्चयश्च; अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

आर्य्या जातिः ॥६॥

(ट) स्पर्शमिति। त्वचि वायोरनुभवमभिनीयेत्यर्थः। अहो इति प्रवातेन शैत्य-सौगन्ध्य मान्द्यात्मकगुणत्रयशालिना वायुना, अयं वनोद्देशः सुभगो मनोहरः।

"सुन्दरेऽधिकभाग्ये च दुर्द्दिनेतरवासरे। तुरीयांशे श्रीमति च सुभगः" शब्दार्णवः।

प्रवातसुभगत्वं समर्थयति शक्य इति। अनङ्गतप्तैः अङ्गैर्मन्मैव इत्यप...

তিনি যে বোঁটা হইতে ফুল তুলিয়া নিয়াছেন, সে বোঁটা এখনও বুজিয়া যায় নাই এবং এই পল্লবখণ্ডগুলিকেও দেখিতেছি ॥৬॥

(ট) (স্পর্শ অভিনয় করিয়া) ওহে! উৎকৃষ্ট বায়ু বহিতে থাকায় বনের এই স্থানটী বড়ই মনোহর হইয়াছে।

(১) পরিক্রম্য সংস্পর্শং রূপয়িত্বা।·· উদ্দেশঃ।

(২) শক্যমরবিন্দসুরভিঃ···। অবিরলমালিঙ্গিতুং···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विलोक्य। हन्त! अस्मिन् वेतसलतामण्डपे सन्निहितया शकुन्तलया भवितव्यम्। तथाहि—(१) (ठ)

अभ्युन्नता पुरस्तादवगाढ़ा जघनगौरवात् पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥८॥

---

अरविन्दैः पद्मैः तत्स्पर्शैरित्यर्थः सुरभिः सौगन्ध्यवान्, तथा मालिन्या नद्यास्तरङ्गाणां कणवाही बिन्दुधारी। अनेन विशेषणद्वयेन वायोः सौगन्ध्यं शैत्यञ्च दर्शितम्। पवनो वायुः, निर्दयं गाढ़ं यथा स्यात्तथा, आलिङ्गितुं शक्यः मया धारयितव्यः। एतेन मान्द्यं सूचितम्, बलवद्वायोः कष्टकरतया आलिङ्गनरुच्यभावात्। अतएव एतद्वनोद्देशस्य सुभगत्वमित्याशयः। आर्य्या जातिः ॥७॥

(ठ) विलोक्येति। पदचिह्नावलीं दृष्ट्वेत्यर्थः। हन्तशब्दो हर्षे। हर्षश्च सन्निधाने शकुन्तलास्थित्यनुमानात्। वेतसलतामण्डपे मण्डपाकारतापन्नवेतसलता-समूहाभ्यन्तरे, सन्निहितया स्थितया।

अभ्युन्नतेति। पाण्डवः पाण्डुवर्णाः सिकता वालुका यस्मिन् तत्र, अस्य लता-मण्डपस्य द्वारे, पुरस्तात् पदपङ्क्तेरेव अग्रदेशे, अभ्युन्नता गुल्फचिह्नापेक्षया किञ्चि-दुन्नता, गुल्फ एव जघनगौरवस्य सञ्चारेण अङ्गुलीषु तत्सञ्चाराभावादिति भावः; तथा पश्चात् पदपङ्क्तेरेव पश्चाद्भागे गुल्फपातस्थाने इत्यर्थः, जघनस्य कटीसम्मुख-भागस्य गौरवात् भारात्, जघनभारस्य समसूत्रपातेन गुल्फ एव सञ्चारादित्यर्थः, अवगाढ़ा अग्रसम्मुखापेक्षया किञ्चिद्गभीरा, अभिनवा सद्योजाता, इदानीमपि वालुकापाताद्य-भावादिति भावः, पदपङ्क्तिः पादचिह्नश्रेणी दृश्यते। अन्येषां स्त्रीपुरुषाणामनागमना-

---

পদ্মস্পর্শে সুগন্ধ এবং মালিনীনদীর তরঙ্গকণবাহী এই বায়ুকে, সমস্ত অঙ্গদ্বারা গাঢ় আলিঙ্গন করিতে পারিব ॥৭॥

(ঠ) (দেখিয়া) হায়! মণ্ডপাকার এই বেতসকুঞ্জের ভিতরে শকুন্তলা থাকিতে পারেন। কারণ—

---

(१) परिक्रम्यावलोक्य च। अस्मिन् वेतसपरिक्षिप्ते लतामण्डपे...।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावद्विटपान्तरेणावलोकयामि। तथा कृत्वा सहर्षम्। लब्धं नेत्रनिर्वाणम्। एषा मनोरथप्रिया मे सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामुपास्यते। भवतु, लतान्तर्हितः शृणोमि विश्वस्तकथितान्यासाम्। इति विलोकयन् स्थितः (१)।

दर्शनात् अनसूयाप्रियंवदयोश्च तादृशजघनगौरवाभावात् इयं पदपङ्क्तिः शकुन्तलाया एवेति भावः।

चरणस्य गुल्फ इव अङ्गुल्यग्रच्छेदे जघनभारसञ्चारासम्भवकल्पहेतोः ... 'अभ्युन्नता पुरस्तात्' इत्यत्र न निर्हेतुत्वदोषः। द्वारदेशस्य सिकतामयत्वाभावे ... पतनासम्भवात् सिकतानाञ्च साधारणमटवर्णत्वे प्रायेण छायासमानवर्णतया ... च्छायायां पदपङ्क्तेर्दर्शनासम्भवात् पाण्डुसिकते इति द्वारविशेषणम्, ... अपुष्टार्थत्वदोषः।

"न च प्रियादर्शनादृते शरणमन्यत्" इत्यारभ्य एतदन्ते सन्दर्भे ... प्रतिमुखसन्धेरङ्गम्। यथा साहित्यदर्पणे—

"इष्टनष्टानुसरणं परिसर्पश्च कथ्यते।"

आर्या जातिः ॥८॥

(ङ) यावदिति। विटपान्तरेण तरुशाखाभ्यन्तरेण। अयि इति ... निर्वाणं दिदृक्षिताप्राप्तिजनितनेत्रतापानलशान्तिः। मनोरथेन अभिलषिता न पुनः सङ्गमपर्यन्तं नापीत्यर्थः प्रिया प्रीतिकरा शकुन्तला, कुसुमास्तरणेन सहेति सकुसुमास्तरणम्, शिलापट्टं प्रस्तरफलकम्, अधिशयाना आश्रित्य ... सखीभ्यामनसूयाप्रियंवदाभ्याम्, उपास्यते परिचर्य्यते। लतया व्यवहितः ...

ইহার দ্বারে শুভ্র বালুকারাশির উপরে, সম্মুখে উন্নত এবং ... দেশের ভারবশতঃ পশ্চাদ্ভাগে গভীর নূতন পদচিহ্নশ্রেণী দেখিতে ...

(१)…परिक्रम्य तथा कृत्वा सहर्षम्।…एषा मे मनोरथप्रियतमा ... मन्वास्यते। भवतु, श्रोष्यामि आसां विस्रम्भकथितानि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला। (ढ)

सख्यौ। उपवीज्य। हला सउन्तले! अवि सुहाअदि दे णलिणीवत्तवादो?। (ण)

(ण) हला शकुन्तले! अपि सुखयति ते नलिनीपत्रवातः?।

---

आसां शकुन्तलानसूयाप्रियंवदानाम्, विस्रब्धकथितानि स्वैरालापान्। आत्मप्रकाशे तु आलापवन्धो भावगोपनं वा भवेदिति भावः।

शिलापट्टमिति "आधारोऽधिशीङ्स्थासां शौव्ये" इत्यधिकरणे कर्म्मत्वम्।

(ढ) तत इति। यथोक्तव्यापारा सखीभ्यां परिचर्य्यमाणा शिलापट्टमधिशयाना च, प्रविशति सभ्यानां दृष्टिगोचरीभवति। एवञ्च तस्थले विष्कम्भातीः सभ्यदृष्टिगोचरत्वे लक्षणा। अतः शयानायाः स्वयं प्रवेशो नानुपपन्न इति ध्येयम्।

अत्र शकुन्तलादिभिः सह राज्ञो मेलनात् वर्णसंहारो नाम प्रतिमुखसन्धेरङ्गम्—"चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते" इति भरतलक्षणे "चातुर्वर्ण्योपगमनं पात्राणां मेलनम्" इत्यभिनवगुप्तव्याख्यानात्।

(ण) सख्याविति। अपिशब्दः प्रश्ने। नलिनीपत्रवातः पद्मलतापत्रसञ्चालनजनितवायुः, ते तव, सुखयति सुखं करोति तापं शमयति किमित्यर्थः।

---

(ড) এই তরুশাখার ভিতর দিয়া দেখি। (তাহা করিয়া আনন্দের সহিত) ওহে! আমি চোখের শান্তি লাভ করিয়াছি। এই আমার প্রাণের প্রিয়তমা, পুষ্পশয্যাসমন্বিত প্রস্তরফলকের উপরে অবস্থান করিতেছেন, আর সখীরা পরিচর্য্যা করিতেছে। হউক, লতার অন্তরালে থাকিয়া, ইঁহাদের বিশ্বস্তালাপ শুনি। (এই বলিয়া দর্শন করতঃ দাঁড়াইয়া রহিলেন।)

(ঢ) (তদনন্তর সখীজনের সহিত উক্তবিধ অবস্থায় শকুন্তলার প্রবেশ।)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। सखेदम्। किं वीजअन्ति मं पिअसहीओ (१)। (त)

सख्यौ। सविषादं परस्परमवलोकयतः (२)। (थ)

राजा। बलवदसुस्थशरीरा तत्रभवती दृश्यते। सवितर्कं

तत् किमयमातपदोषः स्यात्, उत यथा मे मनसि वर्त्तते।

साभिलाषं निर्वर्ण्य। अथवा, कृतं सन्देहेन (३)। (द)

(त) किं वीजयतो मां प्रियसख्यौ।

(त) शकु इति। विफलमिदं वीजनं तापशान्त्यभावादिति भावः। अत्र सख्योरनुनयाग्रहणात् विधुतं नाम प्रतिमुखसन्धेरङ्गम्। यथा दर्पणे—

"कृतस्यानुनयस्यादौ विधुतं त्वपरिग्रहः।"

न चैवम्, "चलं वी अन्ते उर" इत्यादिना शकुन्तलादेव दर्पणे दत्तोदाहरणेन विरोध इति वाच्यम्, दर्पणकृतैव क्रमाल्लयगर्भसन्ध्यङ्गलक्षणे "चलं वी चवे" इत्यादितः पूर्ववर्त्तिनः "स्थाने खलु विस्मृतनिमेषेण चक्षुषा" इत्यादिशाकुन्तलस्य लक्ष्यतया उदाहृतात् तस्यैव च भ्रमनिश्चयात्। पूर्वत्र प्रतिमुखसन्धिः परत्र गर्भः एवञ्च पूर्वांशस्य गर्भसन्ध्यङ्गत्वे परांशस्य च प्रतिमुखसन्ध्यङ्गत्वे सन्धिसाङ्कर्यं सुधीभिर्भाव्यम्।

(थ) सख्याविति। वायुना शान्त्यभावात् अन्तस्ताप एवायम्, तस्य च प्रतीकारो दुष्कर एवेति सूचनार्थं परस्परावलोकनम्।

(ণ) সখীরা। (বাতাস করিয়া) ওলো শকুন্তলা! পদ্মপত্রের বাতাস তোমার শান্তি জন্মাইতেছে ত ?।

(ত) শকুন্তলা। (খেদের সহিত) তোমরা কেন আমাকে বাতাস করিতেছ।

(থ) সখীরা। (বিষাদের সহিত পরস্পর দর্শন করিতে লাগি

(१)…सहीयौ। (२) विषादं नाटयित्वा।

(३) बलवदस्वस्थशरीरा शकुन्तला दृश्यते। विचिन्त्य।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् (१)।
समस्तापः कामं मनसिजनिदाघप्रसरयोः
न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥८॥

(८) राजेति। बलवत् अत्यन्तम् अस्वस्थं शरीरं यस्याः सा। आतपदोषः रविकिरणजनितसन्तापः। उत अथवा, यथा मे मनसि वर्त्तते कामसन्ताप एवाय-मिति यदहं सम्भावयामि, तथैव स्यादित्यर्थः। साभिलाषं शकुन्तलायां सलिप्सम्, निर्वर्ण्य दृष्ट्वा। सन्देहेन अयमातपदोषः कामसन्तापो वा इति संशयेन, कृतम् अलम्। "कृतं युगेऽलमर्थे च" इति मेदिनी।

ननु कृतसन्देहाभावः कुत इत्याह स्तनेति। स्तनयोः न्यस्तं तापशान्त्यै दत्तम् उशीरं वीरणमूलकृतानुलेपनं यस्य तत् तादृशम्, तथा प्रशिथिलं शरीरस्य कृशत्वात् श्लथीभूतं मृणालमेव एकं केवलं वलयं यत्र तत् तथोक्तम्, प्रियायाः शकुन्तलायाः, इदं वपुः शरीरम्, आबाधया सम्यक् पीड़या सहेति साबाधम्, वर्त्तते इति शेषः, तापशान्त्यु-पायानुष्ठानादिति भावः; तदपि तथापि, कमनीयं मनोहरम्। तथापि कामग्रीष्मयो-स्तापसाम्यमङ्गीकृत्य व्यतिरेकेण कामस्यैवायं ताप इत्यनुमिनोति सम इति। मनसिज-निदाघप्रसरयोः कामप्रादुर्भाव-ग्रीष्मप्रादुर्भावयोः, स तापो दाहः, समः समानः, कामम् इति समानुमतमङ्गीकृतमित्यर्थः; तु किन्तु, युवतिषु विषये, ग्रीष्मस्य निदाघस्य, एवमित्थम् सुभगं सौन्दर्य्यजनकत्वात् सुन्दरम्, अपराद्धं परस्य तापकष्टजननादपराधः, न भवतीति शेषः। अतः पारिशेष्यात् कामताप एवायमिति नोक्तसन्देह इत्याशयः।

(৮) রাজা। শকুন্তলাকে অত্যন্ত অসুস্থশরীরা দেখিতেছি। (বিতর্কের সহিত) তবে কি ইহা রৌদ্রের দোষ? না, আমার মনে যাহা লইতেছে?। (অভিলাষের সহিত দেখিয়া) অথবা সন্দেহ করিবার প্রয়োজন নাই।

(१)···शिथिलितमृणालैकवलयम्।···किमपि कमनीयम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रिय'। जनान्तिकम्। अणसूए! तस्स राएसिणो पढ़-
द'सणादो आरम्भिअ पज्जुच्छुअमणा सउन्तला; ण क्खु
अस्सणिमित्तो आतङ्को भवे (१)। (ध)

(घ) अनसूये! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्य्युत्सुकमनाः शकुन्तला;
न खल्वस्या अन्यनिमित्त आतङ्को भवेत्।

अत्र शकुन्तलादेहस्य सतापत्वनिरूपणकार्य्यं प्रति स्तनन्यस्तोशीरत्वरूपे एक-
कारणे सत्यपि प्रशिथिलमृणालैकवलयत्वरूपकारणान्तरोपन्यासात् समुच्चयालङ्कारः;
सुस्थत्वादिरूपकारणाभावेऽपि कमनीयतारूपकार्य्योत्पत्तेः किं विभावना? ...
सावाधत्वरूपकारणे सत्यपि कुरूपत्वरूपकार्य्यानुत्पत्तेर्विशेषोक्तिरिति विभावनाविशे-
सन्देहसङ्कर इत्युभयोः परस्परनिरपेक्षतया संसृष्टिः। साक्षात्प्रतिपादकाभावे...
मानालङ्कारस्तु व्यज्यत इति वस्तुनालङ्कारध्वनिः।

"काममसूयानुगमे प्रकामेऽनुमतावपि" इति हेमचन्द्रः।

शिखरिणी वृत्तम् ॥९॥

(ध) प्रियमिति। तस्य राजर्षेर्दुष्मन्तस्य। पर्य्युत्सुकमनाः कामेन उद्वे...
चित्ता। आतङ्कस्तापः। आयोपान्तमालोच्यैव मयेदं सम्भाव्यत इति ...

"रुक्तापशङ्कास्वातङ्कः" इत्यमरः।

স্তনে বিণ্যার মূলের অনুলেপন দেওয়া হইয়াছে, মৃণালের এ...
বলয় অত্যন্ত শিথিল হইয়াছে এবং অত্যন্ত সন্তাপ চলিতেছে; ত...
প্রিয়তমার এই দেহখানি সুন্দর দেখা যাইতেছে। কামাবিকার...
গ্রীষ্ম—এই উভয়েরই সন্তাপ সমান, ইহা আমি স্বীকার করি...
যুবতিগণের প্রতি গ্রীষ্মের এইরূপ সুন্দর অপরাধ হইতে পারে না।

(ধ) প্রিয়ংবদা। ( অনসূয়ার প্রতি চুপি চুপি ) অনসূয়া!

(१)…पज्जुच्छुआ विअ सउन्तला। किं ण क्खु से तण्णिमित्तो
आतङ्को भवे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। सहि! मम वि एआरिसी आसङ्का हिअअस्स। भोदु, पुच्छिस्सं दाव णं। प्रकाशम्। सहि! पुच्छिदव्वासि किम्पि। वलीओ क्खु दे अङ्गाणं सन्दावा। (न)

राजा। वक्तव्यमेव (१)। (प)

शशिकरविशदान्यस्यास्तथाहि दुःसहनिदाघशंसीनि।
भिन्नानि श्यामिकया मृणालनिर्म्माणवलयानि (२) ॥१०॥

(न) सखि! ममापि एतादृशी आशङ्का हृदयस्य। भवतु, प्रक्ष्यामि तावदेनाम्। सखि! प्रष्टव्यासि किमपि। वलीयान् खलु ते अङ्गानां सन्तापः।

(न) अनेति। एतदपि जनान्तिकमेवेति बोध्यम्, परत्र प्रकाशमित्यभिधानात्। एतादृशी-त्वदुक्तरूपा आशङ्का सन्देहः। खलु यस्मात्। बलीयान् अतीवप्रबलः। अतः प्रष्टव्यासीत्यन्वयः।

(प) राजेति। वक्तव्यमेव प्रष्टव्यमेवेत्यर्थः।

वक्तव्यत्वसाधनायाह शशीति। तथाहि तमेवार्थं जानीहि। "तथेत्यगणपरिपठितो धातुर्गतौ, तस्य ह्यौ प्रयोगः" इति कातन्त्रपरिशिष्टटीकायां गोपीनाथः।

রাজর্ষির প্রথম দর্শন হইতে আরম্ভ করিয়া, শকুন্তলা উৎকণ্ঠিত চিত্তা হইয়াছেন, ইহার এই সন্তাপ অন্য কারণ হইতে হইবে বলিয়া বোধ হয় না।

(ন) অনসূয়া। সখি! আমার মনেরও এইরূপই আশঙ্কা। হউক, ইহাকে জিজ্ঞাসা করি। (প্রকাশ্যে) সখি! তোমাকে কোন বিষয় জিজ্ঞাসা করিব; যে হেতু তোমার অঙ্গের সন্তাপ, বড়ই বেশী বলিয়া বোধ হইতেছে।

(প) রাজা। অবশ্যই জিজ্ঞাসা করা উচিত।

(१) क्वचिदिदं पाठो नास्ति। (२) क्वचिदेष श्लोकोऽपि न दृश्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। पूर्वार्द्धेन शयनादुत्थाय। हला! भण, जं वत्तुकामासि (१)। (क)

अन। हला सउन्तले! अणब्भन्तरा अह्मे दे मणोगदस्स वुत्तन्तस्स; किन्तु जादिसी इदिहासकधाणुबन्धेसु कामिअणाणं अवत्था सुणीअदि, तादिसी तुह त्ति तक्केमि।

(क) हला! भण, यत् वक्तुकामासि।

(ख) हला शकुन्तले! अनभ्यन्तरा वयं ते मनोगतस्य वृत्तान्तस्य; किन्तु यादृशी इतिहासकथानुबन्धेषु कामिजनानामवस्था श्रूयते; तादृशी तवेति तर्कयामि। ह

शशिकरवत् चन्द्ररश्मिवत् विशदानि स्वभावत एव धवलानि, अस्याः शकुन्तलाः मृणालेन निर्माणं येषां तानि मृणालनिर्म्माणानि तानि च तानि वलयानि तानि, श्यामिकया स्वसंस्पृष्टगात्रतापजनितकालिम्ना, भिन्नानि युक्तानि सन्ति, दुः निदाघं तापं शंसन्ति सूचयन्तीति तानि तथाभूतानि जातानीति शेषः। अतो मैवेति भावः।

अत्र शशिकरविशदानीति लुप्तोपमा, तनुकृतविच्छित्त्या च शकुन्तलाङ्गानि तापं तज्जनितश्यामिकाशालिमृणालवलयवत्त्वादिति ज्ञानादनुमानालङ्कारः।

आर्य्या जातिः ॥१०॥

(क) शकु इति। पूर्वार्द्धेन देहपूर्वभागेन, शयनात् शय्यातः। कामक्लान्त सर्वदेहचालनासामर्थ्यात् पूर्वार्द्धेनेत्युक्तम्। भण ब्रूहि। वक्तुं काम इच्छा सा वक्तुकामा। "तुमः काममनसोः" इति तुमो मलोपः।

কারণ, চন্দ্রকিরণের ন্যায় শুভ্রবর্ণ ইহার মৃণালবলয়গুলি, ক হইয়া, দুঃসহ সন্তাপের সূচনা করিতেছে ॥১০॥

(ক) শকুন্তলা। (দেহের সম্মুখভাগদ্বারা শয্যা হইতে এ উঠিয়া) ওলো! বল, যাহা বলিতে ইচ্ছা করিয়াছ।

(১)···पूर्वार्द्धेन पुष्पशय्यामुदस्य। हला! किं वत्तुकामासि?।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

তা কধেহি কিং ণিমিত্তং দে অঅং আআসো ত্তি। বিআরং পরমত্থদো অআণিঅ অণারম্ভো কিল পডীআরস্স (১)। (ব)

রাজা। অনসূয়য়াপি মদীয়স্তর্কোঽবগতঃ (২)। (ভ)

---

কথয় কিং নিমিত্তং তে অয়ম্ আয়াস ইতি। বিকারং পরমার্থতঃ অজ্ঞাত্বা অনারম্ভঃ কিল প্রতীকারস্য।

---

(ব) অনেতি। ন লব্ধং ন প্রবিষ্টম্ অন্তরং মধ্যং যাভিস্তা অনভিজ্ঞা ইত্যর্থঃ, ত্বয়া অপ্রকাশিতত্বাদিত্যর্থঃ। ইতিহাসকথায়াঃ পুরাবৃত্তোপাখ্যানস্য অনুবন্ধেষু পরম্পরাসু। তর্কয়ামি সম্ভাবয়ামি। আয়াসঃ শ্রমঃ পীড়েত্যর্থঃ। পরমার্থতো যথার্থরূপেণ, বিকারং রোগম্। প্রতীকারস্য চিকিৎসায়াঃ অনারম্ভঃ অপ্রবৃত্তিঃ, রোগং জ্ঞাত্বৈব তচ্চিকিৎসায়ামারম্ভঃ সম্ভবতীতি রোগং কথয়েতি ভাবঃ।

(ভ) রাজেতি। তর্কঃ সম্ভাবনা। মম যাদৃশী সম্ভাবনা তাদৃশীং সম্ভাবনাং জ্ঞাত্বৈব ইত্যং পৃচ্ছত ইত্যর্থঃ।

---

(ব) অনসূয়া। শকুন্তলা! আমরা তোমার মনের বৃত্তান্তের ভিতরে প্রবেশ করিতে পারি নাই; কিন্তু তথাপি ঐতিহাসিক উপাখ্যানে কামিলোকের যেরূপ অবস্থা শুনিতে পাই, তোমারও সেইরূপ অবস্থা হইয়াছে ইহা মনে করিতেছি। অতএব বল, তোমার এই পীড়ার কারণ কি। যথার্থরূপে রোগ না জানিয়া প্রতীকার আরম্ভ করিতে পারা যায় না।

(ভ) রাজা। অনসূয়াও, আমার মনের ধারণা অবগত হইয়াছে।

---

(১) অণব্ভন্তরা ক্খু অম্হে মঅণগঅস্স বুত্তন্তস্স। কিন্তু জারিসী ইদিহাস-ণিবন্ধেসু কামঅমাণাণং অবত্থা সুণীঅদি তারিসিং দে পেক্খামি। সন্তাবো।

(২) অনসূয়য়াপ্যনুগতো মদীয়স্তর্কঃ। নহি স্বাভিপ্রায়েণ মে দর্শনম্।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । बलीओ आआसो, ण सक्कणोमि सहसा णिवे-दिदुं (१) । (म)

प्रियं । सुट्ठु क्खु एसा भणादि, किं एदं अत्तणो उवद्दवं णिगूहसि, अणुदिअसं क्खु परिहीअसि । अङ्गेसुं लावण्णमई छाआ केवलं तुमं ण मुञ्चदि (२) । (य)

(म) बलीयानायासः, न शक्नोमि सहसा निवेदयितुम् ।

(य) सुष्ठु खल्वेषा भणति, किमेतमात्मन उपद्रवं निगूहसि, अनुदिवसं खलु परिहीयसे । अङ्गेषु लावण्यमयी छाया केवलं त्वां न मुञ्चति ।

(म) शकु इति । बलीयान् अतीवप्रबलः, आयासः पीड़ा ; अतएव न शक्नोमीत्यर्थः । किञ्चित्स्वास्थ्योपस्थितौ निवेदयामीति भावः ।

(य) प्रियमिति । एषा शकुन्तला, सुष्ठु युक्तियुक्तत्वात् भद्रम् । उपद्रवं पीड़ां निगूहसि गोपयसि । नैतदुचितमित्याह अन्विति । अनुदिवसं प्रतिदिनम्, परिहीयसे क्रमशः क्षीणदेहा भवसि । छाया कान्तिः । न मुञ्चति न परित्यजति स्वभावसुन्दरत्वादिति भावः ।

"छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः ।

"मुक्ताफलस्य छायायां तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युज्ज्वलनीलमणिः ।

(म) শকুন্তলা। পীড়া অতিপ্রবল হইয়াছে ; সুতরাং হঠাৎ বলিতে পারিতেছি না।

(য) প্রিয়ংবদা। শকুন্তলা ভালই বলিতেছে। কেন নি-

(१) आत्मगतम् । बलव क्खु मे अहिणिवेए मो दाणिं वि सहसा ण सक्कणोमि णिवेदेउं ।

(२) सहि ! सुट्ठु एसा भणइ । किं अत्तणो आतङ्कं उवेक्खसि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । अवितथमाह प्रियंवदा । तथाहि—(र)

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥११॥

(र) राजेति । अवितथम् अमिथ्या सत्यमित्यर्थः, आह अनुदिवसं खलु परिहीयसे इति ब्रवीति । तत् सत्यत्वं प्रतिपादयितुमाह तथाहीति ।

क्षामेति । आननं शकुन्तलाया वदनम्, क्षामक्षामौ अतीवक्षीणौ कपोलौ गण्डौ यस्य तत् तादृशम् ; उरो वक्षःस्थलम्, काठिन्येन मुक्तौ रहितौ स्तनौ यस्य तत् तथोक्तम् ; मध्यः कटिदेशः, क्लान्ततरः नितान्तदुर्बलः ; अंसौ स्कन्धौ, प्रकामविनतौ अतीवावनतौ ; छविर्देहकान्तिः, पाण्डुरा पाण्डुवर्णा ; अतएव मदनग्लाना कामप्रादुर्भावक्लान्ता, इयं शकुन्तला ; पत्राणां पर्णानाम्, शोषयतीति शोषणस्तेन, मरुता वायुना, स्पृष्टा माधवी लता इव, शोच्या क्षीणत्वादिना शोचनीया च, प्रियं प्रीतिकरं दर्शनं यस्याः सा तादृशी च ; आलक्ष्यते दृश्यते । अतः "अणुदिवसं क्खु परिहीअसि । अङ्गेसुं लावण्णमई छाआ केवलं तुमं ण मुञ्चदि" इति प्रियंवदया यदुक्तं तदवितथमेवेति भावः ।

अत्र प्रियंवदोक्तिसमर्थनकार्य्यं प्रति आननक्षामक्षामकपोलत्वादिबहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः श्रौतोपमा च अनयोर्मिथो निरपेक्षतया संसृष्टिः । तथा एकवचनान्तप्रयोगमध्ये अंसौ इति द्विवचनान्तप्रयोगात् भग्नप्रक्रमता दोषः ; स च प्रकामविनतः स्कन्धः' इति पाठेन समाधेयः ; तथात्वेऽपि "नेत्रं समुन्मीलय" इत्यादिवत् द्वित्वेऽपि जात्यपेक्षया एकवचनोपपत्तिः ।

উপদ্রব গোপন করিতেছ ? প্রতিদিন ক্ষীণ হইয়া যাইতেছ, কিন্তু অঙ্গের লাবণ্যময়ী কান্তি কেবল তোমাকে ত্যাগ করিতেছে না।

(র) রাজা। সত্য কথাই বলিয়াছে। কারণ—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

শকু। নিশ্বস্য। কস্স বা অস্সস্স কথইস্সং, কিন্তু আ[illegible]
হেতুআ বো ভবিস্সং (১)। (ল)

উভে। সহি। অদো জ্জেব ণিব্বন্ধো। সিণিদ্ধ[illegible]
সংবিভত্তং ক্খু দুক্খং সজ্জবেঅণং ভোদি (২)। (ব)

(ল) কস্য বা অন্যস্য কথয়িষ্যামি, কিন্তু আয়াসহেতুকা বো ভবিষ্যামি।

(ব) সখি! অতএব নির্বন্ধঃ। স্নিগ্ধজনসংবিভক্তং খলু দুঃখং স[illegible]
ভবতি।

---

আমধামেতি স্বধাতীঃ "ঘৌস্থষিপচাং মকবাঃ" ইতি মপ্রত্যয়ঃ "প্রকারে গুণ[illegible]
ইতি দ্বিবর্চনঞ্চ।

শার্দুলবিক্রীড়িতং বৃত্তম্ ॥১১॥

(ল) শকু ইতি। অন্যস্য যুবাং বিনা অপরস্য, কস্য জনস্য বা কথ[illegible]
ষ্যামি কস্যাপি নেত্যর্থঃ; মম যুবয়োস্তুল্যাপরবন্ধুজনাভাবাদিতি ভাবঃ। আ[illegible]
পরিশ্রমহেতুভূতা। বো যুষ্মাকম্।

(ব) উভে ইতি। অনসূয়াপ্রিয়ংবদে দ্বে এব এমহদত ইত্যর্থঃ। অত[illegible]

---

শকুন্তলার মুখমণ্ডলের গণ্ডযুগল অতিশয় ক্ষীণ হইয়াছে; বক্ষ[illegible]
স্তন দুইটী অতিশয় কাঠিন্য ত্যাগ করিয়াছে; কটিদেশ অত্য[illegible]
হইয়াছে। স্কন্ধদ্বয় অতিশয় অবনত হইয়াছে এবং দেহের[illegible]
পাণ্ডুরবর্ণ হইয়াছে। অতএব পত্রশোষণকারী বায়ুকর্তৃক[illegible]
মাধবী লতার ন্যায়, এই কামপীড়িতা শকুন্তলাকে শোচ্যা অথ[illegible]
দর্শনা বলিয়া লক্ষ্য করিতেছি ॥১১॥

(ল) শকুন্তলা। (নিশ্বাস ত্যাগ করিয়া) অন্য কাহার নি[illegible]
বা বলিব; কিন্তু তোমাদের পরিশ্রমের কারণ হইব।

---

(১) সহি! কস্স। আআসইত্তিআ দাণিং বো ভবিস্সং।

(২) ক্বচিত্ সহি! ইতি নাস্তি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम्।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रोत्तरश्रवणकातरतां गतोऽस्मि (१) ॥१२॥

स्त्रान्तिके अकथनीयतया अभिन्नहृदयत्वेन आवयोरन्तिके कथनीयत्वादेव, निर्बन्धः तव दुःखं श्रोतुमावयोराग्रहातिशयः। खलु यस्मात्, स्निग्धजनेषु बन्धुलोकेषु, संविभक्तं सम्यक् विभज्य अर्पितम्, दुःखम्, सह्या सोढुं शक्या वेदना यातना यस्य तत् तादृशं भवति ; बहुभिरुह्यमानो भार इवेति भावः। इत्यन्तः प्रतिमुखसन्धिः।

पृष्टेति। समे तुल्ये दुःखसुखे यस्य तेन तादृशेन, जनेन अनेन सखीद्वयेनेत्यर्थः, पृष्टा स्वयातनाप्रकाशाय जिज्ञासिता, इयं बाला अल्पवयाः शकुन्तला, मनोगतम् आधेर्मानसिकपीड़ाया हेतुं कारणम्, न वक्ष्यति न प्रकाशयिष्यति इति न, सखीनिर्बन्धेन अवश्यमेव वक्ष्यतीत्यर्थः। किन्तु अनया शकुन्तलया, विवृत्य परिवृत्य, सतृष्णं साभिलाषं यथा स्यात्तथा, बहुशो वारं वारम्, दृष्टोऽपि प्रथमदिन एवावलोकितोऽपि अहम्, अत्र इदानीम्, उत्तरस्य सखीजिज्ञासायाः प्रतिवाक्यस्य श्रवणाय कातरतामस्थिरताम्, गतोऽस्मि ; पूर्वं तथा साभिलाषदर्शनात् किं मामुद्दिश्यैव मन्मथेनाकुलीकरणादियमवस्था ? अथवा कारणान्तरादिति सन्देहनिरासाय अधीरीभूतोऽस्मीति भावः।

अत्र कारणाभावेऽपि कातरतारूपकार्य्योत्पत्तेः किं विभावना, किंवा साभिलाषबहुतरदर्शनरूपकारणे सत्यपि स्त्रीहृदयकामनिबन्धनं तदवस्थानिर्णयरूपतत्कार्य्यानुत्पत्तेर्विशेषोक्तिरिति सन्देहाद्विभावनाविशेषोक्त्योः सन्देहसङ्कराळङ्कारः।

(व) सखीद्वय। सखि! এই জন্যই ত অত্যন্ত আগ্রহ করিতেছি। কারণ, বন্ধুজনের উপর দুঃখ ভাগ করিয়া দিলে, তাহার বেদনা সহ্য হইয়া থাকে।

(१) अत्रान्तरे श्रवणकातरतां।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। जदो पहुदि तवोवणरक्खिदा सो राएसी दंसणपधं गदो। इत्यर्द्धोक्ते न लज्जां नाटयति (१)। (श)

"काकमयूरौ" इत्यादिवत् "यच्चार्च्चितं द्वयो:" इत्यस्य व्यभिचारात् दुःख दुःखशब्दस्य पूर्वनिपात:।

वसन्ततिलका वृत्तम्।

इत्यादिस्तृतीयाङ्कसमाप्तिपर्य्यन्तो गर्भसन्धि:। तथा चात्र "पृष्टा जनेन" शकुन्तलाया अनुरागसत्त्वे तत एव तत्प्राप्तौ दुष्मन्तस्य उपायशङ्का; तथा "सो भीरुष वेवदि हिअअ" इत्यनेन शकुन्तलाया दुष्मन्तप्राप्तौ अपायशङ्का, मुभयो: प्राप्तिकप्राप्तिसम्भावनाकरणात् प्राप्त्याशा नाम तृतीया कार्य्यावस्था तथा च दर्पणे—"उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भव:।"

एवं दुष्मन्तशकुन्तलयो: सम्मेलनमेव फलम्, तस्य च प्रधानोपाय: परस्पर स च पूर्वं कथञ्चिदुद्भिन्न:, अत्र तु सम्यगेव उद्भिन्न:; तथा "पृष्टा जनेन" "अवहीरणाभीरुअ वेवदि हिअअ" इत्यनेन च उभयोरेवानुरागस्य सन्देहहेतु एवमुभयोरेव उभयान्वेषणं स्फुटम्; पुनश्च "ण माणणीएसुं जणेसुं अप्पाणं इच्छं" "धिग् व्रीड़ितोऽस्मि" इत्येताभ्यां ह्रास:, तथैव अन्वेषणञ्च स्पष्टमेव दर्पणे—

> "फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन।
> गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहु:॥"

अस्य च अभूताहरणादीनि त्रयोदशाङ्गानि यथास्थानं निवेश्य लक्षणानि वक्ष्य

রাজা। যাহাদের সুখ ও দুঃখ সমান, সেই সখীরা কি করিয়াছেন, তাহাতে এই বালিকা যে মনঃপীড়ার কারণ বলিতে এমন নহে। কিন্তু ইনি ফিরিয়া ফিরিয়া বহুবার আমাকে দেখিয়া স্বতরাং এখন উত্তর শুনিবার জন্য অধীরতা প্রাপ্ত হইতেছি।১২

(१) सखि! जदो पहुइ मम दंसणपहं आअओ सो तवोवणरक्खि तदो आरहिअ तग्गदेण अहिलासेण एतदवत्थाम्हि संवुत्ता।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभे। कधेदु कधेदु पिअसही (१)। (ष)

शकु। तदो पहुदि तग्गदेण अहिलासेण एआवदवत्थह्मि संवुत्ता (२)। (स)

उभे। दिट्ठिआ दे अणुरूए वरे अहिलासो ; अधवा साअरं उज्झिअ कहिं महाणईए पविसिदव्वं (३)। (ह)

---

(श) यतः प्रभृति तपोवनरक्षिता स राजर्षिर्मम दर्शनपथं गतः।

(ष) कथयतु कथयतु प्रियसखी।

(स) ततः प्रभृति तद्गतेन अभिलाषेण एतावदवस्थास्मि संवृत्ता।

(ह) दिष्ट्या ते अनुरूपे वरे अभिलाषः। अथवा सागरम् उज्झित्वा कस्मिन् महानद्या प्रवेष्टव्यम्।

---

(श) शकु इति। स राजर्षिर्दुष्मन्तः। 'तदो पहुदि' इत्यादि वक्ष्यमाणापेक्षया चास्य अर्द्धत्वं बोध्यम्। लज्जां नाटयति अभिनयति, सुरतविषयकत्वादित्याशयः।

(स) शकु इति। तां गतस्तद्गतस्तेन दुष्मन्तविषयकेणेत्यर्थः, अभिलाषेण रन्तुमिच्छया, एतावती अवस्था दशा यस्याः सा।

अत्र गुप्तविषयस्य प्रकाशनात् क्षिप्तिर्नाम गर्भसन्धेरङ्गम्। यथा दर्पणे—

"रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्।"

---

(श) শকুন্তলা। যে অবধি তপোবনরক্ষিতা সেই রাজর্ষি, আমার দৃষ্টিপথে পড়িয়াছেন—( এই অর্দ্ধোক্তির পর লজ্জা অভিনয় করিল। )

(ষ) সখীদ্বয়। প্রিয়সখী বল বল।

(স) শকুন্তলা। তদবধি তদ্গত অভিলাষবশতঃ আমি এইরূপ অবস্থায় উপনীত হইয়াছি।

---

(१) क्वचिदयं पाठो नास्ति। (२) क्वचिदेष पाठोऽपि पृथङ् न वर्त्तते।
(३) क्वचित् एष पाठो नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सहर्षम्। श्रुतं यच्छ्रोतव्यम् (१)। (च)
स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य (२) ॥१३॥

(छ) उभे इति। दिष्ट्या भाग्येन। उज्झित्वा परित्यज्य। महानद्या सा... अत्र दृष्टान्तोऽलङ्कारः।

(च) राजेति। यत् श्रोतव्यमासीदित्यर्थः। यच्छब्दस्य उत्तरवाक्यगतस्य... तच्छब्दापेक्षा।

स्मर इति। तपात्यये ग्रीष्मकालावसाने, जीवलोकस्य प्राणिजगतः, अपि... अभ्रं मेघस्तेन तद्व्यापनेनेत्यर्थः श्यामः श्यामवर्णः, दिवस इव, स्मरः काम ए... तापहेतुः सन्तापजनक आसीत्, इदानीं स स्मर एव पुनर्निर्वापयिता तत्तापनिवर्त... जातः। तथा च यथा ग्रीष्मकाले दिवसो जनानां सन्तापं जनयति, परन्तु ग्रीष्मा... साने वर्षोन्मुखमेघावृतगगनः स एव दिवसः शीतवायुवहनात् तं सन्तापं पुनर्नि... यति; तथा कालोऽपि शकुन्तलोद्देशेन मम सन्तापं जनितवान्, पुनर्मोहेशेन शकु... मपि सन्ताप्य समाशापूरणेन तं मे सन्तापं निवर्त्तितवानिति सरलार्थो भावार्थः।

अत्र तापजनकत्व-तापोपशमकत्वयोर्विरूपयोः सङ्घटनया विषमालङ्कारः श्लेष... संसृज्यते। अभ्रश्यामपदेन सजलमेघसूचनेन शीतलवायुवहनसूचनात् न अपुष्टार्थत्वं...

"अभ्रं मेघो वारिवाहः" इत्याद्यमरः। आर्य्या जातिः ॥१३॥

(छ) सखीद्वय। ভাগ্যবশতঃ উপযুক্ত বরেই তোমার ... জন্মিয়াছে। অথবা সমুদ্র পরিত্যাগ করিয়া মহানদী আর ... প্রবেশ করিবে।

(ক) রাজা। ( আনন্দের সহিত ) যাহা শুনিবার, তাহা শুনি... দিন যেমন গ্রীষ্মকালে লোকের সন্তাপ জন্মায়, আবার গ্রী... অতীত হইলে সেই দিনই মেঘমলিন হইয়া সেই সন্তাপের নিবৃত্তি...

(१) क्वचित् यच्छब्दो न दृश्यते। (२) दिवस इवार्द्रश्यामः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। ता जइ वो अणुमदं, तदो तधा पउत्तिदव्वं, जधा तस्स राएसिणो अणुकम्पणीआ होमि त्ति। अण्णधा सुमरेध मं (१)। (क)

राजा। अहो! विमर्शच्छेदि वचनम्। एतदेव कामफलम्, यत्फलमन्यत्। एतावदवस्थापि मां सुखयति (२)। (ख)

---

(क) तद् यदि वामनुमतम्, ततस्तथा प्रवर्त्तितव्यम्, यथा तस्य राजर्षेरनुकम्पनीया भवामीति। अन्यथा स्मरतं माम्।

---

(क) शकु इति। तत् तस्मात्। वां युवयोः अनुमतं सम्मतं दुष्मन्तं प्रति ममेदमभिलाषकरणमित्यर्थः ततस्तदा, प्रवर्त्तितव्यं यतितव्यम्। अनुकम्पनीया सम्मेलनेन दयापात्रीकरणीया। अन्यथा युवयोर्यत्नाभावेन तस्यानुकम्पनीयत्वाभावे, मां स्मरतं मरणावस्थासम्भावात् स्मृतिविषयमेव कुरुतमित्यर्थः।

(ख) राजेति। विमर्शच्छेदि सकलसंशयनिवर्त्तकम्। तथा च किमियं शकुन्तला कण्वादिगुरुजनानपेक्ष्यैव आत्मानं दातुं शक्ष्यति; किंवा मह्यमात्मानं दातुमिच्छन्तीमपि पराधीनतया कण्वादिगुरुजनः अन्यस्मै दास्यति इत्यादिः सर्व एव संशयः, अनेन वचनेन निरस्तः, आत्मदाने गुरुजनानपेक्षत्वसूचनादित्याशयः। एतदेव परस्परं प्रति परस्परासक्तिरूपमेव, कामफलं कामेन जनितम्, अन्यत् क्रियाभूतं परिणयादिकम्, यत्फलम् उभयोर्वरकन्यापक्षयोश्चेष्टाजन्यम्, तत्तु कामेन न जन्यते

---

সেইরূপ কামদেবই আমার সন্তাপ জন্মাইয়াছিলেন, আবার তিনিই সেই সন্তাপের নিবৃত্তি করিলেন ॥১৩॥

(ক) শকুন্তলা। তা, যদি তোমাদের সম্মত হয়, তবে সেইভাবে প্রবৃত্ত হইবে, যাহাতে আমি সেই রাজর্ষির দয়ার পাত্র হইতে পারি। না হইলে আমাকে স্মরণ করিবে।

---

(१)...अणुमदं तह वट्टह...अण्णहा अवस्सं सिञ्चह मे तिलोदअं।

(२) संशयच्छेदि वचनम् इतिमात्रः पाठः क्वचित्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रिय'। जनान्तिकम्। अणसूए! दूरगदो से मणोर अक्खमा इग्र' कालहरणस्स (१)। (ग)

अन। पिअंवदे! को णु उवाओ भवे, जेण अविलम्बि णिहुदञ्च सहीए मणोरहं सम्पादेम्ह (२)। (घ)

(ग) अनसूये! दूरगतः अस्या मनोरथः, अक्षमा इयं कालहरणस्य।

अयोग्यत्वादिति भावः। एतावती एतत्पर्य्यन्ता मदासक्तिप्रदर्शनमात्रपर्य्यन्ता यस्याः सा तादृश्यपि मां सुखयति; अधुना सङ्गमाजननेऽपि अनयैवासक्त्या मा जननस्यावश्यम्भावादित्यभिप्रायः।

अत्र मार्गो नाम गर्भसन्धेरङ्गम्—"तत्त्वार्थकथनं मार्गः" इति दर्पणलक्षणम्।

(ग) प्रियमिति। अस्याः शकुन्तलायाः, मनोरथः दुष्मन्तेन सह सङ्गमा दूरगतः नितान्ताधिकीभूत इत्यर्थः; अतएव कालहरणस्य विलम्बस्य करणे अक्षमा।

(খ) রাজা। ভাল! সন্দেহনাশক বাক্য বটে। ইহাই ফল; অন্য যাহা, তাহা চেষ্টার ফল। এইরূপ অবস্থা হইয়াও আ সুখী করিতেছে।

(গ) প্রিয়ংবদা। (অনসূয়ার প্রতি চুপি চুপি) অন শকুন্তলার অভিলাষ দূরে উঠিয়াছে; সুতরাং এ, কালক্ষেপ ক অসমর্থ হইতেছে।

(१)···दूरगअमम्मह अक्खमा···। जस्सिं बद्धभावा एसा, सो ललामभूदो पौर वा जुत्तं से अहिलासो अहिणन्दिदुं।

(२)···तह जह मणावि। प्रियंवदा। प्रकाशम्। सहि! दिट्ठिआ दे अहिणिवेसो। साअरं वज्जिअ कहिं वा महाणई ओदरइ। को दाणिं स अन्तरेण अदिमुत्तलदं पल्लविअं सहइ। राजा। किमत्र चित्रं यदि विशाखे लेखामनुवर्त्तते। अनसूया। को उण उवाओ भवे···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रिय'। णिहुद' त्ति चिन्तणीअं, सिग्घं त्ति ण दुक्कर'। (ङ)

अन। कध' विअ ?। (च)

प्रिय'। ण' सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिआ सूइदाहिलासो इमेसु' दिअसेसु' पजाअरकिसो विअ लक्खीअदि। (छ)

---

(घ) प्रियंवदे! को नु उपायो भवेत्, येन अविलम्बितं निभृतञ्च सख्या मनोरथं सम्पादयावः।

(ङ) निभृतमिति चिन्तनीयम्, शीघ्रमिति न दुष्करम्।

(च) कथमिव ?।

(छ) ननु सोऽपि राजर्षिः अस्मिन् जने स्निग्धदृष्ट्या सूचिताभिलाषः एषु दिवसेषु प्रजागरकृश इव लक्ष्यते।

---

(घ) अनेति। निभृतं गुप्तञ्च यथा स्यात्तथा। मनोरथं मनोरथविषयभूतं दुष्मन्तसङ्गमम्।

(ङ) प्रियमिति। निभृतं गुप्तं गुप्तभावेन सम्मेलनजननम्, चिन्तनीयं दुष्करतया भावनीयम्, ऋषीणामितस्ततः सञ्चरणादिति भावः। शीघ्रं शीघ्रं सम्मेलनघटनम्, न दुष्करम्, दुष्मन्तस्यापि एतां प्रति गुरुतरासक्त्यवगमादित्यभिप्रायः।

(छ) प्रियमिति। अस्मिन् जने शकुन्तलायाम्, स्निग्धदृष्ट्या सानुरागदृष्टिपातेन,

---

(घ) অনসূয়া। প্রিয়ংবদা! কি উপায় হইবে, যাহাতে অবিলম্বে অথ চ গোপনে সখার অভিলাষ সম্পাদন করিতে পারি।

(ঙ) প্রিয়ংবদা। গোপনে ইহাই চিন্তার বিষয়; কিন্তু 'শীঘ্র' ইহা দুষ্কর নহে।

(চ) অনসূয়া। কি রকম ?।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। আত্মানমালোক্য। সত্যমিত্থম্ভূত এবাস্মি। তথাহি—

অভিশিরতরৈরন্তস্তাপৈর্বিবর্ণমলীমসং
নিশি নিশি ভুজন্যস্তাপাঙ্গপ্রবর্ত্তিভিরশ্রুভিঃ।
অনতিলুলিতজ্যাঘাতাঙ্কান্মুহুর্মণিবন্ধনাৎ
কনকবলয়ং স্রস্তং স্রস্তং ময়া প্রতিসার্য্যতে (১)॥(

সূচিতঃ অভিলাষো যস্য সঃ। প্রজাগরেণ রাত্রিজাগরণেন কৃশঃ। তথা চ তত্তাদৃ সত্বাৎ গ্রীষ্মমিতি ন দুষ্করমিতি ভাবঃ।

(জ) রাজেতি। আত্মানং স্বদেহম্। সত্যমিতি প্রিয়ংবদোক্তৌক্ত ইত্থম্ভূতঃ প্রজাগরকৃশ এব।

অভিশিরেতি। অন্তস্তাপৈঃ অন্তর্গতমদনসন্তাপৈর্হেতুভিঃ। হেতুত্বঞ্চ পাদদ্বয় প্রতীতি বোধ্যম্। অভিশিরতরৈরত্যুষ্ণৈঃ, নিশি নিশি রাত্রৌ রাত্রৌ, ভুজে ন্যস্তং স্থাপিতাৎ অপাঙ্গাৎ নয়নপ্রান্তাৎ প্রবর্ত্তন্তে নির্গচ্ছন্তীতি তৈঃ, অশ্রুভিঃ বিবর্ণং কশ্চিৎস্থিতং বিকৃতবর্ণং কশ্চিৎস্থিতং মলীমসং মলিনীভূতম্। বিশেষণয়োঃ পরস্য বিশেষ্যত্ববিবক্ষয়া "ভাব্যং প্রসন্নগম্ভীরম্" ইত্যাদিবৎ কর্মধা কনকবলয়ং স্বর্ণকটকম্, অনতিলুলিতঃ বলয়াবরণেন অনতিব্যক্তঃ জ্যাঘা ধনুর্গুণঘর্ষণচিহ্নং যস্মিন্ তস্মাৎ তথোক্তাৎ, মণির্বধ্যতেঽস্মিন্নিতি মণিবন্ধং প্রকোষ্ঠদেশস্তস্মাৎ স্রস্তং স্রস্তং স্খলিতং স্খলিতম্, ময়া মুহুর্বারং বারং প্রতি

(ছ) প্রিয়ংবদা। ওহে! সে রাজর্ষিও, এই ব্যক্তির প্রতি দৃষ্টিদ্বারা, নিজের অভিলাষ ব্যক্ত করিয়াছেন এবং এই কয় দি তাঁহাকে জাগরণবশতঃ কৃশ বলিয়া লক্ষ্য করিয়াছি।

(জ) রাজা। (আপনার দিকে চাহিয়া) সত্য; আমি এই ত হইয়াছি। যেহেতু—

(১)···অন্তস্তাপাদ্বিবর্ণমপীকৃতং।··ভুজন্যস্তাপাঙ্গপ্রসারিভিঃ···। অনতি জ্যাঘাতাঙ্কং। পুনঃ প্রতিসার্য্যতে।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियं । विचिन्त्य । हला ! मअणलेहणं दाणिं से करीअदु, अहं तं सुमणोगोविदं करुअ देवदासेवावदेसेण तस्स रस्रो हत्थं पावइस्सं । (क)

(क) हला ! मदनलेखनमिदानीमस्याः क्रियताम्, अहं तत् सुमनोगोपितं कृत्वा देवतासेवापदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि ।

स्वस्थानं नीयते । पूर्वं शरीरस्य आपेक्षिकस्थूलतया दृढलग्नस्य कनकवलयस्येदानीं स्रंसनात् कृश एवास्मीति भावः ;

अत्र कृशाङ्गत्वात् प्रस्तुतेन कार्य्येण कनकवलयस्रंसनेन तत्कारणीभूतं कार्श्यं प्रत्याय्यत इति पर्य्यायोक्तमलङ्कारः । अशिशिरतरैरित्यनेन तापस्याधिक्यं व्यज्यते । दिवसे रोदने परैः सन्दर्शनेन गाम्भीर्य्यहान्या धीरोदात्तत्वव्याघात इति निशि निशीत्युक्तम् । भुजन्यस्तापाङ्गेत्यनेन चिन्ता सूच्यते लोकस्तथैव चिन्ताकरणात् । व्याघाताङ्कस्य उच्चत्वेनैव अतिस्पष्टत्वं भवति, अनतिस्पष्टत्वे च अनत्युच्चत्वम् ; ततश्च कनकवलयस्रंसने व्याघाताङ्केन न प्रतिबन्ध इति दर्शितम् । अतो नापुष्टार्थतादोषः ।

अत्र कनकवलयमिति दर्शनात् पुरा अबालकानामपि पुरुषाणामलङ्कारधारणरीतिरासीदिति प्रतीयते ।

हरिणी वृत्तम्—"न-स-म-र-सलागैः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात् ॥१४

(क) प्रियमिति । विचिन्त्य उपायोद्भावने भावनां कृत्वा । हला इति अनसूया-

আমি প্রত্যেক রাত্রিতে হাতের উপরে নয়নের প্রান্তদেশ রাখিয়া বসিয়া থাকি ; তখন ভিতরের সন্তাপের উষ্ণ অশ্রুজল পতিত হইয়া হাতের সোণার বালাগাছীকে বিবর্ণ এবং মলিন করিয়া থাকে ; এদিকে ধনুর গুণ আকর্ষণ করায় মণিবন্ধদেশে চিহ্ন হইয়াছে, বলয় থাকায় সে চিহ্ন ব্যক্ত হয় না ; এহেন মণিবন্ধদেশ হইতে সেই সোণার বালা বার বার পড়িয়া যাইতে থাকে, আমি আবার তাহা বার বার সরাইয়া দিয়া থাকি ॥১৪॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অন। সহি! রোঅদি মে সুউমারো এসো পওও কিংবা সউন্তলা ভণাদি ?। (ঞ)

শকু। সহীণিঅোঅো বি বিকপ্পীঅদি ? (১)। (ট)

(ঞ) সখি! রোচতে মে এষ প্রয়োগঃ। কিংবা শকুন্তলা ভণতি ?।

সম্বোধনম্। অস্যাঃ শকুন্তলায়াঃ সম্বন্ধে, মদনলেখনম্ আত্মনঃ কামাভিলাষ লিপিঃ। সুমনোভিঃ পুষ্পৈঃ গোপিতং কৃত্বা পুষ্পরাশেরভ্যন্তরে স্থাপয়িত্বেত্যর্থঃ, তং সেবাপদেশেন দেবতাপূজাচ্ছলেন আভিঃ সুমনোভির্দেবতা পূজ্যতামিতি ছলেনেত্যর্থঃ।

অত্র অভূতাহরণং নাম গর্ভসন্ধেরঙ্গম্। তথা চ দর্পণে—

"তত্র ব্যাজাশ্রয়ং বাক্যমভূতাহরণং মতম্।"

"স্ত্রিয়ঃ সুমনসঃ পুষ্পম্" ইত্যাদ্যমরঃ।

(ঞ) অনেতি। সুকুমারঃ কোমলঃ অপরিশ্রমসাধ্য ইত্যর্থঃ। মদন অভিসরণে তু পরিশ্রমাৎ কাঠিন্যং স্যাদিতি ভাবঃ। প্রয়োগঃ অনুষ্ঠানম্। কিংবা তু উক্তার্থে শকুন্তলায়া মতমস্তি ন বেতি জিজ্ঞাসার্থা।

(ট) শকু ইতি। সখ্যোর্নিরতিশয়হিতৈষিণোর্যুবয়োঃ নিয়োগ আর্য্যে বিকল্প্যতে কর্ত্তব্যঃ অকর্ত্তব্যো বা ইতি বিবিচ্যতে ? কাকুবশাৎ কথমপি নৈব উক্তোপায়ে সর্বথা মম সম্মতিরস্তীতি ভাবঃ।

অত্র মনোরথো নাম নাট্যলক্ষণম্। যথা দর্পণে—

"মনোরথস্ত্বভিপ্রায়স্যোক্তির্ভঙ্গ্যন্তরেণ যৎ।"

(ঝ) প্রিয়ংবদা। (চিন্তা করিয়া) ওলো! উহার জন্য একখানা কামলিপি রচনা কর, আমি তাহা পুষ্পের ভিতরে গুপ্ত দেবতাপূজার ছলে সেই রাজার হাতে পৌঁছাইয়া দিব।

(ঞ) অনসূয়া। সখি! কোমল এই অনুষ্ঠানটী অভিমত হয়। অথবা শকুন্তলা কি বলে ?।

(১) কো ণিওোও বিকপ্পীঅদু।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियं । तेण हि अत्तणो उवस्सासाणुरूअं चिन्तेहि ललिदपदावलिवन्धं गीदिअं (१) । (ठ)

शकु । चिन्तेमि ; किन्तु अवहीरणाभीरुअं वेवदि मे हिअअं (२) । (ड)

(ट) सखीनियोगोऽपि विकल्प्यते ।

(ठ) तेन हि आत्मन उपन्यासानुरूपां चिन्तय ललितपदावलिबन्धां गीतिकाम् ।

(ड) चिन्तयामि ; किन्तु अवधीरणाभीरुकं वेपते मे हृदयम् ।

(ठ) प्रियमिति । तेन हि आत्मनोऽपि सम्मतत्वेनैव हेतुना । उपन्यासानुरूपां प्रथमकथनयोग्याम्, ललितया कोमलया पदावल्या सुप्तिङन्तपदश्रेण्या बन्धो रचना यस्यास्ताम् । तथात्वे श्रुतिमधुरतया राज्ञः प्रीत्यतिशयो भवेदिति भावः । गीतिकां गीतम् । तदेव राज्ञो हस्तं प्रापयिष्यामीत्याशयः ।

"उपन्यासस्तु वाङ्मुखम्" इत्यमरः ।

(ड) शकु इति । चिन्तयामीति प्रियंवदोक्तिस्वीकारः । अवधीरणाया मय्येव राजकृतावज्ञातः भीरुकं भयशीलम् । वेपते कम्पते । तथा च राजा दुष्मन्तो यदि वनवासिनीमकिञ्चनां मामवज्ञया प्रत्याचष्टे, तदा तादृशलेखने केवलकुलटाहृत्तिप्रकाशः स्यादित्यभिप्रायः ।

अत्र अवधीरणाजनितभयादुद्वेगो नाम गर्भसन्ध्यङ्गम् । यथा दर्पणे—

"नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः ।"

(ট) শকুন্তলা। সখীর আদেশেও কি মতামত করিব ?।

(ঠ) প্রিয়ংবদা। তাহা হইলে নিজের অবস্থার অনুরূপ এবং সুললিতপদাবলীরচিত একটি গীত চিন্তা কর।

(१)···उवण्णासपुव्वं चिन्तेहि दाव किं वि ललिअपदवन्धणं ।

(२) हला···अहं ।···पुण वेवइ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । विहस्य । अयं स ते तिष्ठति सङ्गमोत्सुको
विशङ्कसे भीरु ! यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥१५॥

अपि च, अयं स यस्मात् प्रणयावधीरणाम्
अशङ्कनीयां करभोरु ! शङ्कसे ।

---

अयमिति । हे भीरु ! अवज्ञाभयशीले ! यतो यस्मात् जनात्, त्वम् यां अवज्ञाम्, विशङ्कसे सन्दिह्यसि, अयं स जनः, ते तव, सङ्गमाय सम्मेलनाय उत्कण्ठितः सन्, तिष्ठति । तथा च प्रार्थयिता श्रिया एव प्रार्थी जनः, श्रियं लभेत प्राप्नुयात्, वा किंवा, न लभेत इत्यर्थः, किन्तु श्रिया तया सम्पदा, आप्तुमिष्टः अभिलषितो जनः, कथं दुरापो दुर्लभः भवेत्, कथमपि नेत्यर्थः । च मयैव त्वं दुर्लभा, न तु त्वया अहं दुर्लभः, त्वल्लिप्सयैवोपस्थितत्वादित्याशयः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः अर्थापत्तिश्च, अनयोः प्रधानभावेनाङ्गाङ्गिभावात् सङ्करः । तथा श्रियं श्रियेति श्रीशब्दस्य वारद्वयेन कथितपदतादोषः "रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्" इति साहित्यदर्पणोदाहरणवत् ; स च 'तया दुरापः' इति पाठेन समाधेयः ।

वंशस्थविलं वृत्तम्—"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ॥१५॥

---

(ড) শকুন্তলা। চিন্তা ত করিব; কিন্তু আমার মন ভয়ে কাঁপিতেছে।

রাজা। (একটু হাসিয়া) হে ভীরু! তুমি যে লোক হইতে অবজ্ঞার আশঙ্কা করিতেছ, এই সেই লোক তোমার সহিত মিলিত হইবার জন্য উৎকণ্ঠিত হইয়া রহিয়াছে। প্রার্থী ব্যক্তি শ্রী পাইতে পারে, নাও পাইতে পারে; কিন্তু শ্রী যাহাকে লাভ করিতে ইচ্ছা করে, সে ব্যক্তি শ্রীর পক্ষে দুর্লভ হইবে কেন ॥১৫॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपस्थितस्त्वां प्रणयोत्सुको जनो
न रत्नमन्विष्यति मृग्यते हि तत् (१) ॥१६॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह अयमिति। करभो हस्तस्य मणिबन्धदेशात् कनिष्ठाङ्गुली-पर्य्यन्ततिर्य्यक्‌प्रदेशाविव ऊरू यस्यास्तत्सम्बोधनम्। हे करभोरु! यस्मात् जनात्, अशङ्कनीयाम् असन्देहनीयाम्, प्रणयावधीरणां प्रार्थनावज्ञाम् अवज्ञया प्रार्थना-निरासमित्यर्थः, शङ्कसे सन्दिह्यसि; सः अयं जनः अहमित्यर्थः; प्रणयोत्सुकः तवैव प्रार्थनोद्युक्तः सन्, त्वाम् उपस्थित आगतः। अतएव अस्मादवज्ञाशङ्का कथमपि न करणीयेति भावः। हि तथाहि, रत्नं मणिः कर्त्तृ, न अन्विष्यति स्वीकारान् न मार्गयति; किन्तु तत् रत्नमेव, मृग्यते लोकैर्मार्ग्यते।

अत्रापि पूर्ववदेव अर्थान्तरन्यासोऽलङ्कारः। तथा पूर्ववदेव प्रणयशब्दस्य द्विःपाठात् कथितपदतादोषः, किञ्च चतुर्थपादे कर्त्तृपदानभिधानात् न्यूनपदतादोषश्च, अन्विष्यति इत्यनेन प्रक्रम्य मृग्यत इत्यभिधानात् भग्नप्रक्रमतादोषश्च। तेषां समाधानाय परार्द्धमेवं पठनीयम्—"उपस्थितस्तेऽर्थयिता स्वयं जनान् न याचते रत्नमिदं हि याच्यते॥" तथा च रत्नं कर्त्तृ जनान् न याचते, इदं रत्नमेव याच्यते तैर्जनैरिति विभक्तिविपरिणामेन याच्यत इत्यस्य कर्त्तृपदप्राप्तिरिति ध्येयम्।

"प्रणयः प्रेम्णि याच्ञायाम्" इति हेमचन्द्रः। "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः।

चतुर्थचरणमविकलमेव रघुवंशतृतीयसर्गेऽपि दृश्यते। वंशस्थविलं वृत्तम् ॥१६॥

আরও, হে করভোরু! তুমি যে ব্যক্তি হইতে, আশঙ্কার অযোগ্য প্রার্থনাভঙ্গের আশঙ্কা করিতেছ, এই সেই ব্যক্তি তোমারই প্রার্থনার জন্য উৎকণ্ঠিত হইয়া উপস্থিত হইয়াছে। কারণ, রত্ন কাহাকেও অন্বেষণ করে না, রত্নকেই সকলে অন্বেষণ করে ॥১৬॥

(१) क्वचिदेष श्लोको न दृश्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सख्यौ। अइ अत्तगुणावमाणिणि! को णाम सन्ता[illegible] णिव्वाणहेतुअं सारदीअं जोसुं आदवत्तेण णिवारेदि (ढ)।

शकु। सस्मितम्। णिओइदम्हि (ण)। इत्युपविष्टा चिन्तयति।

(ढ) अयि आत्मगुणावमानिनि! को नाम सन्तापनिर्वाणहेतुकां [illegible] ज्योत्स्नाम् आतपत्रेण निवारयति।

(ण) नियोजितास्मि।

(ढ) सख्याविति। आत्मनो गुणान् सौन्दर्य्यादीनवमन्यते अवजानातीति [illegible] गुणावमानिनी तत्सम्बोधनम्। परमसुन्दरमप्यात्मानं प्रति कुरूपत्वादिनैव [illegible] शङ्काकरणात् आत्मनः सौन्दर्य्यादिगुणान् प्रत्येव अवज्ञाकरणं सम्भावनमिति [illegible] सन्तापनिर्वाणस्य ग्रीष्मतापशान्तेः हेतुकां हेतुभूताम्, शारदीं शरत्काली[न]ं एतद्विशेषणेन ज्योत्स्नाया शैत्यवैशद्यातिशयद्योतनेन सन्तापशान्त्यतिशय[illegible] आतपत्रेण छत्रेण, को नाम जनः, निवारयति अपि तु कोऽपि नैवेत्यर्थः। [illegible] दुष्मन्तोऽपि स्वकामसन्तापनिर्वाणहेतुभूतां परमसुन्दरीं त्वां नावज्ञया [illegible] इति भावः।

अतएवात्र समादप्रस्तुतात् प्रस्तुतसमप्रतीतिरूपा अप्रस्तुतप्रशंसालङ्कारः।

(ण) शकु इति। स्वप्रशंसाश्रवणेन मनोरथपूरणसम्भवकौतुकेन च [illegible] बोध्यम्। नियोजितास्मि युवयोरादेशेन प्रवर्त्तितास्मि मदनलेखरचनायामिति [illegible] चिन्तयति मदनलेखसंग्रहाय भावयति।

(ঢ) সখীদ্বয়। ওলো আত্মগুণের অবজ্ঞাকারিণি! কোন্ [illegible] সন্তাপের শান্তিকারক শারদীয় জ্যোৎস্নাকে ছত্রদ্বারা নিবারণ ক[রে]।

(ণ) শকুন্তলা। (ঈষৎ হাস্য করিয়া) নিযুক্ত হইলাম। বলিয়া উঠিয়া বসিয়া চিন্তা করিতে লাগিল।)

(१) अत्तगुणावमाणिणि! को दाणिं सरीरणिव्वावइत्तिअं सारदिं [illegible] पड़न्तेण वारेइ। (२) णिओइआ दाणिं म्हि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रिया-मवलोकयामि। यतः—(त)

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन (१) ॥१७॥

शकु। हला! चिन्तिदा मए गीदिआ। असण्णिहिदाणि उण लेहणसाहणाणि (२)। (थ)

(त) राजेति। स्थाने युक्तम्। विस्मृतनिमेषेण निर्निमेषेण। तथा च निर्निमेषेण चक्षुषा यत् प्रियामवलोकयामि, तत् युक्तमेवेत्यर्थः। तत् प्रतिपादयितुमाह यत इति।

"युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः।

उन्नमितैकेति। पदानि मदनलेखप्रयोगान्, रचयन्त्याः संघटयन्त्याः, अस्याः शकुन्तलायाः, उन्नमिता उत्तोलिता एका भ्रूलता यस्य तत् आननं मुखं कर्तृ, पुलकाञ्चितेन रोमाञ्चव्याप्तेन, कपोलेन गण्डेन करणेन, मयि मद्विषये, अनुरागं कथयति वचनवत् स्पष्टं सूचयति, मदनुरागवशादेव पुलकाविर्भावादिति भावः।

अत्र राज्ञः शकुन्तलाया भावतत्त्वोपलब्धेः क्रमो नाम गर्भसन्ध्यङ्गम्—"भाव-तत्त्वोपलब्धिस्तु क्रमः स्यात्" इति दर्पणलक्षणात्। इदमेव च तवोदाहृतम्। व्यतिक्रम-दोषसमाधानन्तु पूर्वमेवोक्तम्। आर्या जातिः ॥१७॥

(त) রাজা। নির্নিমেষ নয়নে যে প্রিয়তমাকে দেখিতেছি, তাহা উচিতই বটে। কারণ—

ইনি কামলিপির পদ রচনা করিতেছেন, ইহার একটী ভ্রূলতা উপরে উঠিয়াছে; এই অবস্থায় ইহার মুখখানি, রোমাঞ্চিত গণ্ডদ্বারা আমার প্রতি অনুরাগ প্রকাশ করিতেছে ॥১৭॥

(१) कण्टकितेन प्रथयति…।

(२) हला! चिन्तिदं मए गीअवत्थु। णहु सण्णिहिदाणि उण…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

প্রিয়ং। ণং ইমস্সিং সুআদরসুউমারে ণলিণীবত্তে প-
চ্ছেদভত্তীএ ণহেহিং আলিহীঅদু (১)। (দ)

শকু। যথোক্তং রূপয়িত্বা। হলা! সুণাধ দাব সঙ্গদ-
বত্তি (২)। (ধ)

(থ) হলা! চিন্তিতা ময়া গীতিকা। অসন্নিহিতানি পুনঃ লেখনসাধ...
(দ) নন্বস্মিন্ শুকোদরসুকুমারে নলিনীপত্রে পদচ্ছেদভক্ত্যা নখৈরালিখ্যতাং...

(থ) শকু ইতি। চিন্তিতা চিন্তয়িত্বা নিরূপিতা। অসন্নিহিতানি ...
অস্থিতানি, লেখনসাধনানি পত্র-মসী-লেখন্যঃ। অতএব কুত্র কেন তাং ...
লিখামীতি ভাবঃ।

(দ) প্রিয়মিতি। অনুজ্ঞায়াং নতুশব্দঃ। অস্মিন্ তব তাপশান্ত্যর্থং
শুকোদরবত্ শুকপক্ষিণঃ ক্রোড়দেশবত্ সুকুমারে কোমলে মসৃণে ইত্যর্থঃ। ...
যথা তথা বা লিখ্যতাং রাজা পঠিতুং শক্ষ্যতীতি ভাবঃ। নলিনীপত্রে পদ...
নখৈর্নখাগ্রভাগৈঃ, পদানাং পাদানাং ছেদস্য অবসানস্য ভক্ত্যা ভাবেন; ...
যাবন্নাগয়ষ্টী পাদাবসানপর্য্যন্তং স্থিয়তে তাবন্নাগয়ষ্ট্যেন লিখ্যতাম্, এবম্ ...
মবিবেকিনীং বোদ্ধুং ন শক্ষ্যতীতি ভাবার্থঃ সরলার্থশ্চ।

(ধ) শকু ইতি। রূপয়িত্বা অভিনীয় লেখনাভিনয়ং কৃত্বেত্যর্থঃ। ...
উচিতার্থা। শৃণুতং যুবামিতি শেষঃ।

(থ) শকুন্তলা। ওলো! আমি গীত চিন্তা করিয়াছি।
লিখিবার উপকরণ নিকটে নাই।

(দ) প্রিয়ংবদা। ওহে! শুকপাখীর পেটের মত পালি...
পদ্মপাতার যে ভাগ লইলে এক একটী চরণ ধরে, সেই ভা...
নখ দিয়া লেখ।

(১) নাম...নখৈর্হি' লিখিতব্যং করণু।
(২) হলা! শৃণুত তাবিং সংগতার্থং খবতি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभे। अवहिद ह्म। (न)

शकु। वाचयति। (प)

तुज्झ ण आणे हिअअं, मम उण मअणो दिवा वि रत्तिं वि।
णिक्किव! तावइ वलिअं, तुह हुत्तमणोरहाइ अङ्गाइं (१) ॥१८॥

(घ) हला! शृणुत तावत् सङ्गतार्थो न वेति।

(न) अवहिते स्वः।

तव न जाने हृदयम्, मम पुनर्मदनो दिवापि रात्रिमपि।
निष्कृप! तापयति बलीयः तव हस्तमनोरथानि अङ्गानि ॥१८॥

68

(न) उभे इति। अवहिते श्रोतुं कृतमनोयोगे, स्व आवामिति शेषः।

(प) शकु इति। वाचमाचष्ट इति वाचयति पठतीत्यर्थः।

तवेति। हे निष्कृप! निर्दय! राज्ञः प्रजापीड़ानिवृत्तिकरणस्यौचित्यात् अत्र तु भवता प्रजाभूताया एव मे पीड़ाप्रवृत्तान्तस्याप्यनादानादित्याशयः। तव हृदयं न जाने, तव चित्तं मयि सानुरागं निरनुरागं वेति नाहं वेद्मीत्यर्थः, पुनः किन्तु, मदनः कामः, तव हस्ते मनोरथः अभिलाषो येषां तानि। तथा च यथा जनो हस्तस्थं वस्तु स्वेच्छया यथा तथा वा कर्त्तुमर्हति, तथा त्वमपि ममाभिलाषं स्वेच्छया पूरयितुमपूरयितुं वा शक्नोषीति भावः। मम अङ्गानि, दिवापि दिवसमपि व्याप्य, रात्रिमपि च व्याप्य, बलीयः अत्यन्तमेव, तापयति। अतश्च लोकपालेन त्वया मम तत्तापशान्तिरवश्यमेव करणीयेत्यभिप्रायः।

दिवा रात्रिमित्युभयत्रापि "अभिविधौ कालाध्वमानात्" इति द्वितीया; दिवाशब्दस्य तु अव्ययत्वात्तस्या लोपः।

(ध) শকুন্তলা। (উক্তরূপে লিখিয়া) ওলো! তোমরা শোন, ইহার অর্থ সঙ্গত হইল কি না।

(ন) সখীদ্বয়। মন দিলাম।

(१)…मह उण कामो…। णिग्घिण! तवइ बलीअं तुह हुत्तमणोरह…।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। অবসরঃ খল্বয়মাত্মানং দর্শয়িতুম্।

স্বত্য—(১) (ফ)

৩৮ তপতি তনুগাত্রি! মদনস্ত্বামনিশং মাং পুনর্দহত্যেব।
গ্লপয়তি যথা শশাঙ্কং ন তথাহি কুমুদ্বতীং দিবসঃ॥১৮

---

ইদং গীতির্নাম চ্ছন্দঃ। যথা শ্রুতবোধে—

"আর্য্যা পূর্বার্দ্ধসমং যস্যা অপরার্দ্ধমপি চ হংসগতে।।
ছন্দোবিদস্তদানীং গীতিং তামমৃতবাণি! ভাষন্তে॥"

অতএব প্রিয়ংবদয়া "ললিতপদাবলিবন্ধং গীতিকং" ইতি, শকুন্তলয়া "চিন্তিদা মএ গীদিআ" ইত্যভিহিতম্, গানযোগ্যত্বাদস্যাঃ। পিঙ্গলেন তু উদ্‌গীতি নামোক্তম্। যথা—

"পুব্বদ্ধে উত্তদ্ধে মত্তা তীসন্তি সুহঅ! সংভণিআ।
সো উগ্গাহো বুত্তো পিঙ্গলকই দিট্ঠ-সট্ঠি মত্তাঙ্গো॥" ॥১৮॥

(ফ) রাজেতি। অবসরঃ সময়ঃ; তবেতি যুষ্মৎপদেন প্রত্যক্ষবৎ মনোহি...
দিতি ভাবঃ।

তপতীতি। তনূনি কৃশানি গাত্রাণি অঙ্গানি যস্যাস্তৎসম্বোধনম্।
কামঃ, অনিশং "দিবাবি রত্তিং বি" ইত্যভিহিতত্বাৎ অহর্নিশম্, ত্বাং তপতি সন্তাপ...
পুনঃ কিন্তু, মাং দহত্যেব দগ্ধীকরোত্যেব। তথা চ প্রখরতেজসা দূর...

---

(প) শকুন্তলা। (পড়িতে লাগিল)

হে নির্দ্দয়! তোমার মন আমি জানি না; তথাপি আমি তো...
হাতে অভিলাষ সমর্পণ করিয়াছি; এ অবস্থায় কামদেব, দি...
রাত্রিতেও আমার সমস্ত অঙ্গ অত্যন্ত সন্তপ্ত করিতেছেন।১৮।

(ফ) রাজা। আপনাকে দেখাইবার এই অবসর।
নিকটে যাইয়া)

---

(১) ক্বচিৎ 'রাজা। সহসোপসৃত্য' ইতিমাত্রঃ পাঠঃ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संयोगसम्बन्धजश्च दाहः। तेन तापापेक्षया दाहस्याधिक्यन्त्वणाकारत्वात् त्वदपेक्षया अहमेवाधिकं क्लिष्ट इत्याशयः। ननु स्त्रीपुंसयोर्निर्विशेषोऽयं शत्रुः कामः कथं स्त्रियं तपति पुमांसं दहतीति एकस्यैकदा विभिन्नौ व्यापारः सम्भवतीत्याह ग्लपयतीति। हि तथाहि, दिवसः प्रवर्त्तमानः सूर्य्यकिरणावच्छिन्नः कालः, यथा यादृक्, शशाङ्कं चन्द्रम्, ग्लपयति मलिनीकरोति, कुमुद्वतीं कुमुदिनीम्, तथा तादृक्, न ग्लपयतीति सम्बन्धः। तत्तु सर्वेषां प्रत्यक्षमेव। ततश्च एकेनैव कामेन तव तापः मम च दाह इति विभिन्नौ व्यापारः कर्त्तुं शक्यत एवेत्यभिप्रायः।

अत्र तनु-गात्रेत्यनयोः शब्दयोः पर्य्यायतया आपाततस्तदर्थस्य पुनरुक्तताप्रतीतेः परञ्च तनुशब्दस्य कृशार्थताप्रत्ययेन तदपगमात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः, तपति दहतीत्यनेकक्रिययोर्मदन इत्येककर्त्तृकारकत्वात् दीपकम्, पूर्वार्द्ध-परार्द्धार्थयोः प्रणिधानगम्यसाम्यात् दृष्टान्तः, शशाङ्ककुमुद्वत्योर्लिङ्गसाम्येन नायकनायिका-व्यवहारसमारोपात् समासोक्तिः, ग्लपयतीत्येकया क्रियया शशाङ्ककुमुद्वत्योः कर्म्मतयाभि-सम्बन्धात् तुल्ययोगिता च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः।

दहत्येव इत्येवशब्देन 'न तु त्वामिव केवलं तपति' इतीतरयोगव्यवच्छेदकरणान्न अनियमे नियमाख्यदोषः।

"स्तोकं दभ्रं कृशं तनु" इत्यमरः। "गात्रं गजाग्रजङ्घादौ क्लीवमङ्गे कलेवरे" इति मेदिनी।

तपतीतीनन्तसमानार्थतया सकर्म्मकत्वम्। ग्लपयतीति ग्लायन्तं प्रयुङ्क्ते इतीणि "सन्ध्यक्षरान्तानाम्" इत्यादिना ऐकारस्याकारः, "अर्त्ति-ह्री" इत्यादिना पकारागम मानुबन्धत्वाच्च ह्रस्वः।

आर्य्या जातिः ॥१९॥

---

হে কৃশাঙ্গি! কামদেব, দিবারাত্রি তোমাকে কেবল সন্তপ্ত করিতেছেন, আর আমাকে কিন্তু একেবারে দগ্ধই করিতেছেন। দেখ—দিন, চন্দ্রকে যত মলিন করে, কুমুদিনীকে তত মলিন করে না ॥১৯॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

সখ্যৌ। বিলোক্য সহর্ষমুত্থায়। স্বাগতং জধাসমীহিতফলস্য অবিলম্বিণো মণোরহস্স ? (১)। (ব)

শকু। উত্থাতুমিচ্ছতি। (ভ)

রাজা। অলমলমায়াসেন। (ম)

সন্দষ্টকুসুমশয়নান্যাশু বিমর্দ্দিতমৃণালবলয়ানি (২)।
গুরুপরিতাপানি ন তে গাত্রাণ্যুপচারমর্হন্তি ॥২০॥

(ব) স্বাগতং যথাসমীহিতফলস্য অবিলম্বিনো মনোরথস্য ?।

(ব) সখ্যাবিতি। সহর্ষং অনায়াসেন প্রার্থিতস্য লাভাৎ সহর্ষমিতি। ... সম্মানপ্রদর্শনার্থঞ্চ উত্থায়েতি। যথাসমীহিতং যথাভিলষিতং ফলং ... শকুন্তলাসঙ্গমাত্মকং যস্মাৎ তৎ তাদৃশং তস্য, অবিলম্বিনঃ প্রায়ং নানাবিলম্বেনোপস্থি... মনোরথস্য মনোরথবিষয়ীভূতস্য, ভবত ইত্যর্থঃ, স্বাগতং সুখেনাগমনং কিম্‌... কাকুবশাৎ প্রশ্নো ব্যজ্যতে।

(ভ) শকু ইতি। উত্থাতুমিচ্ছতি রাজ্ঞঃ সম্মানপ্রদর্শনার্থেত্যাশয়ঃ।

(ম) রাজেতি। অঙ্গসঞ্চালনাদিনা শকুন্তলায়াস্তামুত্থানেচ্ছামনুমায় ... মাস্থেতি বোধ্যম্। আয়াসেন উত্থানপরিশ্রমেণ। অলমলমিত্যত্যন্তনিষেধে দ্বিরুক্তি...

(ব) সখীদ্বয়। (রাজাকে দেখিয়া আনন্দের সহিত গাত্রো... করিয়া) যাহা হইতে অভীষ্ট ফল হইবে, অবিলম্বী সেই অভি... শুভাগমন ত ?।

(ভ) শকুন্তলা। (গাত্রোত্থান করিতে ইচ্ছা করিল।)

(ম) রাজা। পরিশ্রম করিবার প্রয়োজন নাই, পরিশ্রম ক... প্রয়োজন নাই।

(১) সখ্যৌ। সহর্ষম্। স্বাগতং অবিলম্বিণো মণোরহস্স।

(২) পাঠ ক্লান্তবিষমন্ত্রস্তরনীতি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। ससाध्वसमात्मगतम्। हिअअ! तधा उत्तम्मिअ दाणिं ण किम्पि पडिवज्जसि (१)। (य)

(य) हृदय! तथा उत्तम्य इदानीं न किमपि प्रतिपद्यसे।

उत्थानाकर्त्तव्यत्वे कारणमाह सन्दष्टेति। सन्दष्टं सम्यग् दष्टवस्तुवत् पार्श्व-परिवर्त्तनादिना विस्रस्तं कुसुमशयनं पुष्पशय्या यैस्तानि, अाश्च मुहुर्घर्षणात् शीघ्रमेव विमर्द्दितानि भ्रष्टानि मृणालवलयानि तापशान्त्यर्थं पूर्वं धृतानि मृणालकटकानि येषां तानि, अतएव गुरुर्महान् परितापः सर्वतः सन्तापो येषु तानि, ते तव गात्राणि अङ्गानि, न उपचारम् आचारम्, माननीयागन्तुकजनस्य सम्मानप्रदर्शनाय उत्थानव्यवहारमित्यर्थः, अर्हन्ति कर्त्तुं शक्नुवन्ति, असामर्थ्यात् अस्वास्थ्याधिक्यसम्भवाच्चा इति भावः।

अत्र उपचारानर्हत्वं प्रति गुरुपरितापत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्ग-मलङ्कारः। तथा सन्दष्टकुसुमशयनत्वादिलिङ्गेन शकुन्तलाङ्गेषु गुरुतापज्ञानादनुमानं नाम गर्भसन्धेरङ्गम्। यथा दर्पणे—"लिङ्गादूहोऽनुमानता।"

आर्य्या जातिः ॥२०॥

(य) शकु इति। ससाध्वसं सभयम्। सहसैव प्रार्थितस्यापि पुंसो दर्शने नारीणां भयन्तु स्वाभाविकम्। उत्तम्य उत्क्रान्तं भूत्वा राजार्थमेव अधीरीभूत्वेत्यर्थः, इदानीं प्रार्थितस्यैव तस्य राज्ञ उपस्थितिसमये, किमपि न प्रतिपद्यसे न कर्त्तव्यं निर्द्धारयसि। अतएव अकर्म्मण्यतायाः एव प्रमाणमिति भावः।

যাহার সঞ্চালনে পুষ্পশয্যা আলুলায়িত হইয়াছে এবং মৃণালবলয়-গুলি মর্দ্দিত হইয়াছে, বিশেষতঃ যাহাতে গুরুতর সন্তাপ অনুভূত হইতেছে, আপনার সেই অঙ্গগুলি লোকাচার পালন করিবার যোগ্য নহে ॥২০॥

(য) শকুন্তলা। (লজ্জার সহিত স্বগত) হৃদয়! সেইরূপ উতলা হইয়া এখন কোন কর্ত্তব্যই স্থির করিতেছ না।

(१) क्वचिदयं पाठो न दृश्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। इदो सिलादलेक्कदेसं अणुगेह्नदु महाभाओ (१)। (र)

शकु। किञ्चिदपसरति (२)। (ल)

राजा। उपविश्य। कच्चित् सखीं वो नातिबाधते शरीरसन्तापः? (३)। (व)

(र) इतः शिलातलैकदेशमनुगृह्णातु महाभागः।

(र) अनेति। इतः अस्मिन् पार्श्वे, शिलातलस्य प्रस्तरोपरिभागस्य एकदेशं शकुन्तला यस्मिन्नंशे शयिता तिष्ठति तद्भिन्नांशमित्यर्थः, अनुगृह्णातु उपवेशनेन कृपापात्रीकरोतु, महाभागो विशेषभाग्यशाली भवान्।

अहो! कामनहिमा, यत् स्वयं सिंहासनाद्युपवेशी राजा निरासनेन एकदेशे उपविशति।

(ल) शकु इति। अपसरति राज्ञ उपवेशनस्थानदानाय स्वस्थानात् किञ्चिदपसरतीत्याशयः।

(व) राजेति। वो युष्माकम्। नातिबाधते नातिशयेन पीड़यति। तत्र किञ्चिद्बाधत एवेत्यवश्यमवगतत्वात्, अतिपीड़नस्यैव जिज्ञासा उचितेति अतिशब्दः। कच्चित् किमित्यर्थः। "कच्चित् कामप्रवेदने" इत्यमरः।

(র) অনসূয়া। মহাশয় এই দিকে প্রস্তরখণ্ডের এক দেশে উপবেশন করিয়া ইহাকে অনুগৃহীত করুন।

(ল) শকুন্তলা। (একটু সরিল।)

(ব) রাজা। (উপবেশন করিয়া) শরীরের সন্তাপ, আপনাদের সখীকে বিশেষ কষ্ট দিতেছে না ত?।

(१)···देसं अलङ्करेउ वअस्सो।

(२) एष पाठः क्वचिन्नास्ति।

(३) अयं पाठोऽपि क्वचिन्न दृश्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियं । सस्मितम् । दाणिं लद्धोषधो उवसमं गमिस्सदि (१) । (अ)

शकु । सलज्जा तिष्ठति (२) । (ब)

प्रियं । महाभाअ ! दोसुम्पि वो अस्सोस्साणुराओ पच्चक्खो ; सहीसिणेहो उण मं पुणरुत्तवादिणीं करेदि (३) । (स)

(अ) इदानीं लब्धौषध उपशमं गमिष्यति ।

(ब) महाभाग ! द्वयोरपि युवयोः अन्योन्यानुरागः प्रत्यक्षः ; सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति ।

(अ) प्रियमिति । आत्मनो वक्तव्यार्थस्यैव कौतुकावहत्वात् सस्मितमिति बोध्यम् । लब्धम् औषधं येन सः, शरीरताप इति सम्बन्धः । तथा च शकुन्तलाया अस्य रोगस्य स्थानेनौषधमिति इदानीमपि उपशमस्याभावेऽपि भवतो लाभादचिरादेव उपशमं गमिष्यतीत्याशयः ।

अतएवात्र चित्रार्थप्रकाशनादक्षरसंघातो नाम नाट्यलक्षणम्—"वर्णनाक्षरसंघातश्चित्रार्थैरक्षरैर्मितैः" इति दर्पणलक्षणात् ।

(ब) शकु इति । आत्मनश्च तापः कामजनित एव, उपस्थितश्च राजा सुरतेनैव तस्य निवर्त्तक इति अपरिचितपूर्वस्य राज्ञः प्रत्यक्षमेव प्रियंवदया उक्तवाक्येन सूचितत्वात् शकुन्तला सलज्जा तिष्ठतीति बोध्यम् ।

(स) प्रियमिति । प्रत्यक्षः दृष्टिपातदेहावस्थादिदर्शनात् निःसन्देहमनुभूयमानः । पुनस्तथापि पुनरुक्तं यथा स्यात्तथा वदितुं शीलं यस्यास्ताम् । उक्तस्यार्थस्य पुनरुक्तिर्यथा निरर्था, तथा प्रत्यक्षीभूतस्यार्थस्य मया वाचा प्रकाशो निरर्थक एवेति भावः ।

(अ) প্রিয়ংবদা। (ঈষৎ হাস্য করিয়া) এখন ঔষধ পাওয়া গিয়াছে, সুতরাং নিবৃত্তি পাইবে।

(ব) শকুন্তলা। (লজ্জিত হইয়া রহিল।)

(१) अयं पाठश्च पुस्तकान्तरे न वर्त्तते । (२)···सलज्जं । (३)···सिणेहो मं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । भद्रे ! नैतत् परिहार्य्यम् । विवच्छितं ह्यन-
मनुतापं जनयति । (ह)

प्रियं । तेण हि सुणादु अज्जो (१) । (च)

राजा । अवहितोऽस्मि (२) । (क)

प्रियं । अस्समवासिणो जणस्स रसा अत्तिहरेण होद-
व्वं त्ति, णं एसो धम्मो (३) । (ख)

(च) तेन हि शृणोतु आर्य्यः ।

(ख) आश्रमवासिनो जनस्य राज्ञा आर्त्तिहरेण भवितव्यम् इति, नन्वेष धर्मः

(ह) राजेति । भद्रे ! साधुस्वभावे ! एतत् विवच्छितं वाक्यम्, न पुनः पुनरुक्ततुल्यतया निरर्थकत्वाशङ्कया न परित्याज्यम् । हि यस्मात्, विवच्छितं वक्तुमिच्छया आवितं वाक्यमित्यर्थः, अनुक्तं सत्, अनुतापं श्रुश्रूषोरन्तर्जनयति तस्योदासीनत्वप्रत्यायनात् विपक्षत्वसूचनाद्वेति भावः ।

(च) प्रियमिति । तेन हि भवतोऽप्यनुमोदितत्वेनैव हेतुना । आर्य्यो भवान्

(क) राजेति । अवहितोऽस्मि त्वदुक्तिं श्रोतुं कृतमनोयोगोऽस्मि ।

(স) প্রিয়ংবদা। মহাশয়! আপনাদের দুই জনেরই পর-
অনুরাগ প্রত্যক্ষ করিতেছি; তথাপি সখীর স্নেহই আমাকে পুন-
বাদিনী করিতেছে।

(হ) রাজা। ভদ্রে! তথাপি আপনি বক্তব্য বিষয় পরি-
করিবেন না। কারণ, যে বিষয়ে বলিবার ইচ্ছা প্রকাশ করা
তাহা না বলিলে শ্রোতার অনুতাপ জন্মায়।

(ক্ষ) প্রিয়ংবদা। তাহা হইলে, মহাশয় শ্রবণ করুন।

(१) (२) चिह्नितौ पाठौ क्वचिन्न दृश्येते ।

(३) आवण्णस्स विसअवासिणो अत्तिहरेण रण्णा होदव्वं त्ति एसो वो धम्मो।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। अस्मत्परं किन्तत् ? (१)। (ग)

प्रियं। तेण हि इअं णो पिअसही तुमं ज्जेव उद्दिसिअ भअवदा मअणेण इमं अवत्थन्तरं पाविदा, ता अरिहसि अब्भुववत्तीए जीविदं से अवलम्बइदुं (२)। (घ)

(घ) तेन हि इयं नः प्रियसखी त्वामेव उद्दिश्य भगवता मदनेन इदमवस्थान्तरं प्रापिता ; तदर्हसि अभ्युपपत्त्या जीवितमस्या अवलम्बयितुम्।

(ख) प्रियमिति। आर्त्तिहरेण पीड़ानाशकेन ; राज्ञः प्रजापालनस्य विहितत्वात् आश्रमवासिनोऽपि च प्रजारूपत्वादिति भावः। नन्वित्यवधारणे। एष धर्म्म इति विहितानुष्ठानादित्याशयः।

(ग) राजेति। तत् आश्रमवासिनो जनस्य आर्त्तिहरणौचित्यम्, अस्मत्परं मद्विषयं किम्, मया कस्य का आर्त्तिर्हरणीयेत्यर्थः।

(घ) प्रियमिति। तेन हि श्रूयतामिति शेषः। प्रियसखी शकुन्तला। उद्दिश्य लक्ष्यीकृत्य। अवस्थान्तरं विकारविशेषम्। अभ्युपपत्त्या अनुग्रहेण, जीवितं जीवनम् ; अवलम्बयितुं धारयितुम्।

"अभ्युपपत्तिरनुग्रहः" इत्यमरः।

(क) राजा। মন দিলাম।

(খ) প্রিয়ংবদা। রাজা, তপোবনবাসীর কষ্টনাশক হইবেন, ইহাই ধর্ম্ম।

(গ) রাজা। আমার পরে তাহার কি ?।

(ঘ) প্রিয়ংবদা। তবে শুনুন, ভগবান্ কামদেব, আপনাকে লক্ষ্য করিয়াই, আমাদের এই প্রিয়সখীকে এই অবস্থায় উপস্থাপিত করিয়াছেন ; সুতরাং আপনি অনুগ্রহ করিয়া, ইহার জীবন রক্ষা করিতে পারেন।

(१) नाम्रात् परम्। (२) भअवदा मअणेण धारविष्या।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। भद्रे! साधारणोऽयं प्रणयः। सर्वथा
गृहीतोऽस्मि। (ङ)

शकु। अनसूयामवलोक्य। हला! अलं वो अन्तेउरवि-
पज्जुस्सुएण राएसिणा उवरुद्धेण (१)। (च)

(च) हला! अलं वाम् अन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणा उपरुद्धेन।

(ङ) राजेति। अयं प्रणयः इयं याच्ञा, साधारण उभयोरेव ... तथा च यथा शकुन्तलाया जीवनं रक्षितुं भवत्या ममानुग्रहः प्रार्थ्यते; तथा ... स्वजीवनं रक्षितुं शकुन्तलाया अनुग्रहः प्रार्थ्यत इति भावः। अनुगृहीतोऽस्मि ... शकुन्तलासमागमसम्भवेन जीवनस्थितिसम्भवादित्याशयः, एतेनात्मनोऽपि शकुन्तला-सदृशी दशा व्यज्यते।

"प्रणयः प्रेम्णि याच्ञायाम्" इत्यादि हेमचन्द्रः।

(च) शकु इति। राज्ञा सह प्रियंवदाया एवालापकारित्वेन तस्या ... रोधौचित्येऽपि सा मुखरा दुर्निवारा चेति नानुरोधं रक्षिष्यतीति विभाव्य ... मेवानुरुणद्धि। राज्ञोपरोधवारणाय च अनसूयाया अनुरोधेन प्रियंवदाया ... सूचितः, उभयोस्तुल्यत्वादित्यवधेयम्।

वां युवयोः, अन्तःपुराणामन्तःपुरस्थरमणीनां विरहेण पर्य्युत्सुक ... दुत्कण्ठितत्वेन, राजर्षिणा उपरुद्धेन मत्समागमाय अनुरुद्धेन, अलम्, ... ईदृशस्य राज्ञो युवाभ्यां नानुरोधः करणीय इत्यर्थः, इतररमणीषु आसक्तिरिति ... रमणस्य कादाचित्कतया तज्जीवनस्यैव सर्वथा वैयर्थ्यावश्यम्भावादित्याशयः।

राज्ञो मनः परीक्षितुम् आत्मनि तस्य प्रतिज्ञाविशेषं प्रवर्त्तयितुं ... बोध्यम्।

(ঙ) রাজা। ভদ্রে! এই প্রার্থনা উভয়েরই সমান। ...
প্রকারে অনুগৃহীত হইলাম।

(१) प्रियंवदामवलोक्य। हला! किं अन्तेउरविरहपज्जुस्सुए ...
उवरोहेण।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। इदमनन्यपरायणमन्यथा
हृदयसन्निहिते! हृदयं मम।
यदि समर्थयसे मदिरेक्षणे!
मदनबाणहतोऽपि हतः पुनः (१) ॥२१॥

इदमिति। हृदये सन्निहिता विधार्येव सम्यगवस्थापिता तत्सम्बोधनम्। एतेनान्तःपुरविरहपर्य्युत्सुकत्वाभावः सूचितः। न अन्या रमणी परम् अयनमाश्रयो यस्य तत् तादृशम् अनन्यरमणीगतमित्यर्थः, इदं मम हृदयम्, यदि, अन्यथा अन्यरमणीपरायणत्वेन, समर्थयसे "अन्तःपुरविरहपर्य्युत्सुकेन" इत्यनेन उपपादयसि, तदा, मदिरे मत्तखञ्जनपक्षिणाविव ईक्षणे चक्षुषी यस्यास्तत्सम्बोधनम्। एतेन परमसुन्दरतया त्वय्येव गुरुतरा आसक्तिरिति व्यज्यते। मदनबाणेन हतोऽपि मारितोऽपि पुनर्हतः पुनस्तथा मारितः, प्रहृतस्य पुनः प्रहारवत् मदनबाणप्रहारपीड़ितस्य मे आशास्थानेन त्वया नैराश्योत्पादनेन महापीड़नादिति भावः।

अत्र अनन्यपरायणत्वं प्रति हृदयसन्निहिते इति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। तेन चात्महृदयस्य शकुन्तलैकतानत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। हृदयशब्दस्य द्विःपाठेऽपि उद्देश्यप्रतिनिर्द्देश्यविषयत्वान्न कथितपदतादोषः। यच्छब्देन तच्छब्दस्यैव यदीत्यनेन तदेत्यस्य नियमेनोपस्थापितत्वात् न न्यूनपदतादोषश्च। किन्तु हत इत्यस्य विशेष्यीभूतकर्म्मपदस्य अहमित्यस्यानुपादानात् न्यूनपदतादोषः, स च मदनबाणहतोऽस्मि' इति पाठेन समाधेयः। किन्तु बहुष्वेव पुस्तकेषु तत्पाठादर्शनात् नासौ धृतः।

द्रुतविलम्बितं वृत्तम्—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥२१॥

---

(চ) শকুন্তলা। (অনসূয়ার দিকে চাহিয়া) অনসূয়া! অন্তঃপুরের বিচ্ছেদে উৎকণ্ঠিত রাজর্ষির অনুরোধ করিবার প্রয়োজন নাই।

রাজা। হে হৃদয়বর্ত্তিনি! অনন্যপরায়ণ আমার এই হৃদয়কে

---

(१)···मदनबाणहतोऽस्मि हतः पुनः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। बहुवल्लहा क्खु राआणो सुणीअन्ति। ता
इअं णो पिअसही बन्धुअणसोअणीआ ण होदि, तथा
स्सदि (१)। (छ)

(छ) बहुवल्लभा: खलु राजान: श्रूयन्ते। तद्‌यथा इयं न: प्रियसखी
शोचनीया न भवति ; तथा करिष्यति।

(छ) "हला! अलं वः" इत्यादिना शकुन्तलावाक्येन संवृतवत्य
मनुवदन्ति अनेति। बह्व्यो वल्लभा भोग्यत्वेन प्रिया येषां ते। श्रूयन्ते
येति शेषः। आत्मना वनवासित्वेन प्रत्यक्षं राजव्यवहारादर्शनादित्या
तस्मात्। नः अस्माकम्, प्रियसखी शकुन्तला, बन्धुजनानाम् अस्मदादीनां,
अस्या एव दारुणदुःखश्रवणेन शोकविषया। करिष्यति भवानिति शेषः।
भवान् राजा, तेन च भवतोऽपि बह्व्यो वल्लभाः सन्ति ताश्च चारुतराः चतुरा
सम्भाव्यते ; इयं शकुन्तला तु वनवासित्वेन कुरूपा मुग्धा अशिक्षिता
गृहीतास्वादरातिशयेन वस्तुगत्या अस्यामवज्ञैव स्यात्। तेन
व्यर्थं भवितेति यथा तादृशं न भवति, भवता तथा कर्त्तव्यमिति
भावार्थश्च।

पूर्वशकुन्तलावाक्ये अत्र च अभिप्रेतादरसिद्ध्यै बहुविषयाणां कीर्त्तनात्
नाव्यलक्षणम्। यथा दर्पणे—

"बहूनां कीर्त्तनं सिद्धिरभिप्रेतार्थसिद्धये।"

যদি অন্যরূপ নিরূপণ কর, হে খঞ্জননয়নে! তাহা হইলে কা
হইয়াও আবার হত হইলাম ॥২১॥

(ছ) অনসূয়া। রাজাদের বহুতর প্রিয়তমা থাকে বলি
পাই; অতএব আমাদের এই প্রিয়সখী যাহাতে বন্ধুজনের
বিষয় না হন, তাহা করিবেন।

(१) वयस्य! बहु···।···तह णिव्वहेहि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । भद्रे ! किं बहुना ? । (ज)

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य नः ।
समुद्ररसना (१) चोर्वी सखी च युवयोरियम् ॥२२॥

(ज) राजेति । बहुना प्रचुरेण उक्तेनेति शेषः । बहुशब्दस्य संख्यावाचित्वे नित्यबहुवचनान्तत्वनियमः, प्रचुरार्थवाचित्वे तु सर्वाण्येव वचनानि स्युः विशेष्यानुसारित्वात् । तथा चान्यत्रापि प्रयोगः—"समायाते कान्ते कथमपि च कालेन बहुना" इति शृङ्गारतिलके । "किं बहुना यं कारवोऽपि विश्वकर्म्मेत्युपासते" इति न्यायकुसुमाञ्जलौ च ।

परीति । परिगृह्यन्त इति परिग्रहा भोग्यपरिणीताः साधारण्य एव, तासां बहुत्वेऽपि, नः अस्माकम्, कुलस्य वंशस्य, द्वे द्वौ परिग्रहावित्यर्थः, प्रतिष्ठे इति प्रकृतसमानार्थत्वात् द्वे इति स्त्रीत्वम् । प्रतिष्ठे गौरवे गौरवहेतुभूते भविष्यत इति शेषः । ते द्वे इत्याह समुद्रेति । समुद्र एव रसना काञ्ची यस्याः सा तादृशी, उर्वी पृथिवी च, इयं युवयोः सखी शकुन्तला च । अतः सत्यपि परिग्रहबहुत्वे युवयोरियं सख्येव तेषु सर्वथा विशेषादरणीया भविष्यतीति न कियानपि सन्देहो युष्माभिः कर्त्तव्य इति भावः ।

अत्र सखी प्रस्तुता उर्वी चाप्रस्तुता, अनयोः प्रतिष्ठापदाभिहितगौरवरूपैकगुणसम्बन्धाद्दीपकमलङ्कारः, उर्वीति लिङ्गसाम्येन उर्व्यां स्त्रीव्यवहारसमारोपात् समासोक्तिश्च; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः । न च समुद्रे रसनात्वारोपः शाब्दः उर्व्यां स्त्रीत्वारोपश्चार्थं इत्येकदेशविवर्त्तिरूपकमेवेति वाच्यम्, ईदृश एकमात्रशाब्दरूपणस्थले समासोक्तेरेव मीमांसितत्वात् । तच्च दर्पणे समासोक्तिप्रकरणे द्रष्टव्यम् । समुद्ररसनेति विशेषणेन उर्व्याः सम्पूर्णाया एव सूचनेन तत्राप्यादरातिशयो व्यज्यत इति नापुष्टार्थत्वदोषः ।

(জ) রাজা। ভদ্রে! অধিক বলিয়া কি হইবে।

(१) समुद्रवसना…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभे। णिव्वुद म्ह। (झ)

शकु। हर्षं सूचयति (१)। (ञ)

प्रियं। जनान्तिकम्। अणसूए! पेक्ख पेक्ख मेहवा
विअ गिम्हे मोरीं क्खणे क्खणे पच्चाअदजीविदं
सही (२)। (ट)

(झ) निर्वृते स्वः।

अत्र उर्वीसाम्येन शकुन्तलाया उत्कर्षाभिधानात् उदाहरणं नाम गर्भ
यथा दर्पणे—"उदाहरणमुत्कर्षयुक्तं वचनमुच्यते।"

दाक्षिण्यं नाम नाम्यलक्षणञ्च। यथा तत्रैव—

"दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्तनम्।"

"परिग्रहः कलत्रे च मूलस्वीकारयोरपि" इति शाश्वतः। "प्रतिष्ठा दो
इत्यादि हेमचन्द्रः ॥२२॥

(झ) उभे इति। निर्वृते सुस्थचित्ते, स्व आवामिति शेषः; सत्यवादि
शकुन्तलायामादरातिशयकरणसूचनेन तद्विषये उद्वेगाभावादिति भावः।

"सुस्थितत्वे च निर्वृतिः" इति त्रिकाण्डशेषः।

(ञ) शकु इति। हर्षं सूचयति, आत्मन आशापूरणसम्भवात् मु
दिनेत्याशयः।

বহুতর স্ত্রী থাকিলেও, আমার বংশের দুইটী মাত্র গৌর
হইবে, এক সমুদ্রবেষ্টিত পৃথিবী, আর আপনাদের এই সখী ॥২২

(ঝ) সখীদ্বয়। সুস্থ হইলাম।

(ঞ) শকুন্তলা। (হর্ষ প্রকাশ করিল।)

(१) अयं पाठः क्वचिन्नास्ति।

(२) इत्यादि मए कीलसि इत्यन्तः पाठः क्वचिन्नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । हला ! मरिसावेध लोअपालं, जं अह्मेहिं विस्सद्धपलाविणीहिं उवआरादिक्कमेण भणिदं । (ठ)

सख्यौ । सस्मितम् । जेण तं मन्तिदं सो ज्जेव मरिसावेदु, अस्सस्स को अच्चओ ? । (ड)

---

(ट) अनसूये ! प्रेचस्व प्रेचस्व मेघवाताहतामिव ग्रीष्मे मयूरीं चणे चणे प्रत्यागतजीवितां प्रियसखीम् ।

(ठ) हला ! मर्षयत लोकपालम्, यदस्माभिर्विस्रब्धप्रलापिनीभिः उपचारातिक्रमेण भणितम् ।

---

(ट) प्रियमिति । ग्रीष्मकाले मेघवातेन मेघागमनकालीनवायुना आहतां स्पृष्टाम्, मयूरीमिव, चणे चणे परपरच्चणे, प्रत्यागतजीवितां प्रत्यावृत्तप्राणाम् । तथा च यथा मयूरी ग्रीष्मतापेन गतप्रायप्राणा सती प्रियतममेघवायुना पुनः प्रत्यावृत्तप्राणा भवति ; तथा इयमपि निकामकामतप्ता राज्ञ आश्वासेन सुरतसुखाशया च क्रमेणोत्फुल्ला जायते इति भावः ।

(ठ) शकु इति । लोकपालं नृपं दुष्मन्तम्, मर्षयत चमयत स्वापराधमार्जनं आचरतामित्यर्थः । नन्वपराधः कः, यत् मर्षयाव इत्याह यदिति । यत् यस्मात्, विस्रब्धप्रलापिनीभिः राज्ञि विश्वासेन अनर्थकस्वच्छन्दवादिनीभिः, अस्माभिः, उपचारातिक्रमेण कर्त्तव्य-सम्मान-व्यवहारपरित्यागेन भणितमुक्तम् । तथा चेदृशव्यवहारेण योऽपराधः सञ्जातः, तं मर्षयतमिति भावः ।

---

(ট) প্রিয়ংবদা । (অনসূয়ার প্রতি চুপি চুপি) অনসূয়া ! দেখ দেখ, গ্রীষ্মকালে মেঘবায়ুসংস্পৃষ্ট ময়ূরীর ন্যায় ক্ষণে ক্ষণে প্রিয়সখী শকুন্তলার জীবন ফিরিয়া আসিতেছে ।

(ঠ) শকুন্তলা । ওলো ! রাজার নিকট অপরাধের ক্ষমা প্রার্থনা কর ; যে হেতু আমরা ইচ্ছামত আলাপ করিতে থাকিয়া শিষ্টাচার লঙ্ঘন করিয়া অনেক কথা বলিয়াছি ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । अरिहदि क्खु महाराओ इमं विसोढुं । परि-
वा ण किं को मन्तेदि । (ढ)

राजा । सस्मितम् । (ण)

अपराधमिमं ततः सहिष्ये
यदि रम्भोरु ! तवाङ्गसङ्गमृष्टे ।

---

(ड) येन तन्मन्त्रितं स एव मर्षयतु, अन्यस्य कः प्रत्ययः ।

(ढ) अर्हति खलु महाराज इमं विषोढुम् । परीचं वा न कि मन्त्रयति ।

---

(ड) सख्याविति । सोल्लुण्ठनवक्तव्यत्वादेव सस्मितमिति । येन सखे उपचारातिक्रमेण मन्त्रितम् उक्तम्, स एव जनः, मर्षयतु तमपराधं मार्जयतु । अन्यजनस्य, कः प्रत्ययो दोषः । तथा च त्वयैव अविश्वासवशात् "ममं वो वि विरहपर्युत्सुक एष राजर्षिः उपरुन्धेय" इत्यभिहितमित्यपराधः कृतः, अतस्त्वया मर्षणमुचितम्, न पुनरावयोरिति भावः ।

(ढ) शकु इति । कौतुकेनोक्ताया अपि सख्युक्तेरौचित्यं समाप्य अर्हतीति । इमम् उपचारातिक्रमेण ममोक्तिजनितमपराधम्, विषोढुं तथाहि को जनः, परोक्षमसमक्षम्, किं न मन्त्रयति ब्रवीति । तथा च दया परोक्षं साधारणजनकृतमपवादं तुच्छजनकृतत्वबुद्ध्या विषोढुमर्हतीत्याशयः ।

अतएवात्र परिहारो नाम नाट्यालङ्कारः । तथा च दर्पणे—

"परिहार इति प्रोक्तः कृतानुचितमार्जनम् ।"

(ण) राजेति । स्वयं सामोदकौतुकोक्तेरभिधास्यमानत्वात् सस्मितमिति ।

---

(ড) সখীদ্বয় । (ঈষৎ হাস্য করিয়া) যে শিষ্টাচার লঙ্ঘন বলিয়াছে, সে-ই ক্ষমা প্রার্থনা করুক ; অন্যের দোষ কি ?।

(ঢ) শকুন্তলা । মহারাজ এই অপরাধ ক্ষমা করুন। পরোক্ষে কে কি না বলে ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुसुमास्तरणे क्लमापहेऽत्र
स्वजनत्वादनुमन्यसेऽवकाशम् ॥२३॥

प्रिय'। सोपहासम्। ण' एत्तिकेण उण तुट्ठो भवि-
स्सदि ?। (त)

(त) ननु एतावता पुनस्तुष्टो भविष्यति ?।

अपेति। रम्भे रम्भास्तम्भाविव ऊरू यस्यास्तत्सम्बोधनम्। यदि तव अङ्गानां सङ्गेन संयोगेन स्पृष्टे मार्जिते परिशोधिते इत्यर्थः, अतएव क्लमापहे कामतापनाशके, सुरतस्य अचिरभावित्वादिति भावः, अत्र अस्मिन्, कुसुमास्तरणे पुष्पशय्यायाम्, स्वजनत्वात् आत्मीयत्वज्ञानात्, अवकाशं मम अवस्थितिस्थानम्, अनुमन्यसे दातुमनुमतिं करोषि, तत्तदा, इमम् उपचारातिक्रमेणोक्तिजनितम् अपराधम्, सहिष्ये क्षमिष्ये। इतरथा नेत्यभिप्रायः।

अत्र कामक्लमापहत्वं प्रति अङ्गसङ्गस्पृष्टपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। तथा अनेन रतिप्रार्थनासूचनात् प्रार्थना नाम गर्भसन्ध्यङ्गम्। यथा दर्पणे—

"रतिहर्षोत्सवानान्तु प्रार्थनं प्रार्थना भवेत्।"

एवं मनोरथो नाम नाट्यलक्षणञ्च। तथा तत्रैव—

"मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत्।"

उपवृत्तं नाम वृत्तम्—"उपवृत्तमिदं तदाऽपरञ्चेत् गुरुवर्णः खलु सुन्दरीपदान्ते" इति लक्षणात् ॥२३॥

(व) प्रियमिति। भगिनीपतिवत् सख्याः पतित्वादुपहासो न दोषाय। नन्वित्यव-

(ণ) রাজা। (ঈষৎ হাস্য করিয়া) হে রম্ভোরু! তোমার অঙ্গসংসর্গে পরিশোধিত, কামসন্তাপনাশক এই পুষ্পশয্যাতে যদি আপনার জন বলিয়া একটু স্থান দিবার অনুমতি কর; তবে এই অপরাধ ক্ষমা করিতে পারি ॥২৩॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। सरोषमिव। विरम विरम दुव्विणीदे! एदावत्थं गदाए मए कीलसि। (थ)

अन। बहिः सदृष्टिक्षेपम्। पिअंवदे! एस तवस्सि पोदओ इदो तदो दिस्सदिट्ठी णूणं मादरं पव्भट्टं अण्णे ता संजोजेमि णं (१)। (द)

---

(थ) विरम विरम दुर्विनीते! एतावदवस्थां गतया मया क्रीड़सि।

धारयं। तथा च एतावता एतन्मात्रेण केवलावकाशदानानुमतिमात्रेण भविष्यति भवानिति शेषः। अत्र काकुस्वरेण प्रश्नो व्यज्यते। सुतरां नापेक्षिष्यते किमित्याशयः। अतएव चोपहासो बोध्यः।

ईदृशालापक्रियाकलापैरनसूयापेक्षया प्रियंवदैव मुखरतरा चतुरतरा चेति समालोचनीयम्।

(थ) शकु इति। सरोषमिवेति इवशब्देन वस्तुतो न सरोषम्, किन्तु भाणमात्रम्, ईदृशालापश्रवणस्याभिप्रेतत्वादिति व्यज्यते। दुर्विनीते! ईदृ यथावस्थव्यवहारानर्हत्वादित्याशयः। एतावती इयदधिका नितान्तपीड़ित अवस्था दशा चेति ताम्, गतया प्राप्तया मया कारणेन, क्रीड़सि खेलसि। स्वभावत एव पीड़ाक्लिष्टाहं तवेदृशालापेन पुनर्महान्तं क्लेशमनुभवामीति तवे चितमिति भावः।

---

(त) প্রিয়ংবদা। (উপহাসের সহিত) এইটুকু মাত্রে সন্তুষ্ট হইবেন?।

(থ) শকুন্তলা। (ক্রোধের সহিতই যেন) দুর্বিনীতা! হও, বিরত হও। আমি এইরূপ অবস্থায় উপনীত হইয়াছি; আমাদ্বারা খেলা করিতেছ!।

---

(१) प्रियंवदा। सदृष्टिक्षेपम्। अणसूए! जह एसो इदो दिविसि मअपोअओ मादरं अण्णेसइ, एहि संजोएम णं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियं । हला ! चवलो क्खु एसो ; ण एणं संजोजइदुं एआइणी पारेसि, ता अहम्मि सहाअत्तणं करिस्सं । इत्युभे प्रस्थिते (१)। (ध)

(द) प्रियंवदे ! एष तपस्विमृगपोतकः इतस्ततो दत्तदृष्टिः नूनं मातरं प्रभ्रष्टामन्विष्यति, तत् संयोजयामि एनम् ।

(ध) हला ! चपलः खल्वेषः ; न एनं संयोजयितुमेकाकिनी पारयसि, तदहमपि सहायत्वं करिष्यामि ।

---

(द) अनेति । वहिर्दृष्टिक्षेपाभावे मृगपोतावस्थादर्शनासम्भवात् वहिःसदृष्टिक्षेपमित्युक्तम् । तपस्वी क्षुद्रत्वाद्दयायोग्यः मृगपोतकः क्षुद्रो हरिणशिशुः । नूनं निश्चितम् । प्रभ्रष्टाम् आत्मनो विच्युतां दूरं गतामित्यर्थः । एनं मृगपोतकम्, संयोजयामि मात्रा सहेति शेषः ।

"तपस्वी तापसे चानुकम्पार्हे च" इति विश्वः । पोतक इत्यनुकम्पायां कप्रत्ययः ।

(ध) प्रियमिति । एष मृगपोतकः, चपलः अस्थिरः । अतएव एनं मृगपोतकम् । पारयसि शक्नोषीत्यर्थः, तयोपस्थितिमात्रमेव वेगेनान्यत्र गमनसम्भवादिति भावः । सहायत्वं मृगपोतधारणे तव साहाय्यम् । प्रस्थिते इत्यादिकर्म्मणि क्तः । तेन प्रस्थातुमारभेते इत्यर्थः परत्र निष्क्रान्ते इति पुनर्दर्शनात् ।

अत्र वस्तुतो मृगपोतस्य संयोजनापेक्षा नानयोरासीत्, अपि तु शकुन्तलया सह राज्ञो रमणसम्पादनाय तत्स्थानस्य निर्ज्जनत्वं सम्पादयितुमनयोः प्रस्थानमिति बोध्यम् । अतएव पूर्ववाक्यादारभ्य इत्यन्तं अधिबलं नाम गर्भसन्धेरङ्गम् । तथा च दर्पणे—

"अधिबलमभिसन्धिश्छलेन यः ।"

---

(দ) অনসূয়া। (বাহিরে দৃষ্টিক্ষেপের সহিত) প্রিয়ংবদা! তপস্বীদিগের এই হরিণশাবকটী এদিক্ সেদিক্ দৃষ্টিক্ষেপ করিতেছে; সুতরাং নিশ্চয়ই দূরগত মাতাকে অন্বেষণ করিতেছে; অতএব আমি উহাকে সংযোজিত করি।

---

(१) क्वचिदयं पाठो नास्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

শকু । হলা ! ইদো অস্সদো ণ বো গন্তুং অণুমস্সে, অসহাইণী ম্হি (১) । (ন)

উভে । সস্মিতম্ । তুমং দাব অসহাইণী, জাএ পহুবীএ সমীবে বট্টদি (২) । ইতি নিষ্ক্রান্তে । (প)

(ন) হলা ! ইতঃ অন্যতো ন বাং গন্তুমনুমন্যে ; যত অসহায়িন্যস্মি।

(প) ত্বং তাবদসহায়িনী, যস্যাঃ পৃথিবীনাথঃ সমীপে বর্ত্ততে ।

---

অহো ! মহাকবিশিরোমণিং কালিদাসমন্তরেণ ঈদৃশী সম্ভবপরা পরমরমণীয়া চ যোজনা অন্যেষামসম্ভবৈবেতি সমালোচয়ন্তি কাব্যরসিকাঃ ।

(ন) শকু ইতি । অন্যতঃ অন্যস্মিন্ স্থানে । "সর্ববিভক্তিভ্যস্তস্" ইতি তস্ । সহায়ঃ অস্যা অস্তীতি সহায়িনী ন সহায়িনী অসহায়িনী । ঈদৃশাবস্থায়ামসহায়ভাবেনাবস্থানমযুক্তমিত্যাশয়ঃ ।

(প) উভে ইতি । প্রত্যক্ষমেবালোকবাদিত্বাদুপহাসেন স্মিতমিতি বোধ্যম্ । ত্বমসহায়িনীতি সোল্লুণ্ঠনোক্তিঃ । পৃথিবীনাথো রাজা দুষ্মন্তঃ, যস্যাঃ সমীপে ইত্যর্থঃ । তথা চ সমীপ এব রাজ্ঞো বর্ত্তমানত্বাৎ ত্বং প্রধানতমসহায়বত্যেবেতি যদসহায়িনীত্যুক্তম্, তদলীকমেবেতি ভাবঃ ।

---

(ধ) প্রিয়ংবদা । ওলো ! এ, বড়ই চঞ্চল ; সুতরাং একলা উহাকে সংযোজিত করিতে পারিবে না ; অতএব আমি তোমার সহায়তা করি । ( এই বলিয়া দুই জনেই চলিল । )

(ন) শকুন্তলা । ওলো ! আমি তোমাদিগকে এখান হইতে অন্য জায়গায় যাইতে অনুমতি দিতেছি না । যে হেতু আমি অসহায় রহিয়াছি ।

---

(১) হলা ! অসরণাম্মি অসহরা বো আপচ্ছেভ ।

(২) পুহবীএ জো সরণং সো তুহ সমীবে বট্টই ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। कधं गदाओ ज्जेव पिअसहीओ (१)। (फ)

राजा। सुन्दरि। अलमावेगेन ; नन्वयमाराधयिता जनस्ते सखीभूमौ वर्त्तते। तदुच्यताम्—(२) (ब)

किं शीकरैः क्लमविमर्द्दिभिरार्द्रवातं
सञ्चालयामि नलिनीदललतालवृन्तम्।
अङ्के निधाय चरणावुत पद्मताम्रौ
संवाहयामि करभोरु! यथासुखं ते (३) ॥२४॥

(फ) कथं गते एव प्रियसख्यौ।

(फ) शकु इति। कथंशब्दः सम्भ्रमे। "कथं प्रश्ने सम्भ्रमे च प्रकारार्थे च सम्भवे" इति विश्वः। सम्भ्रमस्त्वरा व्यस्ततेति यावत्।

(ब) राजेति। आवेगेन त्वरया सख्योः प्रस्थानेन परिचर्य्याया असम्भवाशङ्काजनितव्यस्ततयेत्यर्थः। नन्वित्यनुनये। अयं मत्स्वरूपः, आराधयिता परिचर्य्यया सन्तोषयिता। सखीभूमौ सखीस्थाने। तथा चाहमेव ते यथेच्छं परिचर्य्यां करोमीति नास्ति किञ्चिदावेगकारणमिति भावः। तत् तस्मात्, उच्यतां वक्ष्यमाणयोः श्लोकार्द्धयोः कतरं कार्यं करोमीति कथ्यताम्।

(প) সখীদ্বয়। (ঈষৎ হাস্যের সহিত) তুমি হইলে অসহায়িনী, যাহার নিকট স্বয়ং পৃথিবীশ্বর রহিয়াছেন। (এই বলিয়া চলিয়া গেল।)

(ফ) শকুন্তলা। প্রিয়সখীরা যে গেলই।

(ব) রাজা। সুন্দরি! ব্যস্ততার প্রয়োজন নাই; যে হেতু তোমার পরিচর্য্যাকারী লোক এই, সখীর জায়গায়ই রহিয়াছে। অতএব বল—

(১) কহং গতাওঁ এব্ব। (২) জনস্তব সমীপে বর্ত্ততে।
(৩) কিং শীতলৈঃ ক্লমবিনোদিভিরার্দ্রবাতান্ সঞ্চারয়ামি নলিনীদলতালবৃন্তৈঃ। অঙ্কে নিধায় করভোরু! যথাসুখং তে সংবাহয়ামি চরণাবুত পদ্মতাম্রৌ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । ण माणणीएसुं जणेसुं अत्ताणं अवराहइस्सं
इत्यवस्थासदृशमुत्थाय प्रस्थातुमिच्छति (१) । (भ)

किमिति । करभो सखिवन्नाद्याकनिष्ठाङ्गुलिकरवहिर्देशाविव सच्च ...
सम्बोधनम् । क्लमं शरीरसन्तापं विमर्द्दयितुं विनाशयितुं शीलं येषां तैः ...
र्जलबिन्दुभिः, आर्द्रं आर्द्रवत् शीतलः वातो वायुर्यस्य तत् तादृशम्, ...
पद्मलतापत्रमिव तालवृन्तं व्यजनम्, सञ्चालयामि आन्दोलयामि किम्? । ...
पद्मवत् ताम्रौ ताम्रवर्णौ, ते तव चरणौ, अङ्के मदीये क्रोड़े, निधाय ...
सुखमनतिक्रम्येति यथासुखं येन प्रकारेण तव सुखं स्यात् तथेत्यर्थः, ...
संमर्द्दयामि । अतो मयैव तव परिचर्य्याकरणात् सख्योरनुपस्थितावपि न ते ...
दसुविधेति न तदर्थमावेगः करणीय इति भावः ।

अत्र करभोरु पद्मताम्राविति लुप्तोपमाद्वयस्य परस्परनिरपेक्षतया संसृष्टिः । ...
वत्तास्तया परमसुन्दरत्वेन चरणयोरङ्के निधाने न विरक्तिः, अपि तु ...
एवेति द्योतनार्थं पद्मताम्राविति विशेषणम्, तेन नापुष्टार्थत्वदोषः । तथा ...
शकुन्तलास्पर्शार्थम् अर्थद्वयप्रतिपादनात् माला नाम नाट्यलक्षणम् । यथा दर्पणे

"माला स्यादयदभीष्टार्थं नैकार्थप्रतिपादनम् ।"

नित्यसमासवादिमते डित्थादिवत् व्यजनार्थे तालवृन्तमित्येक एव ...
पुनस्तालस्य वृन्तं तालवृन्तमित्यवयवार्थापेक्षा । तेन नलिनीदलरूपं तालवृन्तं ...
काचिदनुपपत्तिः । अनित्यसमासवादिमते तु अवयवार्थसत्त्वात् स्वर्णस्य ...
इत्यादिवत् सामानाधिकरण्यानुपपत्तिरेवेति ध्येयम् ।

वसन्ततिलका वृत्तम् ॥२४॥

হে করভোরু! ক্লান্তিনাশক জলবিন্দুদ্বারা যাহার বায়ু ...
সেই পদ্মপত্রের ব্যজন সঞ্চালন করিব কি? না, পদ্মের ন্যায় ...
চরণযুগল ক্রোড়ে স্থাপন করিয়া তোমার সুখ অনুসারে ...
করিব? ॥২৪॥

(१) क्वचित् जनेषु इति नास्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। अवष्टभ्य। सुन्दरि! अपरिनिर्वाणो दिवसः, इयञ्च ते शरीरावस्था (१)। (म)

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम्।
कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः (२) ॥२५॥

इति बलान्निवारयति (३)। (य)

(भ) न माननीयेषु जनेषु आत्मानमपराधयिष्यामि।

---

(भ) शकु इति। माननीयेषु पूजनीयेषु। अपराधयिष्यामि चरणसंवाहनेन अपराद्धं करिष्यामि। तथा च राजतया प्रतिपालकत्वात् भवान् मम पूजनीय एव, अतएव च भवता द्वारा चरणसंवाहने अपराध एव भवेदिति न तत्सम्मतिं दातुमर्हामीति भावः। अवस्थासदृशं निजदुर्बलदशानुरूपं कष्टेन स्वैरं स्वैरमित्यर्थः।

(म) राजेति। अवष्टभ्य आश्रित्य शकुन्तलां धृत्वेत्यर्थः। अवपूर्वस्य स्तन्भेः "अवादौजि'त्यनिकटाश्रयेषु" इति षत्वम्। अपरिनिर्वाणः इदानीमपि अनवसितः। अतएव प्रखरातप इत्याशयः। इयञ्च दृश्यमाना अत्यन्तक्लान्तरूपेत्यर्थः।

ततः किमित्याह उत्सृज्येति। नलिनीदलेन पद्मलतापत्रेण कल्पितं रचितं स्तनयोरावरणं तापशान्त्यर्थमाच्छादनं यस्याः सा तादृशी त्वम्, कुसुमशयनं पुष्पशय्याम्, उत्सृज्य विहाय, परिबाधया विशेषपीड़या कोमलैः कोमलत्वेन दुर्बलीभूतैः अङ्गैः

---

(ভ) শকুন্তলা। আমি পূজনীয় লোকের নিকটে আপনাকে অপরাধী করিতে পারিব না। (এই বলিয়া অবস্থানুসারে চলিয়া যাইতে ইচ্ছা করিল।)

(ম) রাজা। (শকুন্তলাকে ধরিয়া) সুন্দরি! এখনও দিনের অবসান হয় নাই; এদিকে তোমার শরীরের অবস্থাও এই।

---

(१) अनिर्वाणः…समवस्था। (२)…वरणम्…पेलवैः।
(३) बलादेनां निवर्त्तयति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

শকু। মুঞ্চ মুঞ্চ মং ; ণ ক্খু অত্তণো পহবামি। অ
সহীমেত্তসরণা কিং দাণিং এত্থ করিস্সং (১)। (র)

(র) মুঞ্চ মুঞ্চ মাম্, ন খলু আত্মনঃ প্রভবামি ; অথবা সখী
কিমিদানীমত্র করিষ্যামি।

চরণাদ্যবয়বৈঃ, আতপে রবিকিরণতাপে, কথং গমিষ্যসি, সামর্থ্যাভাবাৎ
নেত্যর্থঃ। অতএবাত্রৈব অবতিষ্ঠস্বেতি ভাবঃ।

অত্র অন্যত্র গমনাসম্ভবং প্রতি পরিবাধাক্ষীণত্বাঙ্গত্বমেব হেতুরিতি পদার্থ
কাব্যলিঙ্গং তদুত্থাপিতা চার্থাপত্তিরিত্যনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। হেতুর্না
লক্ষণঞ্চ—"হেতুর্বাক্যং সমাসীনমিষ্টকৃদ্বৈতুদর্শনাৎ" ইতি দর্পণলক্ষণাৎ।

আর্য্যা জাতিঃ ॥২৫॥

(য) ইতীতি। নিবারয়তি ধৃত্বা শকুন্তলামিতি শেষঃ।

(র) শকু ইতি। প্রভবামি প্রভুর্ভবামি। তথা চ পরাধীনতয়া আত্মনঃ
প্রভুত্বাভাবাৎ ন স্বত এব তবাভিপ্রায়ং পূরয়িতুমর্হামীতি ভাবঃ। নতু
মদনলেখনপর্য্যন্তানুষ্ঠানমিত্যাহ অথবেতি। সখীমাত্রমেব শরণং নিয়
যস্যাঃ সা অহম্, অত্র সখ্যোরনুপস্থিতৌ, কিং করিষ্যামি প্রস্থানং বিনেত্যর্থঃ।
চ দৈবেনাহমস্বাধীনং কৃতা, তত্র চ কথঞ্চিৎ প্রযোজিকয়োঃ সখ্যোরপ্যনুপস্থিতৌ
তব মনোরথং ন পূরয়িতুমর্হামীতি প্রস্থানমেব শ্রেয় ইত্যাশয়ঃ।

সুতরাং পদ্মপত্রের দ্বারা তোমার স্তনযুগলের আবরণ করা হই
এই অবস্থায় পুষ্পশয্যা পরিত্যাগ করিয়া, পীড়াদুর্ব্বল দেহে তু
করিয়া রৌদ্রে গমন করিবে ॥২৫॥

(য) (এই বলিয়া বলপূর্ব্বক নিবৃত্ত করিলেন।)

(র) শকুন্তলা। ছাড়ুন ছাড়ুন আমাকে ; আমি নিজে
নহি। অথবা সখীরাই আমার আশ্রয় ; সুতরাং এখন আমি কি

(১) ইমং পাঠমারভ্য ন কথমাত্মন ইত্যন্তঃ পাঠঃ ক্বচিন্নাস্তি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। धिग् व्रीड़ितोऽस्मि। (ल)

शकु। ण क्खु अहं महाराअं भणामि, दैव्वं उवालहामि। (व)

राजा। अनुकूलकारि दैवं कथमुपालभ्यते। (श)

शकु। कधं दाणिं ण उवालहिस्सं, जं मं अत्तणो अणोसं कदुअ परगुणेहिं लोहावेदि। (ष)

(व) न खलु अहं महाराजं भणामि, दैवमुपालभे।

(ष) कथमिदानीं न उपालप्स्ये, यन्मामात्मनः अनीशां कृत्वा परगुणैर्लोभयति।

(ल) राजेति। धिगित्यात्मनिन्दायाम्। तथा च विफलमनोरथत्वादात्मानं निन्दामीत्यभिप्रायः। व्रीड़ितोऽस्मि लज्जापितोऽस्मि, शकुन्तलया भाङ्गय प्रत्याख्यानादिति भावः।

अत्र आत्मनोऽधिक्षेपकरणात् क्षोभो नाम नाट्यालङ्कारः। यथा दर्पणे—
"अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु।"

(व) शकु इति। महाराजं भवन्तमुद्दिश्येत्यर्थः। उपालभे तिरस्करोमि दैवेन आत्मन्यपि अनीशीकृतत्वादित्याशयः।

(श) राजेति। अनुकूलं स्वपरसाधारणस्यैव सुखकरं रूपगुणादिकं करोतीति तत्, दैवमदृष्टम्। तथा च उपकारिणि उपालम्भो नोचित इत्यभिप्रायः।

(ष) शकु इति। अनीशामप्रभुम्। लोभयति तत्रैव परस्मिन् लोभं जनयति। तथा च स्वतन्त्रत्वे लोभे सति तदिच्छापूरणसम्भवात् स लोभः सुखकर एव; अस्वतन्त्रत्वे

(ल) রাজা। ধিক্, আমাকে লজ্জিত করিল।

(ব) শকুন্তলা। আমি মহারাজকে বলিতেছি না, অদৃষ্টের নিন্দা করিতেছি।

(শ) রাজা। অদৃষ্ট তোমার অনুকূল কার্য্য করিতেছে, অতএব তাহাকে নিন্দা করিতেছ কেন।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। स्वगतम्।

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः
काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने।
आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वात्
आबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्य्यः ॥२६॥

च लोभाभावे उपद्रवाभावात् सुस्थतैव स्यात्, किन्तु दैवेनाहम् अस्वतन्त्रा कृ... लुब्धा च कृता; तेन च लोभपूरणासामर्थ्यात् केवलां यातनामेवानुभवामीति दैवे... कारणमिति भावः।

शकुन्तलाया अवस्थामवलोक्य राजा स्वगतमालोचयति अपीति। महति औ... रन्तुमाग्रहे सत्यपि, दयितस्य वल्लभपुरुषस्य प्रार्थनासु रमणयाच्ञासु; प्रतीपाः प्रति... व्यतिकरसुखं सङ्गमसुखम्, काङ्क्षन्त्योऽपि अभिलषन्त्योऽपि, स्वाङ्गदाने स्व... रमणसाधनीभूताङ्गनियोजने, कातरा असमर्था इत्यर्थः, क्षिप्तः रमणं विना यापि... कालो याभिस्ताः, कुमार्य्यः कन्याः, लब्धान्तरत्वात् प्राप्तावकाशत्वात् मदनेनैव ... कामेनैव, न खलु आबाध्यन्ते परिपीड्यन्ते, अपि तु मनसिजं तं मदनमपि, ... तस्य चरितार्थतायाः अकरणात् परिपीडयन्ति, ताः कुमार्य्य एवेति शेषः। ... शकुन्तलाया मदनलेखनादिदर्शनात् महदौत्सुक्यमस्तीति प्रतीयते, अथ ... प्रार्थनायामिदानीं प्रतीपा जाता, तथा मदनलेखनादिदर्शनात् मत्सङ्गमसुखं ... त्यवगम्यते, अथ च स्वाङ्गनियोगे कातरा भूता, अतएवैनामिदानीं मदनः परि... त्येवेति भावः।

अतएवात्र अप्रस्तुतकुमारीसामान्याभिधानात् प्रस्तुतशकुन्तलारूपकुमारीविशेष... रप्रस्तुतप्रशंसालङ्कारः, कारणाभावेऽपि प्रतीपत्वरूपकार्य्योत्पत्तेः किं विभाव... औत्सुक्यरूपे कारणे सत्यपि दयितप्रार्थनानुकूल्यरूपकार्य्यानुत्पत्तेर्विशेषोक्तिः...

(ষ) শকুন্তলা। কেন এখন নিন্দা করিব না; যে ... আপনার উপরে পর্য্যন্ত স্বাধীন না করিয়া, পরের গুণে লুব্ধ করিয়া...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । गच्छत्येव । (स)

राजा । न कथमात्मनः प्रियं करिष्ये । उपसृत्य पटान्तमवलम्बते । (ह)

सन्देहसङ्करः द्वितीयपादेऽपि तथैव सङ्करः, उभाभ्यां कुमारीमदनाभ्यामेकाबाधनक्रियाकरणाद्दीपकालङ्कारः, तथा मनसिजस्य आबाधनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्येतेषां परस्परनिरपेक्षतया संसृष्टिः ।

एवम् आबाध्यन्त इति कर्म्मप्रत्ययेन प्रक्रम्य आबाधन्त इति कर्त्तृप्रत्ययप्रयोगादेकः प्रत्ययविषयो भग्नप्रक्रमतादोषः, मदनेन इत्यभिधाय पुनर्मनसिजमित्यभिधानादपरस्य प्रकृतिविषयो भग्नप्रक्रमतादोषः । अनयोः समाधानाय श्लोक एवं पठनीयः—

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपां
काङ्क्षन्तीञ्च व्यतिकरसुखं कातरां स्वाङ्गदाने ।
कामी मारं न खलु समयं प्राप्य क्लिश्नाति कन्यां
क्लिश्नात्येषा तमपि विकलं क्षिप्तकाला स्वकार्य्ये ॥

"व्यतिकरः समाख्यातो व्यसनव्यतिषङ्गयोः" इति विश्वः ।

मन्दाक्रान्ता वृत्तम् ॥२६॥

(स) शकु इति । गच्छत्येव न पुनर्दुष्मन्तानुरोधं रक्षतीत्येवमव्ययार्थः ।

(ह) राजेति । प्रियं प्रीतिकरं रमणकार्य्यम्, कथं न करिष्ये, अपि तु बलादपि करिष्य एव, बाधाभावादिति भावः । पटान्तं वस्त्राञ्चलम् ।

---

রাজা। (স্বগত) অত্যন্ত ইচ্ছা থাকিলেও, প্রিয়তমের প্রার্থনায় প্রতিকূল এবং সম্মেলনসুখ কামনা করিলেও, নিজের অঙ্গ সমর্পণে কাতর, এইরূপ কুমারীগণকে সময় পাইয়া কামদেবই যে পীড়িত করেন, তাহা নহে; কুমারীগণ কালক্ষেপ করিয়া সে কামদেবকেও পীড়িত করে ॥২৬॥

(স) শকুন্তলা। (যাইতে লাগিল।)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। पौरव! रक्ख रक्ख विणअं, इदो तदो इसि
सञ्चरन्ति (१)। (च)

राजा। सुन्दरि! अलं गुरुजनाङ्गयेन, न ते विदित
तत्रभवान् कण्वः खेदमुपयास्यति। यतः—(२) (क)

(च) पौरव! रक्ष रक्ष विनयम्, इतस्ततः ऋषयः सञ्चरन्ति।

(च) शकु इति। पुरोरपत्यमिति पौरवः पुरुवंशीयस्तत्सम्बोधनम्। शिक्षां शिक्षानिबन्धनं शिष्टाचारमित्यर्थः, न पुनर्बलात्कारे प्रवर्त्तस्व कथमित्याह इत इति। सञ्चरतामृषीणां मध्ये यदि कश्चिदवलोक्य पित्रे निवे महाननर्थो भवेदित्यभिप्रायः।

"विनया तु बलायां स्त्री शिक्षायां प्रणतौ पुमान्" इति मेदिनी।

(क) राजेति। विदिता अवगता धर्म्मा लोकाचारा येन सः। बहुव्रीहिः धर्म्मान् आदिशः। तत्रभवान् पूज्यः। ते त्वत्सम्बन्धे, खेदम् अननुमतत्वात् अनुतापम्, न उपयास्यति न प्राप्स्यति, विदितधर्म्मत्वात् गान्धर्वविवाहस्य रुपत्वादिति भावः।

(ছ) রাজা। নিজের প্রিয়কার্য্য করিব না?। (নিকটে বস্ত্রাঞ্চল ধরিলেন।)

(ক্ষ) শকুন্তলা। হে পৌরব! শিষ্টাচার রক্ষা করুন, রক্ষা করুন; মুনিগণ ইতস্ততঃ বিচরণ করিতেছেন।

(ক) রাজা। সুন্দরি! গুরুজনের ভয় করিও না; লোকাচার পূজনীয় মহর্ষি কণ্ব, তোমার বিষয়ে অনুতাপ ভোগ না। কারণ—

(१) पौरव! रक्ख अविणअं, मअणसन्तत्ता वि ण हु अत्तणो पहवामि।

(२) भीरु! अलं गुरुजनभयेन। दृष्ट्वा ते विदितधर्म्मा तत्रभवान् ग्रहीष्यति कुलपतिः। अपि च,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गान्धर्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः (१) ॥२७॥

दिशोऽवलोक्य। कथं प्रकाशं निर्गतोऽस्मि। शकुन्तलां हित्वा पुनस्तैरेव पदैर्निवर्त्तते (२)। (ख)

---

गान्धर्वेणेति। बह्व्यः प्रचुराः, मुनिकन्यकाः, गान्धर्वेण कामप्रयुक्तेन 'त्वं मे भार्या त्वं मे भर्त्ता' इति परस्परनियमपूर्वकेण विवाहेन, परिणीता बहुभिः पुरुषैः समुदूढ़ाः अथ अनन्तरम्, पितृभिस्तज्जनकादिभिश्च, तास्तद्रूपेण परिणीताः कन्याः, अनुमोदिताः न्याय्यत्वात् अन्योपायाभावाच्च अनुमताः, श्रूयन्ते पुराणेतिहासादिष्विति शेषः।

अत्र विवाहेनेति प्रक्रम्य परिणीता इत्यभिधानात् प्रकृतिविषयो भग्नप्रक्रमतादोषः, स च 'विवाहिताः श्रूयन्ते ताः' इति पाठेन समाधेयः।

गान्धर्वविवाहमाह मनुः—"इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः॥"

बह्व्य इति प्रचुरार्थकबहुशब्दस्य गुणवचनत्वात् "वतो गुणवचनादखरुसंयोगोपधात्" इति ङीप्रत्ययः ॥२७॥

(ख) दिश इति। सर्वा दिश इत्यर्थः। प्रकाशते इति प्रकाशं सर्वदृश्यस्थानम्, निर्गतोऽस्मि शकुन्तलाया अनुसरणादिति शेषः। ऋषिभिर्दर्शने दुरभिसन्धिसन्देहादिदमन्याय्यमित्याशयः। हित्वा परित्यज्य, तैरेव यैः पदैर्निर्गतः, तैरेवेत्यर्थः, पदैः स्थानैः।

---

बहुतर मुनिकन्या गान्धर्व्वविवाहে বিবাহিত হইয়াছেন; পরে তাঁহাদের পিতৃগণও তাহা অনুমোদন করিয়াছেন শুনা যায় ॥২৭॥

(খ) (সকল দিক্ দেখিয়া) হায়! প্রকাশ্য স্থানে আসিয়া পড়িয়াছি। (শকুন্তলাকে ত্যাগ করিয়া, আবার সেই স্থানে ফিরিলেন।)

---

(१)…बह्व्यो राजर्षिकन्यकाः। पितृभिश्चाभिनन्दिताः।
(२) क्वचिदयं पाठो नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । पदान्तरे प्रतिनिवृत्य साङ्गभङ्गम् । पौरव ! अणिच्छापूरओ वि सम्भासणमित्तपरिचिदो अअं जणो ण विसुमरिदव्वो (१)।

राजा । सुन्दरि !

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।
दिवावसाने छायेव पुरो मूलं वनस्पतेः ॥२८॥

(क) पौरव ! अनिच्छापूरकोऽपि सम्भाषणमात्रपरिचितः अयं जनः न विस्म...

(ख) शकु इति । पदान्तरे अन्यस्मिन्नेव पदक्षेपे, प्रतिनिवृत्य परिवृत्य ... मुखीभूयेत्यर्थः, अङ्गभङ्गैः सहेति साङ्गभङ्गं देहोपरिभागं किञ्चिद्वक्रीकृत्येति ... न इच्छां पूरयतीति अनिच्छापूरकः रमणेन असम्पादिताभिलाषोऽपि, सम्भाषण... केवलेन आलापेन न पुनः केनचिद्व्यवहारेणेत्यर्थः परिचितः, अयं मत्स्वरूपो... न विस्मर्त्तव्यः, आत्मन आश्रितवात्सल्यगुणात् मम च आश्रितत्वादित्याशयः । ए... दुर्निवारानुरागो व्यज्यते ।

त्वमिति । दिवावसाने दिनशेषभागे, वनस्पतेर्वृक्षस्य, छाया, पुरः ... गच्छन्त्यपि, मूलं तस्य वनस्पतेरेव मूलदेशमिव, त्वं पुरो दूरं गच्छन्त्यपि, ...

(ग) শকুন্তলা। (অন্য পদক্ষেপ করিবার সময়ে ফিরিয়া ... ভঙ্গীর সহিত) হে পৌরব! কেবল আলাপে পরিচিত এই ... আপনার ইচ্ছা পূরণ না করিয়া থাকিলেও, আপনি ইহাকে ... হইবেন না।

(१) गान्धर्वेण इत्यादि श्लोकात् परं नेपथ्ये इत्यादितश्च पूर्वं पुस्तकान्तरे ... पाठः—शकुन्तला । मुञ्च दाव मं । भूओवि सहीजणं अणुमाणइस्सं । ... भवतु, मोक्ष्यामि । शकुन्तला । कदा ? । राजा । अपरिक्षतकोमलस्य यावत्कु... स्येव नवस्य षट्पदेन । अधरस्य पिपासता मया ते सदयं सुन्दरि ! गृह्यते ... मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला । परिहरति नाट्येन ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। स्तोकमन्तरं गत्वा आत्मगतम्। हद्दी हद्दी! इमं सुणिअ ण मे चलणा पुरमुहा पसरन्ति। भोदु, इमेहिं पज्जन्तकुरुवएहिं ओवारिदसरीरा भविअ पेक्खिस्सं दाव से भावाणुवन्धं। तथा कृत्वा स्थिता। (घ)

(घ) हा धिक् हा धिक्! इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः। भवतु, एभिः पर्य्यन्तकुरुवकैः अपवारितशरीरा भूत्वा प्रेक्षिष्ये तावदस्य भावानुबन्धम्।

---

हृदयम्, न जहासि सर्वदैव हृदयेऽवस्थानान्न परित्यजसि। अतः कथं मया त्वं वियुक्तव्येति भावः।

अत्र पूर्णोपमालङ्कारः। तथा त्वं जहासि छाया तु जहातीति पुरुषभेदात् "लतेव राजसे तन्वि!" इति दर्पणोदाहरणवत् भग्नप्रक्रमतादोषः। तत्समाधानाय तु श्लोक एवं पाठ्यः—

गच्छन्त्यापि त्वया दूरं हृदयं मे न हीयते।
छाययेव दिवाशेषे पुरो मूलं वनस्पतेः॥

दिवावसान इति तत्प्रथमभागस्याप्युपलक्षणम्, तत्रापि छायायाः पुरोदूरगमनात्। "वनस्पतिर्द्रुमात्रे विनापुष्पफलद्रुमे" इति विश्वप्रकाशे द्रुममात्रेऽपि वनस्पतिपदप्रयोगात् अमरकोषाद्यनुसारेण पुष्पं विना केवलफलशालिद्रुमबोधपरिकल्पनया न अविशेषे विशेषाख्यदोषः॥२८॥

(घ) शकु इति। स्तोकमल्पम्, अन्तरं व्यवधानम्, गत्वा; अन्यथा राजा यदि पुनर्विंद्यतेत्याशयः। श्रुत्वा विद्यमानाया इत्यध्याहारान्नैकतृकत्वहानिः। पुरोमुखौ सम्मुखाभिमुखौ सन्तौ, प्रसरतश्चलतः, हृदयाकर्षणादिति भावः। पर्य्यन्तकुरुवकैः

---

राजा। सुन्दरि!

দিনের শেষভাগে ছায়া যেমন দূরে গমন করিয়াও বৃক্ষের মূল পরিত্যাগ করে না; সেইরূপ তুমি দূরে গমন করিয়াও, আমার হৃদয় পরিত্যাগ করিতেছ না॥২৮॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। কথমেবং প্রিয়ে! অনুরাগৈকরসং মামুৎসৃজ্য নিরপেক্ষেব গতাসি। (ঙ)

অনির্দ্দয়োপভোগস্য রূপস্য মৃদুনঃ কথম্।
কঠিনং খলু তে চেতঃ শিরীষস্যেব বন্ধনম্ ॥২৫॥

প্রান্তস্থকুরুবকশাখাভিঃ, অপবারিতশরীরা আবৃতদেহা সতী। অস্য রাজ্ঞঃ, মানস। কলাপস্য, অনুবন্ধম্ অনুবৃত্তিম্।

(ঙ) রাজেতি। হে প্রিয়ে! অনুরাগ এব একো রসঃ স্বাদঃ অনুবর্ত্তিনং তং ত্বদনুরাগমাত্রমনাসক্তিকমিত্যর্থঃ মাম্ উৎসৃজ্য বিহায়, কথম্ এবং নিরপেক্ষেব ইত্থং নিস্পৃহেব, গতাসি। এতত্তু মহদনুচিতমিতি ভাবঃ।

অনির্দ্দয়েতি। অনির্দ্দয় অপি তু পরমকোমলত্বাৎ সদয় এব উপভোগ যস্য তস্য তাদৃশস্য, মৃদুনঃ কোমলস্য, শিরীষস্য শিরীষকুসুমস্য, বন্ধনং অনির্দ্দয়োপভোগস্য মৃদুনঃ তে তব রূপস্য আকৃতেঃ সম্বন্ধি, চেতশ্চিত্তম্, খলু সুদৃঢ়মেব।

অত্রাপি পূর্ণোপমালঙ্কারঃ। নির্নং বিদ্যতে দয়া যস্মিন্ স নির্দ্দয়ঃ অনির্দ্দয় ইতি সদয় এব "সম্ভাব্যমাননিষেধনিবর্ত্তনে নঞ্‌দ্বয়ম্" ইতি অবধারণার্থলাভাৎ সদয়েত্যনুক্ত্বা অনির্দ্দয়েত্যুক্তাবপি নাধিকপদতাদোষঃ গুণ এব "গুণঃ ক্বাপ্যধিকং পদম্" ইত্যত্র "তন্ন ন জানে" ইতি দর্পণোদাহৃত অনুনয়ো নাম নাট্যলক্ষণঞ্চ। যথা দর্পণে—

(ঘ) শকুন্তলা। (একটু ব্যবধানে যাইয়া স্বগত) হায় এই কথা শুনিয়া, আমার চরণ আর সম্মুখের দিকে সরিতেছে হউক, এই প্রান্তবর্ত্তী কুরুবকশাখায় আবৃতদেহ হইয়া, ইঁহার কাণ্ড দেখি। (তাহা করিয়া থাকিল।)

(ঙ) রাজা। হে প্রিয়ে! আমার অনুরাগ, তোমার ধারাবাহীরূপে চলিতেছে, তথাপি আমাকে পরিত্যাগ করিয়া একেবারে কোন অপেক্ষা না করিয়াই এইভাবে চলিয়া গেলে?!

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। एदं सुणिअ ण मे अत्थि विभवो गच्छिदुं। (च)

राजा। सम्प्रति प्रियाशून्ये किमस्मिन् लतामण्डपे करोमि। अग्रतोऽवलोक्य। हन्त! व्याहतं मे गमनम्। (छ)

मणिबन्धाद्गलितमिदं संक्रान्तोशीरपरिमलं तस्याः।
हृदयस्य निगड़मिव मे मृणालवलयं स्थितं पुरतः॥३०॥

सबहुमानमादत्ते। (ज)

(च) इदं श्रुत्वा न मे अस्ति विभवो गन्तुम्।

---

"वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम्।"
"हन्तं प्रसवबन्धनम्" इत्यमरः॥२९॥

(च) शकु इति। श्रुत्वा वर्त्तमानाया इत्यध्याहारादत्रापि नैककर्त्तृकत्वहानिः। [वि]भवः सामर्थ्यं नास्ति, प्रत्यनुरागेणाकर्षणादिति भावः।

(छ) राजेति। किं करोमि, अतएव गच्छाम्येवेत्याशयः। हन्तेति हर्षे। [व्य]ाहतं सविघ्नीकृतम्।

गमनव्याघातहेतुमाह मणीति। तस्याः शकुन्तलायाः, मणिर्बध्यते अस्मिन्निति [म]णिबन्धो हस्तस्य वलयधारणदेशस्तस्मात्, गलितं पतितम्, संक्रान्तः संलग्नः उशीरस्य [वी]रणमूलानुलेपनस्य परिमलो गात्रविमर्द्दजनितमनोहरगन्धो यस्मिन् तत् तादृशम्, [य]था मे मम, हृदयस्य गमनप्रवर्त्तकस्य चित्तस्य, निगड़ं बन्धनशृङ्खल इव, इदं दृश्यमानम्, [मृ]णालवलयम्, पुरतः अग्रतः स्थितम्। ततश्च यथा रथचालकस्य अश्वस्य निगड़ितत्वे

---

কোমল শিরীষকুসুমের বৃন্ত যেমন কঠিন; সেইরূপ কোমল ও [দৃ]ঢ়ভাবে উপভোগের যোগ্য তোমার এই রূপের হৃদয়, কঠিন হইল [কে]ন ॥২৯॥

(চ) শকুন্তলা। ইহা শুনিয়া আমার যাইবার ক্ষমতা নাই।
(ছ) রাজা। এখন এই প্রিয়াশূন্য লতামণ্ডপে কি করিব। [স]ম্মুখে দৃষ্টিপাত করিয়া) হায়! আমার গমনে বিঘ্ন হইল।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

শকু। হস্তং বিলোক্য। অম্মো! দোব্বল্লসিঢ়িলদাএ
বভট্টং এদং মিণালবলঅং ণ মএ পরিক্খাদং। (ঝ)

রাজা। মৃণালবলয়মুরসি নিক্ষিপ্য। অহো! স্পর্শঃ।

(ঝ) অহো! দৌর্ব্বল্যশিথিলতয়া পরিভ্রষ্টমেতত্ মৃণালবলয়ং ন ময়া

রথস্য গমনং ব্যাহতং ভবতি, তথৈব মমাপি দেহচালকস্য হৃদয়স্য
গমনং ব্যাহতমিতি ভাবঃ।

অত্র নিগড়মিবেতি জাত্যুত্প্রেক্ষালঙ্কারঃ। আর্য্যা জাতিঃ ॥৩০॥

(জ) সেতি। সবহুমানং প্রিয়ায়া বস্তুত্বাদেব অত্যাদরসহিতং
আদত্তে মৃণালবলয়ং গৃহ্লাতি।

(ঝ) শকু ইতি। অহো ইতি বিস্ময়ে। দৌর্ব্বল্যেন দারুণ
ক্লমত্বেন যা শিথিলতা শ্লথতা তয়া, পরিভ্রষ্টং হস্তাত্ পতিতম্। ন
লক্ষিতম্। স্বহস্তাদেব বলয়ং পতিতম্, কিন্তু তন্ন পরিজ্ঞাতম্, ইদং
মেবেত্যাশয়ঃ।

(ঞ) রাজেতি। উরসি বক্ষসি, নিক্ষিপ্য সংস্থাপ্য। অহো
কারত্বাদাশ্চর্য্য ইত্যর্থঃ, স্পর্শঃ মৃণালবলয়স্যেতি শেষঃ।

যাহাতে বিণ্যার অনুলেপনের সৌরভ লাগিয়া রহিয়া
মৃণালবলয় প্রিয়তমা শকুন্তলার মণিবন্ধ হইতে নিপতিত হইয়া
হৃদয়ের শৃঙ্খলের ন্যায় সম্মুখে রহিয়াছে ॥৩০॥

(জ) (বিশেষ আদরের সহিত গ্রহণ করিলেন।)

(ঝ) শকুন্তলা। (হাত দেখিয়া) ওমা! দৌর্ব্বল্যের
বশতঃ এই মৃণালবলয় পড়িয়া গিয়াছিল; কিন্তু আমি
পারি নাই।

(ঞ) রাজা। (মৃণালবলয় বক্ষে ধারণ করিয়া) আশ্চর্য

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनेन लीलाभरणेन ते प्रिये !
विहाय कान्तं भुजमत्र तिष्ठता।
जनः समाश्वासित एष दुःखभाक्
अचेतनेनापि सता, न तु त्वया ॥३१॥

शकु। अदो वरं ण समत्थम्हि विलम्बिदुं। भोदु, एदेण ज्जेव अवदेसेण अत्ताणं दंसइस्सं। इत्युपसर्पति। (ट)

(ट) अतः परं न समर्थास्मि विलम्बितुम्। भवतु, एतेनैव अपदेशेन आत्मानं दर्शयिष्यामि।

अनेनेति। हे प्रिये! शकुन्तले! कान्तं मनोहरम्, भुजं हस्तम्, विहाय परित्यज्य, अत्र स्थाने, तिष्ठता विद्यमानेन, अनेन ते तव लीलाभरणेन विलासालङ्कारेण, अचेतनेन चैतन्यरहितेन सतापि, दुःखभाक् वियोगकष्टशाली, एष मत्स्वरूपी जनः समाश्वासितः आकाङ्क्षितस्पर्शसुखसम्पादनेन सान्त्वितः, तु किन्तु त्वया सचेतनया सत्यापि इत्याशयः, न समाश्वासित इत्यन्वयः। इदन्तु महादुःखकारणं महदाश्चर्य्यञ्चेत्यभिप्रायः।

अत्र चेतनात्मकहेत्वभावेऽपि आश्वासनरूपकार्य्योत्पत्तेर्विभावना, सचेतनशकुन्तलारूपहेतुसत्त्वेऽपि आश्वासनात्मककार्य्यानुत्पत्तेर्विशेषोक्तिः तथा प्रस्तुतयोरेव मृणालवलयशकुन्तलयोराश्वासित इत्येकया क्रियया कर्तृतयाभिसम्बन्धात्तुल्ययोगिता च इत्येतेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः।

वंशस्थविलं वृत्तम् ॥३१॥

(ट) शकु इति। अतः परम् ईदृशविलापश्रवणानन्तरम् एतेनैव मृणालवलयार्पणात्मकेनैव, अपदेशेन छलेन।

হে প্রিয়তমে! তোমার সুন্দর হাতখানি ত্যাগ করিয়া, এইখানে থাকিয়া, তোমার এই বিলাসালঙ্কার অচেতন হইয়াও, এই দুঃখী ব্যক্তিকে আশ্বস্ত করিল; কিন্তু তুমি করিলে না ॥৩১॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। दृष्ट्वा सहर्षम्। अये! जीवितेश्वरी मे ...
परिदेवनानन्तरं प्रसादेनोपकर्त्तव्योऽस्मि खलु दैवस्य।

पिपासाक्षामकण्ठेन याचितञ्चाम्बु पक्षिणा।
नवमेघोज्झिता चास्य धारा निपतिता मुखे॥३२॥

(ठ) राजेति। अये इति हर्षे। मे मम जीवितेश्वरी जीवनस्थि... स्थितौ आश्वासात् जीवनस्थितेः अनुपस्थितौ च नैराश्यात् जीवनास्थितेः... प्राप्ता उपस्थिता। अतएव परिदेवनानन्तरं पूर्वकृतविलापात् परम्, दैवस्य प्रसादेन अनुग्रहेण उपकर्त्तव्योऽस्मि उपकारयोग्यः कृतोऽस्मि, शकुन्तलायाः उपस्थापनादिति भावः।

अत्र प्रहर्षो नाम नाट्यालङ्कारः—"प्रहर्षः प्रमदाधिक्यम्" इति दर्प... दैवस्येति "वा कर्त्तरि कृत्ये" इति कर्त्तरि षष्ठी।

पिपासेति। पिपासया जलतृष्णया क्षामं क्षीणः कण्ठः स्वरो यस्य तेन चातकेन, अम्बु जलञ्च याचितं नवमेघेन उज्झिता उत्सृष्टा धारा ... च, अस्य पक्षिणश्चातकस्य मुखे निपतिता। तथा च यथा तृष्णातुरचातकस्य ... नन्तरमेव तत्प्राप्तौ महानुच्छ्वासो जायते, ममापि तथैव शकुन्तलादर्शनार्थं ... तद्दर्शनप्राप्तेः महानुच्छ्वासो जात इत्याशयः।

अतएवात्र समादप्रस्तुतात् प्रस्तुतसमप्रतीतेरप्रस्तुतप्रशंसालङ्कारः, चकाराभ्यां ... पतनक्रिययोर्यौगपद्यसूचनात् क्रियासमुच्चयश्च; अनयोर्गुणप्रधानभावेन ...

(ट) शकुन्तला। ইহার পর আর বিলম্ব করিতে ... হউক, এই ছলেই আপনাকে দেখাই। (এই বলিয়া নিকটে ...

(ঠ) রাজা। (দেখিয়া আনন্দের সহিত) ওহে! ... জীবিতেশ্বরী উপস্থিত হইয়াছেন। বিলাপের পর অনুগ্রহ ... বিধাতা আমার উপকার করিয়াছেন।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। राज्ञः सम्मुखे स्थित्वा। अज्ज! अद्धपधे सुमरिअ एदस्स हत्थब्भंसिणो मिणालवलअस्स कदे पड़िणिवुत्तह्मि, कधिदं मे हिअएण, तए गहिदं त्ति। ता णिक्खिव एदं, मा मं अत्ताणञ्च मुणिअणेसुं पआसइस्सदि। (ड)

(ड) आर्य्य! अर्द्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते प्रतिनिवृत्तास्मि; कथितं मे हृदयेन, त्वया गृहीतमिति। तन्निक्षिप एतत्, मा मामात्मानञ्च मुनिजनेषु प्रकाशयिष्यति।

प्रहरः। तथा चातकेनेति पक्षिविशेषे वक्तव्ये पक्षिणेति तत्सामान्याभिधानात् विशेषे अविशेषाख्यदोषः, स च 'चातकेनाम्बु चार्थितम्' इति पाठेन समाधेयः।

"स्वरेऽपि कण्ठ आख्यातः" इति हारावली।

चामेति "चेयुषिपचां मकवाः" इति चे धातोः प्रत्ययतकारस्य मकारः ॥३२॥

(ड) शकु इति। कृते निमित्ते। कथितं ज्ञापितम्। तत् तस्मात्, एतत् मृणालवलयम्, निक्षिप समर्पय। तथात्वे किं भवेदित्याह मेति। मां शकुन्तलाम्, आत्मानं स्वं दुष्मन्तञ्च, मुनिजनेषु मा न प्रकाशयिष्यति, इदं मृणालवलयं कर्त्तृ इति शेषः। अन्यथा अस्मिन् मृणालवलये तवैव हस्तगते मुनिभिश्च दृष्टे, 'मदीयं वस्तु कथं ते हस्तगतम्' इति सन्देहेन मुनिजनेषु आवयोरहःसम्पर्कः प्रकाशीभविष्यतीति भावः।

চাতক, পিপাসায় ক্ষীণকণ্ঠ হইয়া জলও প্রার্থনা করিল; নবমেঘপ্রদত্ত জলধারাও ইহার মুখে নিপতিত হইল ॥৩২॥

(ড) শকুন্তলা। (রাজার সম্মুখে থাকিয়া) আর্য্য! অর্দ্ধপথে স্মরণ করিয়া, হস্তচ্যুত এই মৃণালবলয়ের জন্যই আবার ফিরিয়া আসিয়াছি; আমার মন বলিল যে, আপনিই গ্রহণ করিয়াছেন। অতএব উহা নিক্ষেপ করুন; আমাকে এবং নিজেকে মুনিগণের নিকট প্রকাশ করিবেন না।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । एकेनाभिसन्धिना प्रत्यर्पयामि । (ढ)

शकु । केण उण ? । (ण)

राजा । यदीदमहमेव यथास्थानं निवेशयामि । (त

शकु । आ, का गदी । भोदु एदं दाव । इत्युपसर्पति

राजा । इतः शिलापट्टैकदेशं संश्रयावः । इत्युभौ परिक्र

विष्टौ । (द)

(ण) केन पुनः ? ।

(थ) आः, का गतिः । भवतु एतत् तावत् ।

---

(ढ) राजेति । अभिसन्धिना मया अभिसन्धीयमानेन पणेन ।

(ण) शकु इति । केन अभिसन्धिना ।

(त) राजेति । अहमेव यदि इदं मृणालवलयं यथास्थानं तव हस्ते निवेशयामि स्थापयामि स्थापयितुमनुमतिं लभे इति तात्पर्य्यम् । अयमेव मर्मा... अन्यथा च न प्रत्यर्पयामीत्याशयः ।

(थ) शकु इति । आ इति छलेन पीड़ासूचनम्, का गतिः, तव पणपूरणं... मन्तरेण क उपायः । अतएवाह भवत्विति । एतत् त्वयैव यथास्थानं ... भवतु इति पणपूरणाङ्गीकारः । उपसर्पति राज्ञः समीपं गच्छति ।

(द) राजेति । इतः अस्मिन् पार्श्वे, शिलापट्टस्य प्रस्तरफलकस्य ए... संश्रयाव उपवेशनाय अवलम्बावहे । अन्यथा दण्डायमानस्य निवेशने ... भवेदिति भावः ।

---

(ঢ) রাজা । একটী পণদ্বারা প্রত্যর্পণ করিব ।

(ণ) শকুন্তলা । কি পণদ্বারা ? ।

(ত) রাজা । যদি আমিই এটীকে যথাস্থানে পরাইয়া দি...

(থ) শকুন্তলা । আঃ, উপায় কি । ইহাই হউক । (এই... নিকটে গেল । )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । शकुन्तलाया हस्तमादाय । अहो स्पर्शः ! । (ध)

हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा ।
प्ररोहः सम्भृतो भूयः किंस्वित् कामतरोरयम् ? ॥३३॥

शकु । स्पर्शं रूपयित्वा । तुवरदु तुवरदु अज्जउत्तो । (न)

(न) त्वरतां त्वरताम् आर्य्यपुत्रः ।

---

(ध) राजेति । अहो आश्चर्य्यः, परमानन्दजनकत्वादित्याशयः ।

हरेति । अयं तव हस्तः, हरस्य महादेवस्य कोपाग्निना पार्वतीसन्निधाने सम्मोहन-काले क्रोधजनितवह्निना दग्धस्य भस्मीकृतस्य कामो मदन एव तरुर्दाह्यत्वात् वृक्षस्तस्य, अमृतवर्षिणा जलवर्षिणा सुधादायिना च, दैवेन मेघसमूहेन देवसमूहेन च, भूयः पुनरपि, सम्भृत उत्पादितः, प्ररोहः अङ्कुरः, किंस्वित्, अङ्कुरवत् लोहितत्वात् पल्लववत् कोमलाङ्गुलीमत्त्वाच्चेति भावः ।

अत्र कामे तरुत्वारोपः शाब्दः, दैवे मेघत्वारोपस्त्वार्थ इत्येकदेशविवर्त्ति रूपकम्, शकुन्तलाहस्ते कामतर्वङ्कुरत्वसन्देहात् तन्निरासाभावाच्च शुद्धसन्देहालङ्कारश्च, अनयो-रप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः ।

"दैवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये ।" "अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते ।" इत्यादि च मेदिनी । "किंस्वित् प्रश्ने वितर्के च" इति विश्वः । देवानां समूह इति दैवम् एवमादित्वादण् ॥३३॥

---

(ন) রাজা । এই দিকে প্রস্তরফলকের এক পার্শ্বে আমরা উপবেশন করি । ( এই বলিয়া দুই জনেই পাদক্ষেপ করিয়া উপবেশন করিলেন । )

(ধ) রাজা । ( শকুন্তলার হস্ত ধারণ করিয়া ) কি আশ্চর্য্য স্পর্শ ! ! কামবৃক্ষ, মহাদেবের কোপানলে দগ্ধ হইয়াছিল ; তাহার পর বিধাতা অমৃতবর্ষা করিয়া পুনরায় উহার এই অঙ্কুর উৎপাদন করিয়াছেন কি ? ।৩৩।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सहर्षमात्मगतम्। इदानीमस्मि विश्वसितः; भ-
र्त्राभाषणपदमेतत्। प्रकाशम्। सुन्दरि! नातिश्लिष्टः सन्धि-
र्मृणालवलयस्य; यदि तेऽभिमतम्, तदन्यथा घटयिष्यामि।
शकु। स्मितं कृत्वा। जधा दे रोअदि। (फ)
राजा। सव्याजं विलम्ब्य प्रतिमोच्य। सुन्दरि! दृश्यताम्-

(फ) यथा ते रोचते।

(न) शकु इति। स्पर्शं स्पर्शजनितरोमाञ्चादिकम्, रूपयित्वा … आर्य्यः पूज्यः श्वशुर इत्यर्थः तस्य पुत्र इत्यार्य्यपुत्रः, भर्त्तर्थे भार्य्याप्रयुक्तोऽयं … शब्दः। त्वरतां यथास्थाने मृणालवलयनिवेशनायेति तात्पर्य्यम्। … कश्चित् पश्येदित्याशयः।

(प) राजेति। विश्वसितः अवश्यमेवेयं मे भार्य्या भविष्यतीत्यर्थं … तत्र हेतुमाह भर्त्तुरिति। एतत्, भर्त्तुराभाषणपदं वाचकः शब्दः। '… सम्बोध्यः पतिः पत्नीजनेन वा" इति भरतनाट्यशास्त्रादिति भावः। सन्धिः … संयोगस्थलम्, नातिश्लिष्टः न सुषमभावेन मिलितः। तत् तदा। अन्यथा … घटयिष्यामि योजयिष्यामि।

(फ) शकु इति। नवयवातिशयदर्शनात् कौतुकेन स्मितम्। यथा … तथा कुरु इति शेषः।

(न) শকুন্তলা। (স্পর্শজনিত রোমাঞ্চপ্রভৃতি অভিনয় … আর্য্যপুত্র! ত্বরা করুন, ত্বরা করুন।

(প) রাজা। (আনন্দের সহিত স্বগত) এখন বিশ্বস্ত … কারণ, এই শব্দটী ভর্ত্তার বাচক। (প্রকাশ্যে) সুন্দরি! এই … বলয়ের সন্ধিস্থান ভাল করিয়া লাগে নাই; সুতরাং যদি তো… হয়, তবে অন্যরূপে সংযোজিত করি।

(ফ) শকুন্তলা। (ঈষৎ হাস্য করিয়া) আপনার যেমন …

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयं स ते श्यामलतामनोहरं
विशेषशोभार्थमिवोज्झिताम्बरः।
मृणालरूपेण नवो निशाकरः
करं समेत्योभयकोटिमाश्रितः ॥३४॥

(व) राजेति। सव्याजम् अन्यथाघटनव्याजेन सहितं यथा स्यात्तथा विलम्ब्य, प्रतिमोच्य मृणालवलयं परिधाप्य।

अयमिति। अयं दृश्यमानः, स प्रसिद्धः, नवो नवोदितः मृणालरूपत्वात् एककलामात्रोदित इत्यर्थः, निशाकरश्चन्द्रः, विशेषशोभार्थमिव आत्मनोऽधिकतरसौन्दर्य्यसम्पादनार्थमिव, सुन्दरस्थानगतत्वे सौन्दर्य्यवृद्धेः स्वाभाविकत्वादिति भावः, उज्झितं त्यक्तम् अम्बरमाकाशं येन स तथोक्तः सन्, श्यामलतया आकाशवदेव श्यामवर्णत्वेन मनोहरं कमनीयत्वादधिकतरसुन्दरम्, ते तव करं हस्तम्, मृणालरूपेण समेत्य प्राप्य, उभयकोटिम् अग्रदेशद्वयम्, आश्रितः प्राप्तः, आकाशे कोटिद्वयं विभक्तं वर्त्तते, तव हस्ते तु संयुक्तं जातमिति भावः।

अत्र विशेषशोभार्थमिवेति फलोत्प्रेक्षा, प्रकृतमृणालनिषेधेन निशाकरस्य स्थापनादपह्नुतिश्च; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः।

अत्र श्यामलता-मनोहरं करमिति दर्शनात् शकुन्तला श्यामाङ्गी आसीदिति प्रतीयते। केचित्तु श्यामवर्णलतावन्मनोहरमिति व्याचक्षते, तन्न लतात्वे श्यामेति विशेषणवैयर्थ्यम्। श्यामानामप्रियङ्गुलताबोधकत्वे वक्तव्ये संज्ञात्वात् पुंवद्भावाप्रसक्तेः।

वंशस्थविलं वृत्तम् ॥३४॥

---

(व) রাজা। (ছলের সহিত বিলম্ব করিয়া, পরিধান করাইয়া) সুন্দরি! দেখ—

একটী মাত্র কলাদ্বারা নবোদিত এই সেই চন্দ্র, বিশেষ সৌন্দর্য্য লাভ করিবার জন্যই যেন আকাশ পরিত্যাগ করিয়া, শ্যামবর্ণতানিবন্ধন মনোহর তোমার হাতখানি পাইয়া, মৃণালরূপে দুই অগ্রভাগের সম্মেলন প্রাপ্ত হইয়াছেন ॥৩৪॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । ण दाव णं पेक्खामि, पवणकम्पिदकण्णुप्प-
रेणुणा कलुसीकिदा मे दिट्ठी । (भ)

राजा । सस्मितम् । यद्यनुमन्यसे, तदहमेनां वदनमारुतेन
विशदां करवाणि । (म)

शकु । तदो अणुकम्पिदा भवेअं ; किन्तु उण अहं
दे वीससेमि । (य)

राजा । मा मैवम् । नवो हि परिजनः सेव्यानामादे-
शात् परं न वर्त्तते । (र)

(भ) न तावदेनं प्रेचे, पवनकम्पितकर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः।
(य) ततः अनुकम्पिता भवेयम् ; किन्तु पुनरहं न ते विश्वसिमि ।

(भ) शकु इति । एनं मृणालवलयम् । पवनकम्पितयोः वायुवशा-
कर्णोत्पलयोः रेणुना परागेण, मे मम दृष्टिः नयनद्वयम्, कलुषीकृता आविलीकृ-
अतएव नैनं प्रेचे इत्याशयः । "दृग् दृष्टिः" इत्यमरः ।

(म) राजेति । कर्त्तव्यसेवाकौतुकात् स्मितमिति बोध्यम् । तत् तदा,
तव दृष्टिम्, वदनमारुतेन फुत्कारेण, विशदां निर्म्मलाम् ।

(य) शकु इति । अनुकम्पिता भवता उपकृतत्वेन अनुगृहीता । ते तव
चानुकरोति हि" इत्यादिवत् शेषे षष्ठी, त्वां न विश्वसिमीत्यर्थः । यदि त्वं वदन-
दृष्टिं विशदां कुर्वन् अकस्मात् मम गण्डे चुम्बसीत्येव मे सन्देह इति भावः ।

(ভ) শকুন্তলা। আমি ইহা দেখিতে পারিতেছি না। বা-
বায়ুকম্পিত কর্ণোৎপলের রেণুতে আমার দৃষ্টি, অপরিষ্কার করিয়াছে

(ম) রাজা। (ঈষৎ হাস্যের সহিত) যদি অনুমতি কর,
আমি মুখবায়ুদ্বারা ইহাকে পরিষ্কার করিয়া দিতে পারি।

(য) শকুন্তলা। তাহা হইলে অনুগৃহীত হই বটে ; কিন্তু
আপনাকে বিশ্বাস করি না।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। अअं ज्जेव अच्चादरो अविस्सासजणओ। (ल)

राजा। स्वगतम्। नाहमेवं रमणीयमात्मनः सेवावसरं शिथिलयिष्ये। मुखमुन्नमयितुं प्रवृत्तः। (व)

शकु। प्रतिषेधं रूपयन्ती विरमति। (श)

(ल) अयमेव अत्यादरः अविश्वासजनकः।

(र) राजेति। मा मैवं न खलु न खलु इत्थं ब्रूहीति शेषः। हि यस्मात्। परिजनः सेवकः। परम् उपरि न वर्त्तते आदेशातिरिक्तं कार्य्यं न करोतीत्यर्थः। तथा चाहं "तदा अनुकम्पिता भवेयं" इत्यनेन सूचनभङ्ग्या आदिष्टं दृष्टिविशदीकरणं विना न किञ्चिदन्यत् करोमीत्याशयः।

(ल) शकु इति। अयमेव "परिजनः" "सेव्यानाम्" "आदेशात्" इति शब्दैरयम्सूचितः। तथा च यथा भवतः परिजनत्वं मम च सेव्यत्वं मिथ्यापि भवता सत्यवदेव अभिहितम्, तथा "नखौ हि" इत्यादि वाक्यमेव मिथ्यैव सत्यवदेव चाभिहितमित्यभिप्रायः।

(व) राजेति। रमणीयं सुन्दरम्, निर्जनत्वात् सम्मतत्वात् महामोदकरत्वाच्चेति भावः, आत्मनः स्वस्य मत्कर्त्तृकमित्यर्थः, सेवावसरं शुश्रूषाकरणावकाशम्, शिथिलयिष्ये सेवाया अकरणेन निष्फलीकरिष्ये इत्यर्थः, ईदृशावसरस्य पुनः प्राप्तिसन्देहादिति भावः।

(র) রাজা। না না, এরূপ বলিও না। কারণ, নূতন সেবক, প্রভুদের আদেশের উপরে যায় না।

(ল) শকুন্তলা। এই বেশী আদরই অবিশ্বাসের কারণ।

(ব) রাজা। (স্বগত) আমি এমন সুন্দর নিজের পরিচর্য্যার সময়টীকে নিষ্ফল করিব না। (শকুন্তলার মুখ উত্তোলন করিতে প্রবৃত্ত হইলেন।)

(শ) শকুন্তলা। (নিবারণ অভিনয় করিয়া বিরত হইল।)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। अयि मदिरेक्षणे! अलमस्मदविनयाशङ्कया। (य)

शकु। किञ्चिद् दृष्ट्वा व्रीड़ावनतमुखी तिष्ठति। (स)

राजा। अङ्गुलीभ्यां मुखमुन्नमय्य आत्मगतम्। (ह)

चारुणा स्फुरितेनायमपरिक्षतकोमलः।

पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥३५॥

(अ) शकु इति। प्रतिषेधं राजकर्त्तृकमुखोत्तोलननिवारणम्, रूपयन्ती मुखं तिर्य्यक्कम्पनादिना अभिनयन्ती, विरमति राज्ञः अतिसन्निहिता भवितुं खमते।

(य) राजेति। मदिरे! खञ्जनपक्षिणाविव ईक्षणे लोचने यस्यास्तत्सम्बोधने अस्मत् मम सकाशात्, अविनयाशङ्कया धृष्टताचरणवाशेन चुम्बनाशङ्कया ... पूर्वमेव प्रतिश्रुतत्वात् न ते चुम्बनं करिष्यामीति भावः। अस्मदिति "अस्मदो ..." इति पञ्चम्या बहुवचनम्।

(स) शकु इति। किञ्चिद् दृष्ट्वा राज्ञोऽननुन्मदभावं विलोक्य।

(ह) राजेति। अङ्गुलीभ्यां हस्तद्वयस्य अङ्गुष्ठद्वयेन। उन्नमय्य उत्तोल्य। चारुणेति। अपरिक्षतः केनापि जनेन दन्तैरदष्टपूर्वः, अतएव कोमलः, प्रियायाः शकुन्तलायाः अधरः ओष्ठः, चारुणा मनोहरेण, स्फुरितेन मन्दमन्द-स्पन्देन अनुज्ञायाकोच्चारणप्राक्कालीनकम्पनेन च, पिपासतः पातुमिच्छतः चुम्बितु-मिच्छत इत्यर्थः मम सम्बन्धे, अनुज्ञां चुम्बनानुमतिम्, ददातीव।

अत्र कोमलत्वं प्रति अपरिक्षतपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् क्रियोत्प्रेक्षा च, अनयोर्मिथो निरपेक्षतया संसृष्टिः। तथा स्पृहा नाम नाट्यालङ्कारः तथा च दर्पणे—"आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा" ॥३५॥

(য) রাজা। হে খঞ্জননয়নে! আমা হইতে অশিষ্ট ব্যবহারের আশঙ্কা করিও না।

(স) শকুন্তলা। (একটু দেখিয়া, লজ্জায় অবনত মুখ হইয়া রহিল)

(হ) রাজা। (দুইটী অঙ্গুলীদ্বারা শকুন্তলার মুখ উত্তোলন করিয়া স্বগত)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। परिस्सागमन्थरो विश्च अज्जउत्तो। (च)

राजा। कर्णोत्पलसन्निकर्षादीक्षणमूढ़ोऽस्मि। इति मुखमारुतेन चक्षुः सेवते। (क)

शकु। भोदु, पदुदिट्ठदंसणह्मि संवुत्ता। लज्जेमि उण अणुवआरिणी पिअआरिणो अज्जउत्तस्स। (ख)

(च) परिज्ञानमन्थर इव आर्य्यपुत्रः।

(ख) भवतु, प्रकृतिस्थदर्शनास्मि संवृत्ता। लज्जे पुनरनुपकारिणी प्रियकारिण आर्य्यपुत्रस्य।

(च) शकु इति। परिज्ञाने मदीयनयनाभ्यन्तरप्रविष्टकर्णोत्पलरेणूनां सम्यग्ज्ञाने, मन्थरो मन्दः असमर्थ इत्यर्थः, फुत्कारदाने विलम्बकरणादिति भावः। चारुणीत्यादिराजगतालोचनायां किञ्चिद्विलम्बकरणात् शकुन्तलाया उक्तिरियमिति बोध्यम्।

(क) राजेति। कर्णोत्पलयोः सन्निकर्षात् तव ईक्षणयोरिव सान्निध्यात् ईक्षणे तव नयननिरूपणे मूढ़ः असमर्थः। तथा च किम् ईक्षणम्, किं वा कर्णोत्पलमिति निरूपणे प्रथममशक्ततया किञ्चिद्विलम्बो जात इति भावः। एतेन ईक्षणयोरुत्पलसौसादृश्यं व्यज्यते। मुखमारुतेन फुत्कारेण। सेवते परिष्करोति।

(ख) शकु इति। प्रकृतिस्थं तव फुत्कारेण कर्णोत्पलरेणूनामपगमात् स्वभावस्थं दर्शनं दृष्टिर्यस्याः सा। अनुपकारिणी अकिञ्चित्करणात्, उपकारिणः चक्षुःपरिष्करणादित्याशयः। आर्य्यपुत्रस्य भवतः सम्बन्धे।

পূর্ব্বে কেহই দন্তক্ষত করে নাই বলিয়া কোমল, প্রিয়তমার এই ওষ্ঠখানি, মনোহর স্পন্দনদ্বারা, পানাভিলাষী আমাকে যেন পান করিবার অনুমতি দিতেছে ॥৩৫॥

(চ) শকুন্তলা। আর্য্যপুত্র যেন বুঝিতে অসমর্থ হইতেছেন।

(ক) রাজা। কর্ণোৎপল নিকটে থাকায় চোখ চিনিতে পারিতেছি না। (এই বলিয়া মুখবায়ুদ্বারা শকুন্তলার চোখ পরিষ্কার করিয়া দিলেন।)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। সুন্দরি! কিমন্যৎ। (গ)

ইদমপ্যুপকৃতিপক্ষে সুরভি মুখং তে যদাঘ্রাতম্।

ননু কমলস্য মধুকরঃ সন্তুষ্যতি গন্ধমাত্রেণ ॥৩৬॥

শকু। সস্মিতম্। অসন্তোসে উণ কিং করেদি?। (ঘ)

(ঘ) অসন্তোষে পুনঃ কিং করোতি?।

(গ) রাজেতি। কিমন্যৎ উপকরিষ্যসীতি শেষঃ।

ননু কিং ময়া উপকৃতং যদন্যদুপকর্ত্তব্যং নাস্তীত্যাহ ইদমিতি। যৎ তে সুরভি মুখং সুগন্ধি বদনম্, আঘ্রাতং নয়নে ফুৎকারদানকালে কৃতগন্ধগ্রহণম্, আঘ্রাণমপি উপকৃতিপক্ষে ত্বৎকর্ত্তব্যোপকারকল্পে, ময়া স্বীকৃতমিত্যর্থঃ। তং ধারয়ে। তথাহি মধুকরো ভ্রমরঃ, কমলস্য পদ্মস্য, গন্ধমাত্রেণ কেবলেন গন্ধেন সন্তুষ্যতি। মাত্রশব্দেন মধুপানব্যবচ্ছেদঃ। তথা চ যথা ভ্রমরঃ পদ্মস্য মধু বিনা কেবলগন্ধগ্রহণেনৈব সন্তুষ্যতি তথা অহমপি তব মুখস্য চুম্বনং বিনা কেবলং গ্রহণেনৈব সন্তুষ্টোঽস্মি; স চ গন্ধস্ত্বয়া নির্বাধমেব দত্ত ইত্যুপকার এব তে; অতএব চ তে নাস্তি লজ্জাকারণমিতি ভাবঃ।

অতএবাত্র দৃষ্টান্তোঽলঙ্কারঃ। উপগীতির্নাম জাতিঃ। যথা শ্রুতবোধে—

"আর্য্যোত্তরার্দ্ধতুল্যং প্রথমার্দ্ধমপি প্রযুক্তং চেৎ।

কামিনি! তামুপগীতিং প্রকাশয়ন্তে মহাকবয়ঃ॥" ॥৩৬॥

(খ) শকুন্তলা। হউক, আমার দৃষ্টি স্বাভাবিক হইয়াছে। আর্য্যপুত্র এই প্রিয় কার্য্য করিলেন, আর আমি কোন উপকার না বলিয়া লজ্জিত হইতেছি।

(গ) রাজা। সুন্দরি! আর কি উপকার করিবে।

ইহাই আমি উপকারের পক্ষে স্বীকার করিয়াছি যে, তোমার সুবাসিত মুখখানির আঘ্রাণ করিয়াছি। দেখ—ভ্রমর, পদ্মের গন্ধমাত্রে সন্তুষ্ট হইয়া থাকে ॥৩৬॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। इदम्। इति व्यवसितः। (ङ)

शकु। वक्त्रं ढौकते। (च)

नेपथ्ये। चक्कवाअवहु! आमन्तेहि सहचरं, ण्ं उअत्थिदा रअणी। (छ)

---

(घ) शकु इति। स्वयं कौतुकोक्तेः कर्त्तव्यत्वात् स्मितम्। पुनः किन्तु, असन्तोषे गन्धमात्रेण सन्तोषाभावे, किं करोति स मधुकर इति शेषः। एतेन मन्मुखाघ्राणमात्रेण भवतोऽपि सन्तोषाभावे भवतापि किं कर्त्तव्यमिति व्यज्यते।

(ङ) राजेति। इदं मया क्रियमाणमेतत् चुम्बनम्, मधुकरः कमलस्य मधुपानाय करोतीति शेषः। इति उक्त्वा, व्यवसितः चुम्बितुमुद्यतः, न तु वस्तुत एव चुम्बितवान्, "शयनाधरपानादि" इत्यादिना दर्पणकृदादिभिस्तन्निषेधात् "कथमप्युन्नमितं न चुम्बितं तु" इति वक्ष्यमाणाच्चेति बोध्यम्।

एतेन शकुन्तलया पूर्वं ध्वनितस्याप्यर्थस्य क्रियाद्वारैव राज्ञा उत्तरं दत्तमिति महाकविशिरोमणिना परमचमत्कारित्वयैवेदं निबद्धमिति समालोचनीयम्।

(च) शकु इति। वक्त्रं ढौकते राजकर्त्तव्यचुम्बननिवारणाय हस्ताङ्गुलिभिः मुखमावृणोति। "अत्यन्ताभिमतेऽपि वस्तुनि विधियोषां निषेधात्मकः" इति न्यायात् अभिमतमपि चुम्बनं मुखावरणेन निषिद्धमित्यवधेयम्।

यद्यपि "टौकृ ढौकृ शब्दे" इति ढौकधातुः शब्दार्थे पठितः, तथापि "मुहुरङ्गुलिसंवृताधरोष्ठम्" इति वक्ष्यमाणात् धातूनामनेकार्थत्वादत्र आवरणार्थे मन्तव्यः। अतएव सकर्म्मकत्वमपि।

---

(घ) शकुन्तला। (ঈষৎ হাস্যের সহিত) 'ইহাতে সন্তোষ না হইলে কি করে?।

(ঙ) রাজা। ইহা করে। (এই বলিয়া চুম্বন করিতে প্রবৃত্ত হইলেন।)

(চ) শকুন্তলা। (অঙ্গুলীদ্বারা মুখ আবৃত করিল।)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। कथं दत्त्वा ससम्भ्रमम्। अज्जउत्त! एसा

(क) चक्रवाकवधु! आमन्त्रयस्व सहचरम्, ननु उपस्थिता रजनी।

(ख) अन्तरालगता अनसूया प्रियंवदा च दूरादागच्छन्तीं गौतमीमवलोक्य दु-
ष्यन्तमपसारयितुं शकुन्तलां सङ्केतयति नेपथ्य इति। हे चक्रवाकवधु! चक्रवा-
चक्रवाकि! अन्यत्र दुष्यन्तवधु! शकुन्तले! सहचरं सहचरत्वेनैकत्रावस्थितं
चक्रवाकं दुष्यन्तञ्च, सहचरत्वेनात्यन्तसन्निहिततया सहसा गौतम्युपस्थितौ तं
मशक्यमिति दुष्यन्तपक्षे सहचरपदप्रयोगस्याशयः, आमन्त्रयस्व सादरमामन्त्र
प्रियजनस्य प्रस्थानकाले सादरामन्त्रणौचित्यादित्यभिप्रायः। ननु कथमामन्त्र्य विसृ
त्याह नन्वित्यादि। ननु यस्मात्, रजनी चक्रवाकदम्पत्योर्वियोजिका रात्रिः
युवयोः साहचर्यदर्शने अनर्थघटिका गौतमी, उपस्थिता। आत्मनोर्विर
रात्रेरुपस्थितौ चक्रवाक्या चक्रवाकस्य प्रस्थानकालीनामन्त्रणमुचितमेवेति एकत्र
अन्यत्र तु गौतमी आगत्य यदि सहचरभावेनैव दुष्यन्तं पश्येत्, तदा महद
घटयेत्, अतः प्रागेवामन्त्र्य दुष्यन्तस्य विसर्जनं शकुन्तलाया उचितमित्याशयः।

"परिणदो दिवसो" "सायन्तने सवनकर्मणि" इत्यनयोर्वच्यमाणतया तदानीं
आगतप्रायेति सुष्ठूक्तं उपस्थिता रजनीति।

अत्र द्व्यर्थवचनविन्यासात् उभयपक्षेऽपि सुसम्बद्धत्वात् काव्ये योजना
दुष्यन्तस्यापसारणात्मकप्रधानार्थान्तरसूचनाच्च इदं साहित्यदर्पणपरिगणितं
पताकास्थानम्। यथा तत्रैव—

"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकन्तु तत्॥
द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम्॥"

(ख) নেপথ্যে। হে চক্রবাকবধূ! সাদর সম্ভাষণ করিয়া সহ
বিদায় দাও। যে হেতু, রাত্রি উপস্থিত হইয়াছে।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तादकस्सस्स धम्मकणीअसी मम वुत्तन्तोपलम्भणणिमित्तं अज्जा गोदमी आअच्छदि ; ता विड़वान्तरिदो होहि (१)। (ज)

राजा। तथा। इत्येकान्ते स्थितः (२)। (झ)

ततः प्रविशति पात्रहस्ता गौतमी (३)। (च)

(ज) आर्य्यपुत्र ! एषा खलु तातकण्वस्य धर्म्मकनीयसी मम वृत्तान्तोपलम्भन-निमित्तम् आर्य्या गौतमी आगच्छति ; तद्विटपान्तरितो भव।

(ज) शकु इति। कर्णं दत्त्वा 'चक्रवाकवधु' इत्यादि वाक्यं प्रति कर्णं सम्प्रेष्य, ससम्भ्रमं सत्वरम्। धर्म्मकनीयसी धर्म्मतः कनिष्ठा भगिनी न तु वस्तुत एव कनिष्ठा भगिनीत्याशयः, गौतमस्यापत्यं स्त्री गौतमी, मम वृत्तान्तस्य उपलम्भननिमित्तम्-उपलम्भार्थम्। तत् तस्मात्, विटपैः तरुलताशाखाभिः अन्तरित आवृतदेहः। अन्यथा सा आगत्य भवन्तं यदि पश्येत् तदा महान्तमनर्थं घटयेदिति भावः।

अत्र विद्रवो नाम गर्भसन्धेरङ्गम्। तथा च दर्पणे—

"शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः।"

(ज) শকুন্তলা। ( কাণ দিয়া ব্যস্ততার সহিত ) আর্য্যপুত্র ! এই পিতা কণ্বের ধর্ম্মতঃ কনিষ্ঠা ভগিনী আর্য্যা গৌতমী আসিতেছেন ; অতএব আপনি তরুশাখায় আবৃত হউন।

(१) शकुन्तला। ससम्भ्रमम्। पौरव ! असंशयं मम शरीरवृत्तान्तोप-लम्भस्य अज्जा गोतमी इधो एव्व आअच्छइ। दाव विड़पान्तरिदो होसु।

(२) राजा। तथा। आत्मनमावृत्य तिष्ठति।

(३) गौतमी सख्यौ च। सख्यौ। इदो इदो अज्जा गोदमी। गौतमी। शकुन्तलामुपेत्य। जादे ! अवि लहुसन्तावाइं अङ्गाइं ?। शकुन्तला। अत्थि मे विसेसो। गौतमी। इमिणा दव्भोदएण णिराबाहं एव्व दे सरीरं होहिइ। शिरसि शकुन्तलामभ्युक्ष्य। वच्छे ! परिणदो दिवसो, एहि उड़अं एव्व गच्छामो। प्रस्थिताः।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

গৌতমী। জাদে! অচ্চাহিদং সুণিঅ আঅদা; এ[illegible]
শান্তিউদঅং। দৃষ্ট্বা সমুত্থাপ্য চ। দুধ দেবদাসহা[illegible]
চিট্ঠসি ?। (ট)

শকু। দাণিং জ্জেব অণসূআপিঅংবদাও মা[illegible]
ওদীণ্ণাও। (ঠ)

(ট) জাতে! অত্যাহিতং শ্রুত্বা আগতা ; এতত্ শান্ত্যুদকম্। দুহ দৈবতা[illegible]
তিষ্ঠসি।

(ঠ) ইদানীমেব অনসূয়াপ্রিয়ংবদে মালিনীমবতীর্ণে।

(ঝ) রাজেতি। তথা তদেব করোমীত্যর্থঃ। একান্তে রহসি।

(ঞ) ততইতি। পাত্রং জলভাজনং হস্তে যস্যাঃ সা।

(ট) গৌতমীতি। জায়তে ইতি জাতা আত্মজাতুল্যা তত্সম্বোধনম্। অ[illegible]
তব শরীরসন্তাপজনিতং মহাভয়ম্। আগতা অহমিতি শেষঃ। শান্ত্যুদকম্ [illegible]
সন্তাপশান্তিকরং জলম্, ময়া ত্বদর্থমানীতমিতি শেষঃ। দৃষ্ট্বা অ[illegible]
শকুন্তলায়াঃ সহায়ো বর্ত্ততে ন বেতি পরীক্ষার্থং সর্বতো বিলোক্য, সমুত্থাপ্য [illegible]
শকুন্তলাম্ উটজং নেতুং দণ্ডায়মানীকৃত্য। দৈবতাসহায়িনী সহচরী [illegible]
একাকিনীত্যর্থঃ। কাকুস্বরেণ প্রশ্নো ব্যজ্যতে।

"অত্যাহিতং মহাভীতিঃ কর্ম্ম জীবানপেক্ষি চ" ইত্যমরঃ।

(ঝ) রাজা। তাহাই। (এই বলিয়া গুপ্তস্থানে থাকিলেন।)

(ঞ) তদনন্তর পাত্রহস্তে গৌতমীর প্রবেশ।

(ট) গৌতমী। বৎসে! মহাভয়ের কারণ শুনিয়া আসি[illegible]
এই শান্তির জল। (দেখিয়া, শকুন্তলাকে উঠাইয়া) এখানে [illegible]
দেবতাসহায়ে রহিয়াছিস্।

(ঠ) শকুন্তলা। অনসূয়া আর প্রিয়ংবদা এখনই মালিনী[illegible]
গিয়াছে।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गौतमी । शान्त्युदकेन शकुन्तलामभ्युक्ष्य । जादे ! णिराबाधा मे चिरं जीव । अवि लहुसन्दावाइं अङ्गाइं ? । इति स्पृशति । (ड)

शकु । अज्जो ! अत्थि विसेसो । (ढ)

गौतमी । परिणदो दिअसो ; ता एहि उडअं ज्जेव गच्छह्म । (ण)

---

(ड) जाते ! निराबाधा मे चिरं जीव । अपि लघुसन्तापानि अङ्गानि ? ।

(ढ) आर्ये ! अस्ति विशेषः ।

---

(ठ) शकु इति । मालिनीं नदीम्, अवतीर्य्य जलमानेतुं गते ।

(ड) गौतमीति । निराबाधा एतच्छान्त्युदकाभ्युक्षणादेव निष्पीड़ा सती । मे मत्सम्बन्धिनी त्वम् । अपिशब्दः प्रश्ने । लघुः शान्त्युदकाभ्युक्षणात् अल्पीभूतः सन्तापो येषु तानि तथाविधानि, जातानि किमिति तात्पर्य्यम् । इति उक्त्वा स्पृशति शकुन्तलाया अङ्गानीति शेषः ।

अत्र सान्त्वा जलदानात् संग्रहो नाम गर्भसन्धेरङ्गम्—"संग्रहः पुनः । सामदानार्थसम्पन्नः" इति दर्पणलक्षणात् ।

(ढ) शकु इति । विशेषः पूर्वसन्तापस्य किञ्चिद्वैलक्षण्यम् उपशम इति यावत्, अस्ति भूतः । उत्पत्त्याव्यवहिताव्यवहितत्वात् अस्त्यर्थः, अतीतसामीप्ये च वर्त्तमाना ।

(ण) गौतमीति । परिणतः अवसितः । उटजमेव पर्णशालामेव । एकाकिन्या बालायास्तवावस्थानस्य असङ्गतत्वादिति भावः ।

"पर्णशालोटजोऽस्त्रियाम्" इत्यमरः ।

---

(ড) গৌতমী । ( শান্তির জলধারা শকুন্তলাকে সিক্ত করিয়া ) বৎসে! তুই আমার পীড়াবিহীন হইয়া চিরকাল জীবিত থাক্ । তোর শরীরের তাপ কমিয়াছে ত ? ( এই বলিয়া শকুন্তলার গাত্র স্পর্শ করিলেন । )

(ঢ) শকুন্তলা । কিছু উপশম হইয়াছে ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। कथञ्चिदुत्थाय स्वगतम्। हिअअ! पढमं सुहो-
मणोरहे कालहरणं करेसि; सम्पदं अणुभव दाव दु-
पदान्तरे प्रतिनिवृत्य प्रकाशम्। लदाघर! सन्दावहर! आमं-
तुमं पुणो वि परिभोअत्थं। इति निष्क्रान्ते (१)। (त)

(ण) परिणती दिवसः; तदेहि उटजमेव गच्छावः।

(त) हृदय! प्रथमं सुखोपनते मनोरथे कालहरणं करोषि, साम्प्र-
तावत् दुःखम्। लतागृह! सन्तापहर! आमन्त्रयामि त्वां पुनरपि परिभोगा-

(त) शकु इति। कथञ्चित् अनिच्छावशात् कष्टेनेत्यर्थः। मनोरथे
विषये प्रियतमे दुष्मन्ते, सुखोपनते दूतीप्रेषणाद्यनुष्ठानाभावात् अनायासेनैवोपनते
कालहरणं नानाच्छलेन सम्भोगे कालविलम्बम्। साम्प्रतं गौतम्यागमन-
सम्भवसमये, दुःखं मदनपीड़ाजनितकष्टम्। पदान्तरे पदक्षेपान्तरे कतिपयं
गत्वा अपरस्मिन् पदक्षेपे कर्त्तव्ये इत्यर्थः, तावत्पर्य्यन्तकरणानन्तरमेव, अ-
राजा यदि पुनर्नागच्छेदिति विभाव्येत्याशयः।

हे लतागृह! निकुञ्ज! पक्षे तदभ्यन्तरगत प्रियतम दुष्मन्त! हे स-
तापनाशक! एकत्र छायादानात् अपरत्र सम्भोगाशाजननादिति भावः।
परिभोगार्थं तवाभ्यन्तरे अवस्थानेन तवैव सम्भोगार्थं पक्षे सुरतसुखभोगा-
लतागृहं दुष्मन्तञ्च, आमन्त्रये सम्भाषे, आह्वये च। एकत्र आश्रयदातुः स-
मेवोचितमिति, अन्यत्र पुनः सम्भोगाय यथा दूतीप्रेषणादि न कर्त्तव्यं स्यात्, त-
तथा करणीयमित्यभिप्रायः।

(ण) গোতমী। দিন শেষ হইয়া আসিয়াছে; অতএ-
পর্ণশালাতেই যাই।

(१) शकुन्तला। आत्मगतम्। हिअअ! पढमं एव्व सुहोवण-
कादरभावं ण मुञ्चसि। साणुसअविहडिअस्स कहं दे संपदं सन्दावो।
स्थित्वा प्रकाशम्। लदावलअ! सन्तावहारअ! आमन्तेमि तुमं भूओ
भोअस्स। दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। पूर्वस्थानमुपेत्य सनिश्वासम्। अहो! विघ्नवत्यः प्रार्थितार्थसिद्धयः। मया हि—(थ)

७५ मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं, न चुम्बितं तु (१) ॥२६॥

अत्र सहसैव दुष्मन्तस्य गुणवदर्थसम्पत्तेः परमप्रीतिकरत्वाच्च इदं साहित्यदर्पणपरिगणितं प्रथमं पताकास्थानम्। तथा च दर्पणे—

"सहसैवार्थसम्पत्तिः गुणवत्युपचारतः।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम्॥"

ईदृग्ध्वनिनिर्म्माणं रमणीनामेव प्रायिकं परमचमत्कारि च। अतएवोक्तं नैषधे—"विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवदनं तदाकरः।"

निष्क्रान्ते गौतमीशकुन्तले इति शेषः।

(थ) राजेति। पूर्वस्थानं शिलातलम्। प्रार्थितानाम् अर्थानां विषयाणां सिद्धयः, विघ्नवत्यः प्रायेणैव सविघ्नाः। अहो इति विषादे। हि तथाहि।

मुहुरिति। मुहुरिति सर्वत्र सम्बध्यते मुहुर्वारं वारम्, अङ्गुलिभिः संवृतः

(ত) শকুন্তলা। (কষ্টে গাত্রোত্থান করিয়া স্বগত) হে হৃদয়! অভীষ্ট জন অনায়াসে উপস্থিত হইলে প্রথমে কালক্ষেপ করিয়াছ; এখন দুঃখ অনুভব কর। (কতিপয় পদক্ষেপের পর ফিরিয়া প্রকাশ্যে) হে সন্তাপনাশক! লতাগৃহ! আবারও সম্ভোগের জন্য তোমাকে আহ্বান করি। (এই বলিয়া উভয়ে চলিয়া গেল।)

(থ) রাজা। (পূর্ব্বস্থানে আসিয়া নিশ্বাস ত্যাগ করিয়া) হায়! প্রার্থিত বিষয়ের সিদ্ধি, বিঘ্নসঙ্কুলই হইয়া থাকে। কারণ—

(१) न चुम्बितं तत्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ক্ব নু খলু সম্প্রতি গচ্ছামি। অথবা, ইহৈব প্রিয়াপ-
ভুক্তে লতামণ্ডপে মুহূর্ত্তং তিষ্ঠামি। সর্বতোঽবলোক্য (১) (২)

তস্যাঃ পুষ্পময়ী শরীরলুলিতা শয্যা শিলায়ামিয়ং
কান্তো মন্মথলেখ এষ নলিনীপত্রে নখৈরর্পিতঃ।

চুম্বননিবারণায় আবৃতঃ অধরোষ্ঠঃ চুম্বনস্থানত্বাৎ নিম্নোষ্ঠো যস্য তৎ, প্রতিষেধ-
স্য চুম্বননিষেধকোচ্চারিতবর্ণৈঃ বিক্লবং বিহ্বলং তথাপি অভিরামং মনোহরম্, ... স্কন্ধোপরি বিবর্ত্ততে চুম্বননিবারণায়ৈব পরাবর্ত্তত ইতি অংসবিবর্ত্তি, ... লোমান্যনয়োঃ সন্তীতি পক্ষ্মলে সুন্দরত্বাৎ প্রশস্তলোমযুক্তে অক্ষিণী চক্ষুষী যস্যাঃ শকুন্তলায়াঃ, মুখং বদনম্, কথমপি কষ্টেন উন্নমিতং নয়নপরিষ্কারত্বেন... উত্তোলিতম্, তু কিন্তু, ন চুম্বিতম্। হন্ত! মহানিব মমায়ং প্রমাদোঽভূদিতি ...

অত্র "ওষ্ঠাধরৌ তু রদনচ্ছদৌ দশনবাসসী" ইত্যমরোক্তেঃ "লভতেঽধরবিম্ব... পদমস্যা রদনচ্ছদো বদত্" ইতি নৈষধোক্তেশ্চ অধরোষ্ঠপদয়োঃ পর্য্যায়তয়া আপাততঃ পুনরুক্ততাপ্রতীতেঃ পরঞ্চ অধরপদস্য নিম্নার্থকতয়া তৎসমাধানাৎ ভিন্নাকারত্বেন পুনরুক্তবদাভাসোঽলঙ্কারঃ। তথা পশ্চাত্তাপো নাম নাট্যালঙ্কারশ্চ—"মোহাবধীরি... পশ্চাত্তাপঃ স এব তু" ইতি দর্পণলক্ষণাৎ। উপবৃত্তং নাম বৃত্তম্ ॥৩৬॥

(৫) ক্বেতি। প্রিয়য়া শকুন্তলায় পরিভুক্তে ব্যবহৃতে।

শকুন্তলা অঙ্গুলীদ্বারা বার বার নীচের ওষ্ঠখানি আবৃত করিয়া নিষেধবাক্য উচ্চারণ করিবার সময়ে মুখমণ্ডল বার বার বিহ্বল ... মনোহর হইয়াছিল এবং তাহা বার বার কাঁধের উপরে ফি... গিয়াছিল, সুনয়না শকুন্তলার এহেন মুখমণ্ডল আমি কোন... উত্তোলন করিয়াছিলাম, কিন্তু চুম্বন করি নাই ॥৩৬॥

(৫) এখন কোথায় যাই; অথবা এই প্রিয়াভুক্ত লতাম... কিছু কাল থাকি। (সকল দিকে দৃষ্টিপাত করিয়া)

(১) প্রিয়াপরিভুক্তমুক্তে লতাবলয়ে মুহূর্ত্তং স্থাস্যামি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि (१) ॥३७॥

विचिन्त्य । अहो धिगस्मस्यक् चेष्टितं प्रियां समासाद्य काल-
हरणं कुर्वता मया । तदिदानीम्—(घ)

ननु कथमत्र तिष्ठसीत्याह तस्या इति । तस्याः शकुन्तलायाः, शरीरलुलिता सन्तापान्मुहुः पार्श्वपरिवर्त्तनेन देहविमर्द्दिता, इयं दृश्यमाना, शिलायां प्रस्तरखण्डोपरि, पुष्पमयी शय्या, नलिनीपत्रे पद्मलतापत्रे, नखैः अर्पितो दत्तः लिखित इत्यर्थः, कान्तो मनोहरः, एष मन्मथलेखः "तुज्झ ण आणे हिअअं" इत्यादिरूपा मदनसम्बन्धिनी लिपिः एष मन्मथलेखस्तु अक्षरपरिचयाभावादनवधानत्वाद्वा गौतम्या न परिलक्षित इत्यवधेयम् । हस्तात् भ्रष्टं पतितम्, इदं बिसाभरणं मृणालवलयम्, सर्वत्र तिष्ठतीति शेषः । इति एतेषु पदार्थेषु, आसज्यमाने प्रियाया वस्तुत्वादेव स्वयमेव सम्बध्यमाने ईक्षणे चक्षुषी यस्य स तथोक्तः अहम्, शून्यात् प्रियारहितादपि, वेतसगृहात्, सहसा निर्गन्तुं न ईशः न समर्थोऽस्मि ; एतैः पदार्थैरेवाकर्षणात्, विलम्बे तु उपायाभावात् निर्गन्तुं शक्यामित्यदेति भावः ।

अत्र निर्गमनाभावं प्रति आसज्यमानेक्षणपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्य-लिङ्गम्, शून्यत्वरूपे कारणे सत्यपि तत्कार्य्यभूतनिर्गमनानुत्पत्तेर्विशेषोक्तिः, अशून्यात् का कथा शून्यादपि इत्यर्थस्यापतनादर्थापत्तिश्च इत्येतेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः । शार्दूलविक्रीड़ितं वृत्तम् ॥३७॥

(घ) विचिन्त्येति । वितर्क्येति तात्पर्य्यम । अहो धिक् इति विषादे ।

প্রস্তরখণ্ডের উপরে, শকুন্তলার দেহমর্দ্দিত এই পুষ্পশয্যা রহিয়াছে ; নখদ্বারা পদ্মপত্রে লিখিত মনোহর এই কামলিপি দেখা যাইতেছে এবং শকুন্তলার হস্ত হইতে নিপতিত এই মৃণালবলয় রহিয়াছে ; এই সকল বস্তুতে আমার দৃষ্টি সংসক্ত হওয়ায় আমি এই শূন্য বেতসগৃহ হইতেও হঠাৎ নির্গত হইতে পারিতেছি না ॥৩৭॥

(१) असज्जमानेक्षणो…शक्नोमि शून्यादपि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुन-
र्न कालं हास्यामि, प्रकृतिदुरवापा हि विषयाः।
इति क्लिष्टं विघ्नैर्गणयति च मे मूढ़हृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव (१) ॥३८॥

प्रियां शकुन्तलाम्, समासाद्य प्राप्य, कालहरणं रमणे कालविलम्बम्, कुर्वता असम्यक् चेष्टितम् असङ्गतं कृतम्। विलम्बकरणमेव असङ्गतं कृतम्, सद्यो रमणमुचितमासीदिति भावः।

अत्र वितर्कबोधकवाक्योपन्यासात् रूपं नाम गर्भसन्धेरङ्गम्—"रूपं वाक्यं वितर्कवत्" इति दर्पणलक्षणात्।

रह इति। सुवदना सुन्दरमुखी शकुन्तला, यदि पुनरपि, रहो निर्जने प्रत्यासत्तिं मम सन्निधानम्, यास्यति प्राप्स्यति, तदा कालं न हास्यामि तादृशावसरं न परित्यक्ष्यामि। हि यस्मात्, विषया भोग्यपदार्थाः, प्रकृत्या स्वभावेनैव दुर्लभाः। अतएव प्राप्तिमात्रमेव भोग उचित इत्याशयः। विघ्नैः गौतमीप्रभृत्यन्तरायैः, क्लिष्टं लिप्सितसुखालाभात् दुःखितम्, मे मम मूढ़हृदयं कर्त्तव्यावधारणे चित्तं कर्त्तृ, इदानीं प्रियाया अप्राप्तिकाले, इति इत्थम्, गणयति विविनक्ति। अथ च, प्रियायाः शकुन्तलायाः, प्रत्यक्षं समक्षम्, तथा तादृक्, किमपि अनिर्वचनीयं कातरमिव कर्त्तव्यविह्वलमिव, आसीदिति शेषः; त्वरितरमणप्रत्यूहजननादित्यभिप्रायः।

अत्र प्रथमार्द्धे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। यदीत्युक्त्वा तदेत्यनुक्तावपि तस्य स्वभावादेवावगतेर्न न्यूनपदत्वदोषः; "क्वचिन्न दोषो न गुणः" इति साहित्यदर्पणात्।

"विविक्त विजनाच्छन्ननिःशलाकस्तथा रहः। रहश्चोपांशुचालिङ्गे" इत्यमर-अव्ययत्वादलिङ्गे इत्यर्थः। शिखरिणी वृत्तम् ॥३८॥

(ধ) (চিন্তা করিয়া) হায়! আমি প্রিয়তমাকে পাইয়া কালক্ষেপ করিয়া উপযুক্ত কার্য্য করি নাই। অতএব এখন—

(१) क्वचित् श्लोकोऽयं नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेपथ्ये । भो भो राजन् ! (१) (न)

सायन्तने सवनकर्म्मणि सम्प्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः ।
छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम् (१) ॥३८॥

(न) नेपथ्ये इति । तपस्विनामुक्तिरियम् ।

सायन्तने इति । सायन्तने सन्ध्याकालीने, सवनकर्म्मणि यज्ञकार्य्ये, सम्प्रवृत्ते आरब्धे सति, हुताशनवतीं प्रज्वलितवह्निम्, वेदिं यज्ञभूमिम्, परितः समन्तात् वेद्याः सर्व्वासु दिक्षु इत्यर्थः प्रकीर्णाः पिशिताशनैरेव विक्षिप्ताः, बहुधा नानाप्रकारैश्च हुङ्कार-करणकङ्कालवर्षणादिना, भयम्, आदधाना जनयन्त्यः, सन्ध्याभ्रकूटवत् सन्ध्याकालीन-मेघपुञ्जवत् कपिशाः कृष्णपीतवर्णाः, पिशिताशनानां राक्षसानाम्, छायाः, चरन्ति इतस्ततो भ्रमन्ति । अतएव तेषां विताड़नाय सत्वरमागम्यतामिति भावः ।

अत्र सन्ध्याभ्रकूटकपिशा इति समासगता लुप्तोपमा, तथा पिश पिश इति व्यञ्जनाना-मनेकधा सकृत् साम्यात् छेकानुप्रासः, पुनस्तालव्यशकारत्रयोपादानात् वृत्त्यनुप्रासश्च ; इत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः ।

"यावज्जीवमग्निहोत्रं जुहोति, यदग्नये च प्रजापतये च सायंप्रातर्जुहोति" इति श्रुतेः सायन्तन इति हुताशनवतीमित्यनेन छायादर्शनसम्भव उक्त इति न अपुष्टार्थत्वदोषः ।

সুমুখী শকুন্তলা যদি পুনরায় নির্জ্জন স্থানে নিকটে উপস্থিত হয়, তবে আর কালক্ষেপ করিব না। কারণ, বিষয়সম্ভোগ স্বভাবতই দুর্লভ ; বিঘ্নবশতঃ দুঃখিত আমার মূঢ় মন এখন এইরূপ বিবেচনা করিতেছে ; অথ চ প্রিয়তমার সমক্ষে তখন যেন অনির্বচনীয় কাতর হইয়াছিল ॥৩৮॥

(ন) নেপথ্যে। মহারাজ! মহারাজ!

(१) भाकाशे राजन् ! । (२) परितः प्रयस्ताः ।···सन्ध्यापयोदकपिशाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। আকর্ণ্য সাবষ্টম্ভম্। ভো ভোস্তপস্বিনঃ। মা মা ভৈষ্ট, অয়মহমাগত এব (১)। ইতি নিষ্ক্রান্তঃ। (প)

## তৃতীয়োঽঙ্কঃ ॥০॥

"ক্রতৌ স্নানে চ সবনম্" ইতি ত্রিকাণ্ডশেষঃ। "অভ্রং মেঘো বারিবাহঃ" ই "কূটোঽস্ত্রী নিশ্চলে রাশৌ" ইত্যাদি মেদিনী।

সায়ং (কালে) ভবতীতি সায়ন্তনং "সায়ং চিরম্" ইত্যাদিনা ত্নট্। পরিত ইত্যস্য যোগে "ততোভয়াভিপরিযুক্তৈঃ" ইত্যনেন দ্বিতীয়া। পিশিতং মাংসম্ পিশিতাশনা "নন্দ্যাদিভ্যঃ" ইতি যুপ্রত্যয়ঃ। বসন্ততিলকা বৃত্তম্ ॥৩৫॥

(প) রাজেতি। অবষ্টম্ভেন ঔর্জিত্যেন সহেতি সাবষ্টম্ভম্। অবপূর্বক "অবাদৌর্জিত্যনিকটাশ্রয়েষু" ইতি ষত্বম্। মা ভৈষ্ট রাক্ষসেভ্যো ভয়ং মা সম্ভ্রমে দ্বিরুক্তিঃ; "মাযোগে অদ্যতনী" ইতি মাযোগে ভীধাতোরদ্যতন্যা বহুবচনম্। অয়মহমাগত এব রাক্ষসতাড়নায়েতি শেষঃ। অতএব মা ভৈষ্ট ই অত বীটকং নাম গর্ভসন্ধেরঙ্গম্—"বীটকং পুনঃ। সংরম্ভবাক্" ইতি দর্পণ ইতি মহামহোপাধ্যায় ভারতাচার্য্য শ্রীহরিদাসসিদ্ধান্তবাগীশভট্টাচার্য্যবিরচি অভিজ্ঞানশকুন্তলটীকায়ামভিজ্ঞানকৌমুদ্যাং তৃতীয়াঙ্কবিবরণং সমাপ্তম্ ॥০॥

---

সন্ধ্যাকালীন যজ্ঞ আরম্ভ হইলে, অগ্নিযুক্ত যজ্ঞবেদির চ বিক্ষিপ্ত সন্ধ্যাকালের মেঘসমূহের ন্যায় পিঙ্গলবর্ণ ও ভয়জনক গণের নানাপ্রকার ছায়া বিচরণ করিতেছে ॥৩৫॥

(প) রাজা। (শুনিয়া তেজের সহিত) ওহে ওহে তপ আপনারা ভীত হইবেন না, ভীত হইবেন না; এই আমি আসি (এই বলিয়া চলিয়া গেলেন।)

## তৃতীয় অঙ্ক ॥০॥

---

(১) রাজা। অয়মহমাগচ্ছামি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# चतुर्थोऽङ्कः ।

—०:*:०—

ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ । (क)

अनसूया । हला पिअंवदे ! जइ वि गन्धव्वेण विवाह-विहिणा णिव्वुत्तकल्लाणा पिअसही सउन्तला अणुरूवभत्ति-भाइणी संवुत्ता, तहवि मे ण णिव्वुदं हिअअं (१) । (ख)

(ख) हला प्रियंवदे ! यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता, तथापि मे न निर्वृतं हृदयम् ।

(क) तत इति । कुसुमावचयम् उद्यानस्थतरुभ्यः पुष्पचयनम् । सख्यौ अनसूया-प्रियंवदे ।

(ख) अनेति । गान्धर्वेण 'त्वं मे भार्य्या, त्वं मे पतिः' इति नियमपूर्वकेण, "गान्धर्वः समयान्मिथः" इति याज्ञवल्क्यवचनात्, विवाहविधिना परिणयव्यापारेण, निर्वृत्तं निष्पन्नं कल्याणं मङ्गलम् अभिप्रेतार्थसिद्धिर्यस्याः सा । अनुरूपं भर्त्तारं भजत इति अनुरूपभर्तृभागिनी "युजभज" इत्यादिना घिणुन् । निर्वृतं सुस्थम् ।

एतदारभ्य षष्ठाङ्कसमाप्तिपर्य्यन्तो विमर्षसन्धिः । तथा चात्र शकुन्तलादुष्मन्तयो-र्गान्धर्वविवाहनिष्पत्त्या अपायाभावात् निश्चितप्राप्तिरूपा नियताप्तिर्नाम चतुर्थी कार्य्यावस्था निबद्धा । यथा दर्पणे—

"अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।"

तथा शकुन्तलादुष्मन्तयोः परस्परप्राप्तिरूपं यन्मुख्यफलं तदुपायभूतस्यानुरागस्य

(क) তদনন্তর পুষ্পচয়ন অভিনয় করতঃ সখীদ্বয়ের প্রবেশ ।

(१) पिअंवदे ! जइवि गन्धव्वेण विहिणा णिव्वुत्तकल्लाणा सउन्तला अणुरूव-भत्तुगामिणी संवुत्ते ति णिव्वुदं मे हिअअं, तहवि एत्तिअं चिन्तणीअं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियंवदा। कथं विअ ?। (ग)

अन। अज्ज सो राएसी इट्ठिपरिसमत्तीए इसिहिं वि[illegible]ज्जिदो अत्तणो णअरं पविसिअ अन्तेउरसमागमादो इमं ज[illegible] सुमरेदि ण वेत्ति (१)। (घ)

(ग) कथमिव ?।

(घ) अद्य स राजर्षिः इष्टिपरिसमाप्त्या ऋषिभिर्विसर्जितः आत्मनो नगरं [illegible] अन्तःपुरसमागमादिमं जनं स्मरति न वेति।

गान्धर्वविवाहनिष्पत्त्या गर्भसम्प्रेक्षया अधिकोद्भेदः ; स च दुर्वासःशापेन [illegible] विस्मरणेन च सान्तरायश्च। यथा तत्रैव—

"यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः॥"

दर्पणकृतापीदमेवोदाहृतम्। अस्य चापवादादीनि त्रयोदशाङ्गानि [illegible] दर्शयिष्यामः।

(ग) प्रियमिति। निर्वृतिहेतौ सत्यपि कथमिव न निर्वृतमित्यर्थः।

(घ) अनेति। स राजर्षिर्दुष्मन्तः, इष्टिपरिसमाप्त्या यज्ञसमापनेन [illegible] विसर्ज्जितः नगरगमनायानुमतः। अन्तःपुरसमागनात् अन्तःपुरस्थरमणी[illegible] इमं जनं शकुन्तलाम्, स्मरति न वा, इति हेतोः, मम हृदयं न निर्वृत[illegible] नागरीसम्भोगसुखलाभे वनेचर्य्या विस्मरणस्यैव सम्भवादित्याशयः।

(খ) অনসূয়া। প্রিয়ংবদা! যদিও গান্ধর্ব্ববিবাহে [illegible] শকুন্তলার মঙ্গল হইয়াছে এবং সে অনুরূপ ভর্ত্তার হাতে প[illegible] তথাপি আমার মন সুস্থ হইতেছে না।

(গ) প্রিয়ংবদা। কেন ?।

(१) अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिदो अत्त[illegible] पविसिअ अन्तेउरसमागओ इदोगअं वुत्तन्तं सुमरदु वा ण वत्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रिय'। एत्थ दाव वीसत्था होहि। णहि तादिसा आकिदि-विसेसा गुणविरहिणो होन्ति। एत्तिअं उण चिन्तणीअं, तादो तीत्थजात्तादो पड़िणिउत्तो इमं वुत्तन्तं सुणिअ ण आणि कि' पड़िवज्जिस्सदित्ति (१)। (ङ)

(ङ) अत्र तावत् विस्त्रब्धा भव। नहि तादृशा आकृतिविशेषा गुणविरहिणो भवन्ति। एतावत् पुनश्चिन्तनीयम्, तातस्तीर्थयात्रात: प्रतिनिवृत्त: इमं वृत्तान्तं श्रुत्वा न जानी कि' प्रतिपत्स्यत इति।

(ङ) प्रियमिति। अत्र दुष्मन्तकर्तृ'कशकुन्तलाभरणे, विस्त्रब्धा नि:सन्देहा। हि यस्मात्, तादृशा दुष्मन्तसदृशा:, आकृतिविशेषा उत्कृष्टाकारा जना:, गुणं कृतकार्य्य-भरणादिकं धर्म्मं विरहयन्ति त्यजन्तीति तादृशा न भवन्ति। पुन: किन्तु, एतावत् एतत्, चिन्तनीयं संशयनीयम्। तात: कण्व:। इमं वृत्तान्तं दुष्मन्ताय शकुन्तलाया आत्मदानवार्त्ताम्। कि' प्रतिपत्स्यते कि' मनसि करिष्यति, रुष्टस्तुष्टो वा भविष्य-तीत्यर्थ:।

(ঘ) অনসূয়া। যজ্ঞ সমাপ্ত হওয়ায় মুনিরা সেই রাজর্ষিকে আজ বিদায় দিয়াছেন; এখন তিনি রাজধানীতে প্রবেশ করিয়া অন্তঃপুর-বাসিনী রমণীগণের সহিত মিলনের পর এই ব্যক্তিকে স্মরণ করেন কি না এই জন্য।

(ঙ) প্রিয়ংবদা। এবিষয়ে তুমি বিশ্বস্ত হও; কারণ, দুষ্মন্তের ন্যায় উৎকৃষ্ট আকৃতির লোক গুণহীন হয় না। তবে ইহা চিন্তা করি যে, পিতা কণ্ব তীর্থযাত্রা হইতে ফিরিয়া আসিয়া এই ঘটনা শুনিয়া, কি মনে করিবেন।

(१) प्रियंवदा। वीसद्धा होसु। ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति। तदो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं परिवज्जिस्सइ त्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অন। জধা মং পুচ্ছসি, তধা অভিমদং তাদস্স (১)।

প্রিয়ং। কধং বিঅ ?। (ছ)

অন। অণুরুবস্স বরস্স হত্থে কন্নআ পড়িবাদণীঅ অঅং দাব পঢ়মো কপ্পো। তং জই দেব্বং সম্পাদেদি, ণং কদ গুরুঅণো (২)। (জ)

(চ) যথা মাং পৃচ্ছসি, তথা অভিমতং তাতস্য।

(ছ) কথমিব ?।

(জ) অনুরূপস্য বরস্য হস্তে কন্যকা প্রতিপাদনীয়েতি, অয়ং তাবৎ প্রথমঃ কল্পঃ। তং যদি দৈবং সম্পাদয়তি, ননু কৃতার্থো গুরুজনঃ।

(চ) অনেতি। যথা মাং পৃচ্ছসি 'ইমং' বৃত্তান্তং শ্রুত্বা তাতঃ কিং প্রতি... ইতি জিজ্ঞাসসে, তথা তাদৃক্ বৃত্তমেব দুষ্মন্তশকুন্তলাজনায় আত্মদানমেবেত্যর্থঃ ... কণ্বস্য অভিমতম্।

(জ) অনেতি। প্রতিপাদনীয়া দাতব্যা, ইতি প্রথমঃ কল্প উত্তমঃ পক্ষঃ। কর্তৃ, তং প্রথমং কল্পম্। ননু নিশ্চয়ে। তদা গুরুজনস্তাতাদিঃ কৃতার্থঃ... সম্পাদিতস্তোদ্দেশ্যঃ। অতস্তাতস্য রোষসন্দেহো ন কর্ত্তব্য ইতি ভাবঃ।

(চ) অনসূয়া। আমার নিকট যে রূপ জিজ্ঞাসা করিতেছ, ... সেইরূপই মত।

(ছ) প্রিয়ংবদা। কি রূপ ?।

(জ) অনসূয়া। কন্যাকে অনুরূপ বরের হাতে দিতে ... ইহাই প্রথম কল্প; তাহা যদি বিধাতা সম্পাদন করিলেন, ... গুরুজন চরিতার্থই হইলেন।

(১) অনসূয়া। জহ মহং দেক্খামি তহ তস্স অণুমদং হোত।

(২) অনুসূয়া। গুণজণস্স কণ্ণআ পড়িবাদণীঅ ত্তি অঅং দাব পঢ়মো ... তং জহ দেব্বং এব্ব সংপাদেই, ণং অপ্পআসেণ কঅত্থো গুরুঅণো।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

প্রিয়ং। এবম্মেদং। পুষ্পভাজনং বিলোক্য। সহি! অব-চিদাইং ক্খু বলিকম্মপজ্জত্তাইং কুসুমাইং (১)। (ঝ)

অন। ণং সউন্তলাএ বি সোহগ্গদেবদাসো অচ্চিদব্বাও, তা অবরাইং বি অবচিণুহ্ম (২)। (ঞ)

প্রিয়ং। জুজ্জদি। ইতি তদেব কর্ম্মাভিনয়তঃ (৩)। (ট)

(ঝ) এবমেতৎ। সখি! অবচিতানি খলু বলিকর্ম্মপর্য্যাপ্তানি কুসুমানি।

(ঞ) ননু শকুন্তলায়া অপি সৌভাগ্যদেবতা অর্চ্চিতব্যাঃ তদপরাণ্যপি অবচিনুবঃ।

(ট) যুজ্যতে।

(ঝ) প্রিয়মিতি। এবমেতৎ ত্বয়া যদুক্তং তৎ সত্যমেবেত্যর্থঃ। পুষ্পভাজনং পুষ্পধৃতং পুষ্পপাত্রম্, বিলোক্য কিয়ন্তি পুষ্পাণি সঞ্চিতানীতি দৃষ্ট্বা। বলিকর্ম্মপর্য্যাপ্তানি পূজোপহারকার্য্যোপযুক্তানি। অত এতদধিকপুষ্পচয়নপ্রয়োজনাভাবাৎ ইদানীমাবয়ো-র্গমনমেবোচিতমিতি ভাবঃ।

"কামং প্রকামং পর্য্যাপ্তং নিকামেষ্টং যথেপ্সিতম্" ইত্যমরঃ।

(ঞ) অনেতি। নন্বিতি সম্বোধনে। সৌভাগ্যদেবতা ভর্ত্তৃপ্রিয়ত্বসম্পাদিকা দেবতা মঙ্গলচণ্ডিকাপ্রভৃতয়ঃ। অপরাণ্যপি পুষ্পাণি।

(ঝ) প্রিয়ংবদা। তাহা সত্য বটে। (পুষ্পপাত্র দেখিয়া) সখি! পূজার উপযুক্ত ফুল তোলা হইয়াছে।

(ঞ) অনসূয়া। শকুন্তলার সৌভাগ্যদেবতারও ত পূজা করিতে হইবে; তা আরও ফুল তুলি।

(ট) প্রিয়ংবদা। সঙ্গত বটে। (এই বলিয়া উভয়ে পুষ্পচয়নই অভিনয় করিতে লাগিল।)

(১) প্রিয়ংবদা। পুষ্পভাজনং বিলোক্য। সহি! অবচিদাইং বলিকম্মপজ্জ-ত্তাইং কুসুমাইং। (২) ণং পিঅসহীএ সউন্তলাএ সোহগ্গদেবদা অচ্চণীআ।

(৩) জুজ্জই। তদেব কর্ম্মারমেতে।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेपथ्ये। अयमहं भोः!। (ठ)

अन। कर्णं दत्त्वा। सहि! अदिधिणा विय णि-
दिदं (१)। (ड)

प्रियं। णं उड़ए सण्णिहिदा सउन्तला (२)। (ढ)

अन। आं, अज्ज उण असण्णिहिदा हिअएण। तं
भोदु, एत्तिकेहिं कुसुमेहिं पज्जोअणं (३)। इति प्रस्थिते।

(ड) सखि! अतिथिना इव निवेदितम्।

(ढ) ननु उटजे सन्निहिता शकुन्तला।

(ण) आं, अद्य पुनरसन्निहिता हृदयेन। तेन हि भवतु, एतावद्भिः
प्रयोजनम्।

---

(ट) प्रियमिति। युज्यते त्वदुक्तिरिति शेषः। तदैव पुष्पचयननैव।

(ठ) नेपथ्य इति। दुर्वाससः उक्तिरियम्।

(ड) अनेति। निवेदितं विज्ञापितं निजागमनमिति शेषः। अतएव ए...
तस्यास्तत्र गमनमावश्यकमित्याशयः।

(ढ) प्रियमिति। उटजे पर्णशालायाम्, सन्निहिता उपस्थिता। ...
अतिथिमभ्यर्थयिष्यतीति नावयोः कस्याश्चित्तत्र गमनावश्यकतेति भावः।

(ण) अनेति। आमिति स्मरणार्थमव्ययम्। पुनः किन्तु शरीरे...

---

(ঠ) নেপথ্য। ওহে! এই আমি উপস্থিত হইয়াছি।

(ড) অনসূয়া। (কাণ দিয়া) সখি! অতিথি যেন জানা...

(ঢ) প্রিয়ংবদা। পর্ণশালায় শকুন্তলাই রহিয়াছে।

---

(१)...अदिहिणं विय।

(२) णं उड़असण्णिहिदा सउन्तला। आत्मगतम्। अज्ज उण
असण्णिहिदा।

(३) अनसूया। होदु, अलं एत्तिएहिं कुसुमेहिं। प्रस्थिते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुनर्नेपथ्ये। आः, कथमतिथिं मां परिभवसि (१)। (त)

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् (२)।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥१॥

सन्निहिता, किन्तु हृदयेन असन्निहिता, हृदयस्य भर्त्तृसमीपे प्रस्थानादिति भावः। तेन हि एतज्जस्य जनस्यान्यत्वेनैव हेतुना। प्रयोजनं भवतु सिद्धं भवत्वित्यर्थः। प्रस्थिते प्रस्थातुमारमेते। आदिकर्म्मणि क्तः।

(त) पुनरिति। इयमपि नेपथ्यात् दुर्वाससः उक्तिः। आ इति कोपव्यञ्जकमव्ययम्। परिभवसि वचनोदग्रणात् नाद्रियसे ; इदमत्यन्तमनुचितमित्याशयः।

"आन्तु स्यात् कोपपीड़योः" "अनादरः परिभवः" इति चामरः।

विचिन्तयन्तीति। न विद्यते अन्यस्मिन् दुष्मन्तभिन्ने विषये मानसं मनो यस्याः सा तादृशी त्वम्, यं जनम्, विचिन्तयन्ती विशेषेण भावयन्ती सती, उपस्थितं समवागतम्, तपोनिधिं तपसामाधारम्, एतेनात्मनोऽतिमहत्त्वम् अनादरे दोषाधिक्यञ्च व्यज्यते ; मां दुर्वाससम्, न वेत्सि महर्षित्वेन न जानासि, प्रमत्तः अनवधानो जनः, प्रथमं कृतामभिहिताम्, कथां वाचमिव, स जनः बोधितोऽपि आत्मस्मरणे जनितबुद्धिरपि सन्, त्वाम्, न स्मरिष्यति। ममानादरणकरणस्य अयमेव दण्डो मया दत्तः, यत्स्मरणेन ममास्मरणं तत्कर्त्तृकनिजास्मरणदण्डेनौचित्यादिति भावः।

(ण) अनসূয়া। ও! আজ সে মনদ্বারা সন্নিহিত নাই। অতএব এইগুলিতেই প্রয়োজন সিদ্ধ হইবে। (এই বলিয়া প্রস্থান করিতে লাগিল।)

(ত) পুনরায় নেপথ্যে। আঃ! আমি অতিথি, আমাকে অনাদর করিতেছিস্।

(१) नेपथ्ये। आः, अतिथिपरिभाविनि!। (२)···तपोधनं वेत्सि।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियं। हद्धी हद्धी! तं ज्जेव संवुत्तं, जं चिन्तिदं। कस्सिं पि पूआरिहे अवरद्धा सुस्सहिअआ सउन्तला (१)। (थ)

(थ) हाधिक् हाधिक्! तदेव संवृत्तम्, यन्मया चिन्तितम्। कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया शकुन्तला।

अत्र पूर्णोपमालङ्कारः।

ननु "विवाहो भोजनं शापोत्सर्गौ मृत्यु रतं तथा" इत्यादिना दृश्यत्वेन शापनिषेधात् कथमत्र कविना शापो निबद्ध इति चेन्न दर्पणकारादिभिरभिहितं विष्कम्भकेतरस्थल एव शापनिबन्धननिषेधस्यैवाभिप्रेतत्वात्, अस्य तु विष्कम्भकान्तर्गतत्वात्। अन्यथा "शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः" इति दर्पणकाराद्युक्तविमर्शलक्षणस्यैवासङ्गतेरिति सुधीभिर्विभावनीयम्।

वंशस्थविलं वृत्तम् ॥१॥

(थ) प्रियमिति। हाधिगिति महाविषादे, तस्यातिशये द्विरुक्तिः। सञ्जातम्। चिन्तितमाशङ्कितम्। पूजार्हे सम्मानयोग्ये, कस्मिन्नपि जने, दुष्यन्ते पतिगतत्वात् तद्विरहितेव, अतएव अपराद्धा सम्मानाकरणात् कृतापराधा। का गतिरित्याशयः।

তুই অনন্য মনে যাহাকে চিন্তা করতঃ, উপস্থিত তপোনিধি ... জানিতে পারিতেছিস্ না; অস্থিরচিত্ত ব্যক্তি যেমন প্রথম ... স্মরণ করে না, সেইরূপ সে ব্যক্তিকে বুঝাইলেও সে তোকে ... করিবে না ॥১॥

(१) प्रियंवदा। हद्धी हद्धी, अप्पियं एव्वं संवुत्तं। कस्सिं पि ... अवरद्धा सुण्णहिअआ सउन्तला। (पुरोऽवलोक्य) णहु जस्सिं कस्सिं पि। दुव्वासो सुलहकोवो महेसी। तह सविअ वेअवलोप्फुल्लाए दुव्वाराए ... पिडन्तो। को अण्णो हुदवहादो दहिउं पभविस्सदि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অন। পুরোঽবলোক্য। ণ খ্খু জস্সিং কস্সিং পি, এসো দুব্বাসা সুলহকোবো মহেসী, তধা সবিঅ অবিরলপাদতুবরাএ গদীএ পড়িণিউত্তো। (দ)

প্রিয়ং। কো অণ্ণো হুদবহাদো পহবদি দহিদুং। তা গচ্ছ পাএসুং পড়িঅ ণিউত্তাবেহি। জাব সে অহং পি অগ্ঘো-দঅং উবকপ্পেমি (১)। (ধ)

(দ) ন খলু যস্মিন্ কস্মিন্নপি, এষ দুর্বাসাঃ সুলভকোপো মহর্ষিঃ, তথা শপ্ত্বা অবিরলপাদত্বরয়া গত্যা প্রতিনিবৃত্তঃ।

(ধ) কোঽন্যো হুতবহাৎ প্রভবতি দগ্ধুম্। তদ্গচ্ছ, পাদয়োঃ পতিত্বা নিবর্ত্তয়। যাবদস্যাহমপি অর্ঘোদকমুপকল্পয়ামি।

(দ) অনেতি। পুরঃ সম্মুখদেশে, অবলোক্য শাপকর্ত্তারং দুর্বাসসং দৃষ্ট্বা। যস্মিন্ কস্মিন্নপি সাধারণজনে ইত্যর্থঃ, ন খলু শকুন্তলা অপরাদ্ধা ইতি পূর্বেণান্বয়ঃ। সুলভঃ অনায়াসপ্রাপ্যঃ সহসৈবোত্পাদীত্যর্থঃ কোপো যস্য সঃ, তথা বিচিন্তয়ন্তীত্যাদিরূপেণ, শপ্ত্বা অভিসম্পাতং কৃত্বা, অবিরলা ঘনাঃ পাদাঃ পাদন্যাসা যস্যাং সা তাদৃশী ত্বরা যস্যাং সা তয়া, গত্যা গমনেন, প্রতিনিবৃত্তঃ আশ্রমাভিমুখো ভূতঃ।

(ধ) প্রিয়মিতি। হুতবহাদগ্নেঃ অন্যঃ কঃ পদার্থঃ, দগ্ধুং প্রভবতি শক্নোতি অপি

(দ) প্রিয়ংবদা। হায় হায়! যাহা আমি ভাবিয়াছিলাম, তাহাই হইল। শূন্যহৃদয়া শকুন্তলা, পূজার যোগ্য কোনও ব্যক্তির নিকট অপরাধ করিয়াছে।

(দ) অনসূয়া। (সম্মুখের দিকে দৃষ্টিপাত করিয়া) যে কোন ব্যক্তির নিকটে নহে; ইনি সুলভকোপ মহর্ষি দুর্বাসা, সেইরূপ অভিসম্পাত করিয়া ঘন ঘন পাদক্ষেপে শীঘ্র গতিতে ফিরিয়াছেন।

(১) অনসূয়া। গচ্ছ, পাএসু পণমিঅ ণিবত্তেসু ণং জাব। অহং অগ্ঘোদঅং উবকপ্পেমি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অন। তহ। ইতি নিষ্ক্রান্তা (১)। (ন)

প্রিয়ং। পদান্তরে স্খলিতং রূপয়ন্তী। অম্মো। আবেঅক্খলি-
গদীএ পরিব্ভট্টং মে অগ্গহত্থাদো পুপ্ফভাঅণং। ইতি পু-
রূপয়তি (২)। (প)

(ন) তথা।

(প) অম্মো! আবেগস্খলিতয়া গত্যা পরিভ্রষ্টং মে অগ্রহস্তাৎ পুষ্পভাজনম্।

নু কোঽপি নেত্যর্থঃ। দুর্বাসসমন্তরেণ ঈদৃশং ক্ষুদ্রদোষাৎ দারুণশাপং ন-
নার্হতীত্যাশয়ঃ। অতএবাত্র সমাদপ্রস্তুতাৎ প্রস্তুতস্যপ্রতীতেরপ্রস্তুতপ্রশংসা-
নিবর্ত্তয় দুর্বাসসমিতি শেষঃ। অস্য দুর্বাসসঃ সম্বন্ধে।

(ন) অনেতি। তথা ত্বয়া যদুক্তং তথৈব করোমীত্যর্থঃ।

(প) প্রিয়মিতি। পদান্তরে উটজগমনায় একপদং ক্ষিপ্তা দ্বিতীয়পদবি-
পদোদ্গমনম্, রূপয়ন্তী অভিনয়ন্তী। আবেগেন ত্বরয়া স্খলিতা বিপর্য্যস্তা তথা।
হস্তাগ্রাৎ।

(ধ) প্রিয়ংবদা। অগ্নিভিন্ন কোন্ বস্তু, দগ্ধ করিতে
অতএব যাও, পায়ে পড়িয়া ফিরাও। আমিও তাঁহার জন্য
পাদোদক সংগ্রহ করি।

(ন) অনসূয়া। তাহাই। (এই বলিয়া চলিয়া গেল।)

(প) প্রিয়ংবদা। (দ্বিতীয় বার পা ফেলিবার সময়ে হঠাৎ
অভিনয় করিয়া) ওমা! বেগবশতঃ গমন বিপর্য্যস্ত হওয়া
হস্তাগ্র হইতে পুষ্পপাত্র পড়িয়া গেল। (এই বলিয়া সেই পু-
অভিনয় করিতে লাগিল।)

(১) প্রিয়ংবদা। তহ। নিষ্ক্রান্তা।

(২) অনসূয়া। পদান্তরে স্খলিতং নিরূপ্য। পরিভ্রষ্টং। পুষ্পভাং।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। प्रविश्य। सहि! सरीरी विअ कोवो कस्स अणुणअं
सो गेण्हदि। किन्तु, उण सो अणुकम्पिदो मए (१)। (फ)
प्रियं। एदं ज्जेव तस्सिं वहुदरं। ता कधेहि कधं
तए पसादिदो ? (२)। (ब)

अन। जदो णिउत्तिदुं ण इच्छदि, तदो पाएसुं पड़िअ
विसविदो मए, भअवं पढ़मं त्ति पेक्खिअ अविसाद-तव-

(फ) सखि! शरीरीव कोपः कस्य अनुनयं स गृह्णाति। किन्तु, पुनः सः अनुकम्पितो मया।

(ब) एतदेव तस्मिन् बहुतरम्। तत् कथय कथं त्वया प्रसादितः।

(फ) अनेति। शरीरी मूर्त्तिमान्। कोप इव स दुर्वासाः, कस्य जनस्य, अनुनयम् अवनतभावम्, गृह्णाति अङ्गीकरोति, कस्यापि नेत्यर्थः। तर्हि किं विफल-मनोरथा जातासीत्याह किन्त्विति। स दुर्वासाः, मया अनुकम्पितः अनुकम्पां दयां कारितः।

(ब) प्रियमिति। एतदेव अनुकम्पाजननमेव, तस्मिन् दुर्वासस्रि, बहुतरमधिकं मन्तव्यम्, निवर्त्तनन्त्वशक्यमेवेति भावः। प्रसादितः प्रसादं कारितः।

(फ) অনসূয়া। (প্রবেশ করিয়া) সখি! মূর্ত্তিমান্ ক্রোধের ন্যায় তিনি, কাহার অনুনয় গ্রাহ্য করেন; তথাপি আমি তাঁহার দয়া জন্মাইয়াছি।

(ব) প্রিয়ংবদা। তাঁহার নিকট ইহাই বেশী। তা বল দেখি, কি করিয়া তুমি প্রসন্ন করিলে ?।

(१) प्रविश्य प्रियंवदा। सहि! पकिदिवक्को सो कस्स अणुणअं गेण्हइ। किं वि उण साणुक्कोसो किदो।

(२) अनसूया। सञ्चितम्। तस्सिं बहु एदं वि। कहेहु।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

প্পহাবস্স দুহিদিজণস্স অঅং অবরাহো ভঅবদা মরিসি-
ত্তি (১)। (ভ)

প্রিয়ং। তদো তদো ? (২)। (ম)

অন। তদো তেণ ভণিদং ণ মে বঅণং অণ্ণহা ভ-
অরিহদি। কিন্তু আহরণাহিণ্ণাণদংসণেণ সে সাবো ণি-
স্সদি ত্তিং মন্তঅন্ত জ্জেব অন্তরিদো (৩)। (য)

(ভ) যদা নিবর্ত্তিতুং ন ইচ্ছতি, তদা পাদয়োঃ পতিত্বা বিজ্ঞাপি-
ভগবন্! প্রথমমিতি প্রেক্ষ্য অবিজ্ঞাততপঃপ্রভাবস্য দুহিতৃজনস্য অয়মপরাধঃ
মর্ষয়িতব্য ইতি।

(ম) ততস্ততঃ ?।

(ভ) অনেতি। নিবর্ত্তিতুম্ উটজমাগন্তুম্। প্রথমম্ ইদমাদ্যং...
অপরাদ্ধম্, ইতি প্রেক্ষ্য পর্য্যালোচ্য, প্রায়েণ লোকঃ প্রথমং বস্তুস্বভাবমনুভূ...
পরোঽপি তদবিবেকপূর্ব্বকমিতি মত্বা মর্ষয়তীতি লৌকিকব্যবহারদর্শনাদি...
বিজ্ঞাতস্তপঃপ্রভাবো যেন তস্য, দুহিতৃজনস্য আত্মজাতুল্যস্য শকুন্তলায়াঃ...
মর্ষয়িতব্যঃ ক্ষন্তব্যঃ।

অত্র পরিহারো নাম নাট্যালঙ্কারঃ। যথা দর্পণে—

"পরিহার ইতি প্রোক্তঃ কৃতানুচিতমার্জনম্।"

(ভ) অনসূয়া। যখন ফিরিতে ইচ্ছা করিলেন না, তখন ...
উপর পড়িয়া আমি জানাইলাম—"ভগবন্! ইহা প্রথম অপরাধ...
মনে করিয়া, তপঃপ্রভাবানভিজ্ঞ কন্যাজনের এই অপরাধ ...
মার্জ্জনা করুন।"

(১) নদা তদা বিষবিদো মএ ভঅবদা এক্কো অবরাহো। (২) অন। ...
(২) প্রিয়ংবদা। তদো মে বঅণং অণ্ণহা ভবিদুং ণ অরিহদি।
অহিণ্ণাণাভরণদংসণেণ সাবো ণিবত্তিস্সদি ত্তি মন্তঅন্তো এব্ব অন্তরিহিদো।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियं। सक्कं दाणिं समास्ससिदुं। अत्थि तेण राएसिणा संपत्थिदेण अत्तणो णामाङ्किदं अङ्गुलीअअं सुमरणीअं त्ति सउन्तलाए हत्थे सअं ज्जेव पिणिद्धं। एसो ज्जेव तस्सिं साहीणो उवाओ भविस्सदि (१)। (र)

(य) ततस्तेन भणितम्, न मे वचनमन्यथा भवितुमर्हति। किन्तु आभरणाभिज्ञानदर्शनेन अस्याः शापो निवर्त्तिष्यतीति मन्त्रयन्नेवान्तरितः।

(र) शक्यमिदानीं समाश्वसितुम्। अस्ति तेन राजर्षिणा संप्रस्थितेन आत्मनो नामाङ्कितमङ्गुलीयकं स्मरणीयमिति शकुन्तलाया हस्ते स्वयमेव परिधापितम्। एष एव तस्मिन् स्वाधीन उपायो भविष्यति।

---

(य) अनेति। तेन दुर्वाससा। अन्यथा मिथ्या। अभिज्ञायते परिचीयते अनेनेति अभिज्ञानं चिह्नम्, आभरणम् अलङ्करणमेव अभिज्ञानं तस्य दर्शनेन प्रदर्शनया अस्याः शकुन्तलायाः। मन्त्रयन्नेव वदन्नेव, अन्तरितः अन्तर्हितवान्।

(र) प्रियमिति। शक्यमस्माभिरिति शेषः। राजर्षिणा दुष्मन्तेन, सम्प्रस्थितेन आदिकर्मणि क्तप्रत्ययात् प्रस्थातुमारभमाणेन सता, आत्मनो दुष्मन्तस्यैव। स्मरणाय हितं स्मरणीयं स्मृतिजनकमित्यर्थः। तस्मिन् शापनिवर्त्तने, स्वाधीनः अनन्यापेक्षः।

---

(ম) প্রিয়ংবদা। তার পর তার পর ?।

(য) অনসূয়া। তার পর তিনি বলিলেন—"আমার বাক্য মিথ্যা হইতে পারে না, তবে অলঙ্কাররূপ চিহ্ন দেখাইলে পর উহার শাপ নিবৃত্তি পাইবে" এই কথা বলিতে বলিতেই অন্তর্হিত হইলেন।

(র) প্রিয়ংবদা। এখন আশ্বস্ত হইতে পারিব। সেই রাজর্ষি, যাইবার সময়, নিজের নামাঙ্কিত একটী অঙ্গুরী, নিজেই শকুন্তলার হাতে স্মরণার্থ পরাইয়া দিয়াছিলেন, তাহা আছে। এই অঙ্গুরী দেখানই শাপনিবৃত্তির স্বাধীন উপায় হইবে।

---

(१) सवामहे अङ्किदं सणं पिणद्धं तस्सिं साहीणीवाआ सउन्तला होहिइ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। सहि! एहि, देवकज्जं दाव से णिव्व
इति परिक्रामत: (१)। (ल)

प्रियं। अवलोक्य। अणसूए! पेक्ख दाव वामहत्थो-
हिदवअणा आलिहिदा विअ पिअसही तग्गदाए चि-
न्ताए अत्ताणम्मि ण विभावेदि, किं उण आगन्तुअं (२)। (व)

अन। हला! दोसं ज्जेव णो हिअए एसो वु-
त्तन्तो चिट्ठदु। रक्खणीआ क्खु पइदिपेलवा पिअसही (३)। (श)

(ल) सखि! एहि, दैवकार्य्यं तावदस्या निर्वर्त्तयाव:।

(व) अनसूये! प्रेचस्व तावत्, वामहस्तविनिहितवदना आलिखितेव
तद्गतया चिन्तया आत्मानमपि न विभावयति, किं पुनरागन्तुकम्।

(ल) अनेति। अस्या: शकुन्तलाया:, दैवकार्य्यं मङ्गलचरित्र...
निर्वर्त्तयावो निष्पादयाव:। परिक्रामत उटजगमनाय पादक्षेपं कुरुत:।

(व) प्रियमिति। वामहस्ते विनिहितं स्थापितं वदनं यया सा, ...
निस्पन्दतया चित्रितेव, तद्गतया दुष्मन्तविषयिकया। विभावयति अवगच्छति ...
मद्दर्तीत्यर्थ:। आगन्तुकमतिथिम्।

(ल) अनसूया। সখি! আইস, শকুন্তলার দেবকার্য্য
করি। (এই বলিয়া পাদক্ষেপ করিতে লাগিল।)

(ব) প্রিয়ংবদা। (দেখিয়া) অনসূয়া! দেখ—
শকুন্তলা, বামহস্তের উপরে মুখমণ্ডল রাখিয়া চিত্রিতের ন্যায় ...
এবং তদ্গত চিন্তায় আপনাকেও জানিতে পারিতেছে না, অ...
আর কি জানিবে।

(१) प्रियंवदा। दाव णिव्वत्तेम। परिक्रामत:।

(२) वामहत्थोवहिदवअणा भत्तुगदाए एसा विभावेदि।

(३) अनसूया। पिअंवदे! दुवेणं एव्व णो मुहे एसो वुत्तन्तो चि...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियं। को दाव उस्सोदएण णोमालिअं सिञ्चदि (१)।

इत्युभे निष्क्रान्ते (२)। (ष)

## विष्कम्भकः। (स)

(श) हला! द्वयोरेवावयोर्हृदये एष वृत्तान्तस्तिष्ठतु। रक्षणीया खलु प्रकृतिपेलवा प्रियसखी।

(ष) कस्तावदुष्णोदकेन नवमालिकां सिञ्चति।

(श) अनेति। एष दुर्वाससोऽभिसम्पातविषयकवृत्तान्तः, हृदये तिष्ठतु, पुनः प्रकाशनीय इत्याशयः। कथमित्याह प्रकृत्या स्वभावेनैव पेलवा कोमला, प्रियसखी शकुन्तला, रक्षणीया खलु अवश्यमेव रक्षितव्या। तथा च एतद्वृत्तान्तप्रकाशेन तच्-छ्रवणे शकुन्तलाया मरणमेवावश्यम्भावीति भावः।

(ष) प्रियमिति। नवमालिकां तदाख्यां लताम्। तथा च यथा उष्णोदकेन मूलसेचने नवमालिकाया अवश्यमरणम्, तथा एतद्वृत्तान्तश्रवणे शकुन्तलाया अपि नितान्तमेवाश्याद्वश्यमेव मरणं भविष्यतीति एष वृत्तान्त आवयोर्द्वयोरेव हृदये तिष्ठत्विति भावः।

अतएवात्र समाद्प्रस्तुतात् प्रस्तुतसमप्रतीतेरप्रस्तुतप्रशंसालङ्कारः।

उभे अनसूयाप्रियंवदे।

(स) विष्केति। एतल्लक्षणन्तूक्तम्। "जइ वि गन्धव्वेण विवाहविहिणा" इत्यादिना वृत्तकथांशानां निदर्शनम्; "आहरणाहिआरादंसणेण से सावो णिउत्तिस्सदि"

(श) অনসূয়া। ওলো! এই বৃত্তান্ত আমাদের দুই জনের মনেই থাক। কারণ, স্বভাবকোমলা শকুন্তলার জীবন রাখিতে হইবে।

(ষ) প্রিয়ংবদা। কে গরম জল দিয়া নবমালিকা লতাকে, সিক্ত করে?। (এই বলিয়া দুইজনেই চলিয়া গেল।)

(স) বিষ্কম্ভক।

(১) को दाणिं। (२) उभे निष्क्रान्ते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः। (ह)

शिष्यः। वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवास-प्रतिनिवृत्तेन कण्वेन। तत् प्रकाशं निर्गत्यावलोकये कियदवशिष्टं रजन्या इति। परिक्रम्यावलोक्य च। हन्त! प्रभाता रजनी। तथाहि—(१) (क्ष)

यात्येकतोऽस्तशिखरं पतिरोषधीनाम्
आविष्कृतोऽरुणपुरःसर एकतोऽर्कः।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु ॥२॥

इत्यनेन च वर्त्तिष्यमाणकथांशानां निदर्शनं ज्ञेयम्। स चायं शुद्धविष्कम्भः मध्यमपात्राभ्यामनसूयाप्रियंवदाभ्यां प्रयोजितत्वात् "मध्येन मध्यमाभ्यां वा ... सम्प्रयोजितः। शुद्धः स्यात्" इति दर्पणलक्षणात्।

(ह) तत इति। आदौ सुप्तो निद्रितः पश्चादुत्थितो जागरित इति ... इत्यादिवत् कर्मधारयः। निद्रावैक्लव्याभिनयार्थमेतद्विशेषणम्।

(क्ष) शिष्य इति। प्रवासाद्विदेशात् तीर्थादिति यावत्। वेलायाः ... "अनुदिते जुहोति" इति श्रुतेः अरुणोदयकालस्य उपलक्षणार्थं निरूपणार्थम्। ... परिश्रान्ततया सूर्योदयात् परं निद्राभङ्गे गुरोर्वै धकर्म्मकालातिक्रमे प्रत्यवाय ... भावः। प्रकाशं गृहात् वहिर्देशम्।

(হ) তদনন্তর নিদ্রোত্থিত কোন কণ্বশিষ্যের প্রবেশ।

(ক্ষ) শিষ্য। বিদেশ হইতে প্রত্যাগত পূজনীয় কণ্ব, বেলা ... করিবার জন্য আমাকে আদেশ করিয়াছেন। অতএব বাহিরে ... দেখি—রাত্রির কতটুকু অবশিষ্ট আছে। ( পাদক্ষেপ করিয়া দেখি ... ও! রাত্রি প্রভাত হইয়াছে। যথা—

(१) प्रवासादुपावृत्तेन काश्यपेन। प्रकाशं निर्गतस्तावत्। हन्त! ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि च,

अन्तर्हिते शशिनि सैव कुमुद्वतीयं
दृष्टिं न नन्दयति संस्मरणीयशोभा ।

यातीति । ओषधीनां फलपाकान्तानां व्रीहिशालियवादीनां पतिः पुष्टिकारकश्चन्द्रः, एकत एकस्यां दिशि पश्चिमायां दिशीत्यर्थः, अस्तशिखरं चरमाचलचूडाम्, याति ; तथा अरुणः स्वसारथिः पुरःसरः अग्रगामी यस्य स तादृशः, अर्कः सूर्यः, एकतः अन्यस्यां दिशि पूर्वस्यां दिशीत्यर्थः, आविष्कृतः आत्मप्रकाशं कर्त्तुमारभते । इत्थं तेजोद्वयस्य चन्द्रसूर्यरूपस्य, युगपदेकदैव, व्यसनोदयाभ्याम् अस्तगमनोदयगमनाभ्यां विपत्सम्पद्भ्याश्च कर्त्तृभ्याम्, एष लोको जगत्, दशान्तरेषु अवस्थाविशेषेषु, नियम्यत इव स्वस्वदशाप्रदर्शनेन ईश्वरनियमं ज्ञाप्यत इव । अस्मादेव एकस्मिन्नेव समये कश्चिद्विपद्यते कश्चिद्वा सम्पद्यते ; तेन च विपन्नसम्पन्नाभ्यामस्मादेव न शोचितव्यं न वा गर्वितव्यमित्युपदिश्यत इवेत्याशयः ।

अत्र वाच्या भावाभिमानिनो क्रियोत्प्रेक्षालङ्कारः । ओषधिपतेर्व्यसनम् अर्कस्योदय इति क्रमिकत्वावगमात् यथासंख्यालङ्कारस्य, अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः । तथा याति आविष्कृत इति तिङ्क्तप्रत्ययभेदात् भग्नप्रक्रमतादोषः, स च 'आविर्भवत्यपरतोऽरुणसम्मुखोऽर्कः' इति पाठेन समाधेयः । दृष्टान्तो नाम नाट्यलक्षणम् । यथा दर्पणे—

"दृष्टान्तो यत्तु पक्षार्थसाधनाय निदर्शनम् ।"

"ओषधिः फलपाकान्ता" "ओषधीशो निशापतिः" इति चामरः ।

आविष्कृत इति आदिकर्म्मणि क्तः कर्त्तरि ।

वसन्ततिलका वृत्तम् ॥२॥

চন্দ্র এক দিকে অস্ত যাইতেছেন ; অপর দিকে সূর্য্য, অরুণকে অগ্রবর্ত্তী করিয়া প্রকাশিত হইতেছেন। অতএব একদাই দুইটী তেজের অস্ত ও উদয় যেন এই জগৎকে অবস্থাবিশেষে ঈশ্বরের নিয়ম জানাইতেছে ॥২॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इष्टप्रवासजनितान्यबलाजनेन
दुःखानि नूनमतिमात्रदुरुद्वहानि (१) ॥३॥

अपि च, कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः।
वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः (२)॥

अन्तरिति। शशिनि चन्द्रे, अन्तर्हिते व्यवहिते देशान्तरं गते च सति सं... स्मृतीततया दर्शनीयत्वासम्भवात् स्मृतिमात्रयोग्या शोभा सौन्दर्यं यस्याः सा त... सैव या पूर्वं दर्शनीयशोभासीत् सैवेत्यर्थः इयं कुमुद्वती कुमुदिनी, दृष्टिं लोचनं न नन्दयति स्वशोभाद्वारा न सुखयति। तथाहि, नूनं निश्चितमेव ... स्त्रीलोकेन, इष्टस्य वल्लभस्य प्रवासेन भिन्नदेशस्थित्या विरहेण जनितानि, दुः... अतिमात्रमत्यन्तमेव दुरुद्वहानि कष्टवहनयोग्यानि भवन्तीति शेषः। अतएव श... ऽन्तर्धानात् दुःखेन नष्टशोभा कुमुद्वती दृष्टिं न नन्दयतीत्याशयः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, तदुत्थापिता च शशि... लिङ्गसाम्येन नायकनायिकाव्यवहारसमारोपात् समासोक्तिः पदार्थहेतुकं का... इत्येतेषामङ्गाङ्गित्वेन सङ्करः।

"लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। दृक् दृष्टिश्च" "नूनं तर्के..." इति चामरः। वसन्ततिलका वृत्तम् ॥३॥

আরও, চন্দ্র অস্তমিত হইলে, কুমুদিনীর সে সৌন্দর্য্য এখন ... হইয়া দাঁড়াইয়াছে; সুতরাং এই সেই কুমুদিনী আর নয়ন আ... করিতেছে না। কারণ, ইষ্টজনের বিরহজনিত দুঃখ, স্ত্রীলোকে... নিশ্চয়ই অত্যন্ত দুঃসহ ॥৩॥

(१) कुमुद्वती मे। अबलाजनस्य। अतिमात्रसुदुःसहानि।

(२) अयं श्लोकः क्वचिन्न दृश्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि च, पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैः
अत्यारूढ़िर्भवति महतामप्यपभ्रंशनिष्ठा (१) ॥५॥

कर्कन्धूनामिति। अयमन्ध्या प्राथमिकी सन्ध्या प्रातःसन्ध्येति यावत्, कर्कन्धूनां बदरीपत्राणाम्, उपरि पतितं तुहिनं हिमम्, रञ्जयति आत्मनो रक्तवर्णत्वात् आरक्ती-करोति, वीता त्यक्ता निद्रा येन स वीतनिद्रो मयूरः, दर्भैः कुशैर्निर्म्मितमिति दार्भम्, उटजस्य पर्णशालायाः पटलं छदिः, मुञ्चति परित्यजति परित्यज्य स्थानान्तरं व्रजति। तथा खुरैः विलिखितात् निद्रितावस्थायां कुट्टितात्, वेदिर्यज्ञभूमेः, प्रान्तात् समीपदेशात्, उत्थित एष हरिणश्च, सद्यस्तत्क्षणम् उत्थानक्षण एवेत्यर्थः, स्वाङ्गं निजहस्तपदाद्यवयवम्, आयच्छमानः प्रसारयन् सन्, पश्चात्तदनन्तरम्, उच्चैर्द्दण्डायमानो भवति। अयन्तु प्रायेण पशूनां स्वभावः।

अतएवात्र पराद्ध्यें स्वभावोक्तिरलङ्कारः। तथा हरिण इत्यन्तेन वाक्यसमाप्तावपि पुनर्हरिण इत्यस्य विशेषणतया "स्वाङ्गमायच्छमानः" इत्यस्योपादानात् समाप्तपुनरात्तता-दोषः, स च "पश्चादुच्चैर्भवति ततयन् स्वीयमङ्गं कुरङ्गः" इति पाठेन समाधेयः। ततं विस्तृतं कुर्वन्निति ततयन्।

आयच्छमान इति "आङो यमहनौ स्वाङ्गकर्म्मकौ च" इति वचनादित्यादात्मने-पदविषये शानच्। मन्दाक्रान्ता वृत्तम् ॥४॥

আরও, প্রাতঃসন্ধ্যা, বদরীপত্রের উপরে পতিত হিমবিন্দুকে রঞ্জিত করিতেছে; ময়ূর নিদ্রা হইতে উঠিয়া, কুশনির্ম্মিত পর্ণশালার চাল ছাড়িয়া চলিয়া যাইতেছে; আবার এই হরিণটা, খুরসঙ্কালিত যজ্ঞবেদির প্রান্ত হইতে উঠিয়া, তৎক্ষণাৎ নিজের অঙ্গ সকল বর্দ্ধিত করিয়া, তাহার পর দাঁড়াইতেছে ॥৪॥

(১) অযং শ্লোকোऽপি কুত্রচিন্নাস্তি।…ক্ষয়িততমসা।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन । अपटीक्षेपेण प्रविश्य । एव्वं णाम विसअपरम्मु...

पाईति । अपितततमसा विनाशितान्धकारेण निहतशत्रुसैन्येन च, ...
नवेन महाशक्तिना केनचित् राज्ञा च, क्षितिधरगुरोः पर्वतश्रेष्ठस्य राजश्रेष्ठस्य ...
सुमेरोस्तदाख्यपर्वतस्य सुमेरुवत् गौरवितस्य कस्यचित् प्रबलनृपतेश्च, मूर्ध्नि ...
मस्तके च, पादन्यासं किरणस्थापनं पराजयेनावनमनात् चरणविन्यासञ्च, ...
विष्णोर्वामनरूपिणो नारायणस्य विष्णुवत् प्रभावशालिनो नृपतिविशेषस्य च, ...
धाम मध्यमाक्रमणस्थानमाकाशं राजधानीमध्यवर्त्ति वासभवनञ्च, क्रान्तं ...
अधिकृतम् आक्रम्य जितञ्च, अयं स चन्द्रः, अल्पशेषैरस्तोन्मुखलात् अल्पमात्रैः ...
मयूखैः किरणैः प्रभावनिबन्धनशोभाभिश्च विशिष्टः सन्, गगनात् आकाशात् ...
पतति अस्तं याति भ्रश्यति च । तथाहि महतामपि जनानाम्, अत्यारूढिः ...
अपभ्रंशः पतनमेव निष्ठा शेषावस्था यस्याः सा तादृशी भवति ।

अत्र कार्य्यद्वारा चन्द्रे कस्यचिन्नवप्रबलीभूतस्य राज्ञो व्यवहारसमारोपात् ...
समासोक्तिः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च, अनयोर्मिथो ...
संसृष्टिः ।

"पादा रश्म्यङ्घ्रितुर्य्यांशाः" इत्यमरः । क्षितिं धरति धारयति ...
भूभृत्क्ष्माभृद्वत् पर्वतनृपत्यर्थयोर्यौगिकः । "गुरुस्त्रिलिङ्गयां महति दुर्जराधौ" ...
इति त्रिकाण्डशेषः । "मयूखः किरणेऽपि च । ज्वालायामपि शोभायाम्" इति ...
"निष्ठा क्लेशेऽवसाने च व्यवस्थोत्कर्षयात्रयोर्ते" इति हलायुधः ।

मन्दाक्रान्ता वृत्तम् ॥५॥

---

आরও, যিনি অন্ধকার নাশ করিয়া, পর্ব্বতশ্রেষ্ঠ সুমেরুর ...
কিরণ বিন্যস্ত করিয়া, সমস্ত আকাশ অধিকার করিয়াছিলেন, এই ...
চন্দ্র অল্পাবশিষ্ট কিরণে আকাশ হইতে পড়িয়া যাইতেছেন। ...
প্রধান লোকেরও অত্যন্ত উন্নতি, অবনতিতে পর্য্যবসিত হয় ॥৫॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जणस्स ण णिपडिदं, जधा तेण रण्णा सउन्तलाए अणज्जं माचरिदं त्ति (१)। (क)

शिष्यः । यावदुपस्थितां होमवेलां गुरवे निवेदयामि ।

इति निष्क्रान्तः । (ख)

अन (२)। णं पहादा रजणी । ता सिग्धं सम्मण

(क) एवं नाम विषयपराङ्मुखस्य जनस्य न निपतितम्, यथा तेन राज्ञा शकुन्तलायामनार्य्यमाचरितमिति ।

(क) अनेति । अपटीक्षेपेण "पटीक्षेपो न कर्त्तव्य आर्त्तराजप्रवेशने" इत्यभिधानात् यवनिकाया अनपसारणेन । शकुन्तलाया दुःखेन अनसूयाया आर्त्ततया पटीक्षेपसम्भवे तन्निषेधार्थमुक्तिरियम् । नामशब्दो दुष्मन्तनिन्दायाम् । विषयपराङ्मुखस्यं इन्द्रियसुखविमुखस्य, जनस्य शकुन्तलाभिन्नलोकस्य, एवम् इत्थं दुःखम्, न निपतितं कदाचिदपि नोपस्थितम् । तेन दुष्मन्तेन । अनार्य्यम् असाधुजनोचितम् । तदाचरणञ्च परस्ताद्व्यक्तीभविष्यति ।

(ख) शिष्य इति । होमवेलां होमकालम् । गुरवे कण्वाय ।

(क) অনস্থয়া। (যবনিকা না সরাইয়া প্রবেশ করিয়া) বিষয়-পরাঙ্মুখ লোকের এরূপ কথনও উপস্থিত হয় না; সেই রাজা শকুন্তলার প্রতি যেরূপ অন্যায় আচরণ করিয়াছেন।

(१) जइ वि णाम विसअपरम्मुहस्स जणस्स एदं ण विदिदं, तहवि तेण। पटीक्षेपेण इत्यपि पाठः।

(२) पडिबुद्धावि किं करिस्सं । ण मे उइदेसु वि णिअकरणिज्जेसु हत्थपाआ पसरन्ति । कामो दाणिं सकामो होदु, जेण असच्चसन्धे जणे सुद्धहिअआ सही पदं कारिदा । अहवा दुव्वाससो सावो एसो विआरेदि । अण्णहा तेहमेत्तं । दुक्खसीले ! णं सहीगामी दीसोत्ति ववसिदा वि ण पारेमि । इत्थं गए अम्हेहिं किं कारणिज्जं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

পরিচ্চস্সামি। অধবা লহু লহু উত্থিদাবি কিং করিস্সং, মে উইদেসু পহাদকরণীএসু হত্থপাআ প্পসরন্তি। কা… দাণিং সকামো ভোদু। জেণ অসচ্চসন্ধে জণে পিঅসহী … হিঅআ পদং কারিদা। স্মৃত্বা। অধবা ণ তস্স … (গ)

(গ) ননু প্রভাতা রজনী। তৎ শীঘ্রং শয়নং পরিত্যজামি। অথবা লঘু … উত্থিতাপি কিং করিষ্যামি। ন মে উচিতেষু প্রভাতকরণীয়েষু হস্তপাদং … কাম ইদানীং সকামো ভবতু, যেন অসত্যসন্ধে জনে প্রিয়সখী শুদ্ধহৃদয়া পদং …

(গ) ননীতি। অবধারণে ননুশব্দঃ, শয্যতে অস্মিন্নিতি শয়নং শয্যা … লঘু লঘু শীঘ্রং শীঘ্রম্। উচিতেষু অভ্যস্তেষু ন্যায্যেষু বা। "অভ্যস্তমুচিতং ন্যায্যম্" ইতি যাদবঃ। প্রভাতকরণীয়েষু প্রাতঃকালকর্ত্তব্যেষু পুষ্পচয়নাদিষু … হস্তৌ চ পাদৌ চেতি হস্তপাদম্, প্রাণ্যঙ্গত্বাৎ সমাহারেকত্বং নপুংসকত্বঞ্চ। … প্রচলতি। মনোদুঃখং প্রকাশয়তি কাম ইতি। কামো মদনঃ, সকামঃ সফল… যেন কামেন, অসত্যা মিথ্যা সন্ধা প্রতিজ্ঞা যস্য তস্মিন্, জনে দুষ্মন্তে, শুদ্ধহৃদয়া … চিত্তা, পরপ্রতারণাদিদোষশূন্যচিত্তেতি যাবৎ, প্রিয়সখী শকুন্তলা, পদং … তথা চ কামঃ পরপ্রতারণামেব কাময়তি। এবঞ্চ মিথ্যাপ্রতিজ্ঞে দুষ্মন্তে সরল… শকুন্তলায়াঃ স্থাপনাৎ তস্যাঃ প্রতারণা সুনিষ্পন্নৈবেতি কামস্য সফলকামত্বমিতি … ভাবঃ। "পদং ব্যবসিতত্রাণস্থানলক্ষ্মাঙ্ঘ্রিবস্তুষু" ইত্যমরঃ। স্মৃত্বা …

(খ) শিষ্য। হোমের সময় উপস্থিত হইয়াছে ইহা গুরুকে … জানাই। (এই বলিয়া চলিয়া গেল।)

(গ) অনসূয়া। রাত্রি প্রভাতই হইয়াছে; সুতরাং শয্যা … পরিত্যাগ করি। অথবা তাড়াতাড়ি উঠিয়াই বা কি করিব; … কালের অভ্যস্ত প্রাতঃকালের কর্ত্তব্য কার্য্যে আমার হাত পা সরি… না। কামদেবের ইচ্ছা এখন সফল হউক; যিনি মিথ্যাবাদী … হাতে সরলচিত্তা প্রিয়সখীকে স্থাপিত করিয়াছেন। (স্মরণ …

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवराहो, दुव्वासासावो क्खु एसो पहवदि। अस्सधा कधं
..राएसो तादिसाइं मन्तिअ एत्तिअस्स कालस्स वात्तामात्तं
पि ण विसज्जेदि। विचिन्त्य। ता इदो अहिस्साणं अङ्गुलीअअं
से विसज्जेम। अधवा दुक्खसीले तवस्सिजणे को अब्भत्थी-
अदु। णं सहीगामी दोसो त्ति व्वसाइदुं पि ण पारेह्म।

अथवा न तस्य राजर्षेरपराधः, दुर्वासःशापः खल्वेष प्रभवति। अन्यथा कथं स राजर्षि-
स्तादृशानि मन्त्रयित्वा एतावतः कालस्य वार्त्तामात्रमपि न विसर्जयति। तदितोऽभिज्ञान-
म..रीयकं विसर्जयामः। अथवा दुःखशीले तपस्विजने कः अभ्यर्थ्यताम्। ननु
सखीगामी दोष इति व्यवसाययितुमपि न पारयामः। तातकण्वस्य वा प्रवासप्रतिनिवृत्तस्य

शापवृत्तान्तं विभाव्य। प्रभवति स्वशक्तिं प्रकाशयति। तादृशानि दिनत्रयमध्ये एव
लोकप्रेरणज्ञापनादिवाक्यानि, मन्त्रयित्वा उक्त्वा। न विसर्जयति स्वनगरादत्राश्रमे
प्रेरयति। अतएव च दुर्वाससः शापप्रभावेणैव तस्य राजर्षेर्विस्मृतिरित्यपराधस्तस्य
नास्त्येवेति भावः। विचिन्त्य दुर्वासस एव शापमोचनोपायोक्तिं स्मृत्वा। तत् तस्मात्,
..त आश्रमात् अभिज्ञानं दुष्मन्तप्रदत्तं चिह्नभूतम्, विसर्जयामस्तस्य राज्ञः सकाशे
प्रेरयामः। येन, तद्दृष्ट्वा स्मृतिं प्राप्स्यतीति भावः। अङ्गुरीयकप्रेरणासम्भवं
..स्यं यितुमाह अथवेति। दुःखशीले! तपःक्लेशपरायणे! तपस्विजने तपस्विगणमध्ये,
को जनः, अभ्यर्थ्यतां राजसमीपे गमनायास्माभिः प्रार्थ्यताम्, अपि तु कोऽपि नेत्यर्थः,
..पो विहाय कोऽपि न गच्छेत्, अतश्च अङ्गुरीयकप्रेरणासम्भव एवेति भावः। सखीगामी
शकुन्तलागतो दोषः शकुन्तला कथमज्ञातशीले जने आत्मानमर्पितवतीति दोषस्तस्या

অথবা সে রাজর্ষির অপরাধ নাই; এ দুর্ব্বাসার শাপের প্রভাব; না
হইলে, সেই রাজর্ষি সেইরূপ কথাবার্ত্তা বলিয়া, এত কালের মধ্যে
খবরটীও দিতেছেন না। (চিন্তা করিয়া) অতএব সেই চিহ্নস্বরূপ
অঙ্গুরীয়টী এখান হইতে পাঠাইয়া দিব। অথবা দুঃখী তপস্বী জনের
মধ্য কাহার নিকটই বা প্রার্থনা করি। 'ইহা প্রিয়সখীর দোষ' এরূপ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तादकसस्स वा पवासपडिणिउत्तस्स दुस्सन्तपरिणीदं आ
सत्तं सउन्तलं णिवेदिदुं। ता एत्थ दाणिं किं ए
अह्मेहिं करणिज्जं। (ग)

प्रियं। प्रविश्य। अणसूए तुवर तुवर सउन्तलाए प
कोदूहलं णिव्वत्तिदुं (१)। (घ)

अन। सविस्मयम्। सहि! कधं विअ? (२)। (ङ दि

दुष्मन्तपरिणीताम् आपन्नसत्त्वां शकुन्तलां निवेदयितुम्। तदत्र इदानीं किं
अस्माभिः करणीयम्।

(घ) अनसूये! त्वरस्व त्वरस्व शकुन्तलायाः प्रस्थानकौतूहलं निर्वर्तयितुम्

(ङ) सखि! कथमिव?।

एवेत्यर्थः, इति व्यवसाययितुमपि अवधारयितुमपि, न पारयामः आवयोः सं
प्रत्ययलादित्याशयः। आपन्नं गर्भं प्राप्तं सत्त्वं जन्तुर्यया ताम्, निवेद
पारयाम इति पूर्वेणान्वयः, तस्यानुमतिमन्तरेण एतत्कार्यकरणेन प्रत्युत दो
सम्भवादित्यभिप्रायः। अत्र विषये।

(घ) प्रियमिति। प्रस्थानकौतूहलं भर्तृगृहे गमनकालीनकौतुकव्या
पारम्, निर्वर्त्तयितुं निष्पादयितुम्।

धारणা করিতেও পারি না এবং দুষ্মন্তকর্ত্তৃক পরিণীত হইয়া
যে গর্ভবতী হইয়াছে ইহাও, বিদেশ হইতে প্রত্যাগত পিত
নিকট বলিতে পারিব না। অতএব আমাদের এখন কর্ত্তব্য কি

(ঘ) প্রিয়ংবদা। (প্রবেশ করিয়া) অনসূয়া!
যাত্রাকালীন কৌতুককর মাঙ্গলিক কার্য্য নির্বাহ করিবার
হও সত্বর হও।

(१) प्रविश्य प्रियंवदा। सहर्षम्।···पत्थाणकोदुअं।
(२) अनसूया। सहि! कधं एदं?।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

प्रियं । सुणाहि, दाणिं ज्जेव सुहसुत्तिआपुच्छणणिमित्तं
उन्तलाए सआसं गदह्मि (१) । (च)

अन । तदो तदो । (छ)

प्रियं । तदो णं लज्जाअणदमुहीं परिस्सइअ सअं ताद-
कस्सेण एव्वं अहिणन्दिदं, "वच्छे ! दिट्ठिआ धूमोवरुद्ध-
दिट्ठिणो वि जजमाणस्स पावअस्स ज्जेव मुहे आहुदी णिपड़िदा,
सिस्सपरिदिस्सा विअ विज्जा असोअणीआसि मे संवुत्ता ।
ज्जेव तुमं इसिपरिरक्खिदं करिअ भत्तुणो सआसं
सज्जेमि त्ति (२) । (ज)

(च) शृणु, इदानीमेव सुखसुप्तिकाप्रच्छननिमित्तं शकुन्तलायाः सकाशं गतास्मि ।
(छ) ततस्ततः ? ।
(ज) तत एनां लज्जावनतमुखीं परिष्वज्य स्वयं तातकाश्यपेन एवमभिनन्दितम्—
वत्से ! दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता,

(१) शृणोति । सविस्मयं सहसा कथमित्थं जातमित्याश्चर्येण सहितम् ।
(२) प्रियमिति । सुखसुप्तिका रात्रौ सुखेन निद्रा तस्याः प्रच्छननिमित्तं
...र्थम् ।

(छ) অনসূয়া । সখি ! কি রকম ? ।
(চ) প্রিয়ংবদা । শোন, এখনই আমি সুখনিদ্রা জিজ্ঞাসা করিবার
... শকুন্তলার নিকট গিয়াছি ।
... অনসূয়া । তার পর, তার পর ? ।

(१) प्रियंवदा । सुणाहि दाणिं सुहसइदपुच्छिआ ।
(२) प्रियंवदा । दाव एणं धूमाउलिददिट्ठिणो पि पावए एव्व आहुई पड़िदा ।
... । सुसिस्स ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অন। সহি! কেণ উণ আচক্খিদো তাদকণ্ণস্স এ
বুত্তন্তো (১)। (ঝ)

সুশিষ্যপরিদত্তেব বিদ্যা অশোচনীয়াসি মে সংবৃত্তা। অদ্যৈব ত্বাম্ ঋষিপরিরক্ষিতাং
ভর্ত্তুঃ সকাশং বিসর্জয়ামি।

(ঝ) সখি! কেন পুনরাখ্যাতস্তাতকণ্বস্যায়ং বৃত্তান্তঃ?।

(জ) প্রিয়মিতি। এনাং শকুন্তলাম্। পরিষ্বজ্য আলিঙ্গ্য। এবং অনেন
প্রকারেন, অভিনন্দিতম্ আনন্দেন প্রশংসিতম্ ইতি ভাবে ক্তঃ। ধূমেন উপরুদ্ধা
দৃষ্টির্দর্শনক্রিয়া যস্য তস্য তাদৃশস্যাপি যজমানস্য, হোমকর্তুঃ, আহুতিঃ
ভাগ্যেন, পাবকস্যৈব মুখে, ন পুনর্মৃত্তিকাদাবিত্যর্থঃ নিপতিতা। তথা চ তাদৃশং
তপস্যাবকন্তবরান্বেষণব্যাপারস্যাপি মে, কন্যা ত্বং ভাগ্যবশাদেব মহানু
দুষ্মন্তস্যৈব হস্তে পতিতাসীতি ভাবঃ। অতএবাত্র সমাদপ্রস্তুতাৎ প্রস্তুত
রপ্রস্তুতপ্রশংসালঙ্কারঃ. উভয়োরানুকূল্যেণ শ্লাঘাকরণাৎ সমনামালঙ্কারে '
রৈকাশ্রয়ানুপ্রবেশরূপঃ সঙ্করঃ। অতএব চ সুশিষ্যায় পরিদত্তা বিদ্যেব ত্বম্, শো
নীয়াসি। অত্র শ্রৌতীপমালঙ্কারঃ। ঋষিভিঃ সহগামিমুনিভিঃ পরি
বিসর্জয়ামি প্রেরয়ামি।

(ঝ) কেনেতি। কেন জনেন। আখ্যাতঃ কথিতঃ।

(জ) প্রিয়ংবদা। তার পর, লজ্জায় অবনতমুখী শকু
আলিঙ্গন করিয়া, স্বয়ং পিতা কণ্বই এইরূপ আদর করিলেন যে, "
যাহার দৃষ্টি, ধূমে অবরুদ্ধ হইয়াছে, সে যজমানের আহুতিও, ভা
অগ্নির মুখেই পড়িয়াছে। সুতরাং সুশিষ্যে প্রদত্ত বিদ্যার ন
আমার শোকের অবিষয় হইয়াছিস্। আজই তোকে ঋষি-প
করিয়া ভর্ত্তার নিকট পাঠাইব।"

(ঝ) অনসূয়া। সখি! পিতা কণ্বের নিকটে এ বৃত্তান্ত বলি

(১) অহ কেণ সুদো তাদকণ্ণস্স বুত্তন্তো?।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियं। अग्गिसरणं पविट्टस्स किल सरीरं विणा छन्दोमईए वाआए (१)। (ञ)

अन। सविस्मयम्। कधं विअ? (२)। (ट)

प्रियं। सुणाहि। संस्कृतमाश्रित्य (३) (ठ)

दुष्मन्तेनाहितं तेजो दधानां भूतये भुवः।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥६॥

(ञ) अग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोमय्या वाचा।

(ट) कथमिव।

(ठ) शृणु।

(ञ) प्रियमिति। अग्नेः शरणं गृहं होमगृहमित्यर्थः, प्रविष्टस्य तातकण्वस्येति सम्बन्धः। शरीरं प्रयोक्तृवपुः विना अदृष्टप्रयोक्तृशरीरया दैव्या इत्यर्थः, छन्दोमय्या पद्यरूपया, वाचा वाक्येन आख्यात इत्यन्वयः।

(ठ) प्रियमिति। सञ्जाताया दैववाण्या अविकलानुकरणार्थं संस्कृताश्रयणमित्यवधेयम्।

दुष्मन्तेनेति। हे ब्रह्मन्! ब्राह्मण! दुष्मन्तेन राज्ञा, आहितं स्थापितम्, तेजो रेतः, भुवो भूतये पृथिव्याः सम्पन्मै, सर्वप्रकारोन्नतिकारणत्वादिति भावः, दधानां धारयन्तीम्, तनयां कन्यां शकुन्तलाम्, अग्निर्गर्भे अभ्यन्तरे यस्यास्ताम्, शमीं तदाख्यलतामिव, अवेहि अवगच्छ।

(ঞ) প্রিয়ংবদা। তিনি হোমগৃহে প্রবেশ করিলে পর ছন্দোবদ্ধ দৈববাণী বলিয়াছে।

(ট) অনসূয়া। (বিস্ময়ের সহিত) কি রকম?।

(ঠ) প্রিয়ংবদা। শোন। (সংস্কৃতভাষা অবলম্বন করিয়া)

(१) छन्दोमईए वाणिआए। (२) कहेहि।

(३) क्वचित् सुणाहि इति नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। प्रियंवदामाश्लिष्य। सहि! पिअं मे पिअं। कि
अज्ज ज्जेव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं परितो
अणुभवेमि। (ड)

प्रियं। सहि! अह्मे कधं पि उक्कण्ठं विणोदइस्सा
सा दाणिं तवस्सिणी णिव्वुदा होदु (१)। (ढ)

(ड) सखि! प्रियं मे प्रियम्। किन्तु अद्यैव शकुन्तला नीयत इति उत्क
साधारणं परितोषमनुभवामि।

(ढ) सखि! वयं कथमपि उत्कण्ठां विनोदयिष्यामः, सा इदानीं तप
निर्वृता भवतु।

अत्र श्रौतोपमालङ्कारः।

"शुक्रं तेजोरेतसी च बीजवीर्य्येन्द्रियाणि च" इत्यमरः॥६॥

(ड) अनेति। नीयते मुनिभिः पतिगृहमिति शेषः। इति हेतोः, उत्क
वियोगवशात् आवेगविषादेन साधारणं समानम्, परितोषमानन्दम्। तथा च शो
वियोगचिन्तया विषादं दीना सखी शकुन्तला पतिसङ्गता सती शीघ्रमेव निर्वृता भवि
विषादतुल्यमेव परितोषम्, अनुभवामीत्याशयः।

"साधारणन्तु सामान्यम्" इत्यमरः।

(ढ) प्रियमिति। कथमपि केनापि प्रकारेण तीव्रतपःप्रव्रज्यादिनेति

হে ব্রাহ্মণ! অগ্নিগর্ভা শমীলতার ন্যায় আপনার কন্যা, দুষ্য
মঙ্গলের নিমিত্ত, দুষ্মন্তকর্তৃক স্থাপিত তেজ ধারণ করিতেছে ইহা অ
হউন ॥৬॥

(ড) অনসূয়া। (প্রিয়ংবদাকে আলিঙ্গন করিয়া) সখি!
ঘটনা প্রীতিকর, আমার প্রীতিকর বটে। কিন্তু আজই শকু
নিয়া যাইবে এই জন্য উৎকণ্ঠার তুল্যই সন্তোষ অনুভব করিতেছি।

(१) सहि! वअं दाव उक्कण्ठं विणोदइस्सामो, सा तवस्सिणी।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। तेण हि एदस्सिं चुअसाहावलम्बिदे णारिएल-समुग्गए एदस्सिंमित्तं ज्जेव मए कालहरणक्खमा केसरगुच्छा णिक्खित्ता चिट्ठदि। ता इमं णलिणीवत्तसङ्गदं करेहि। जाव से अहं पि गोरोअणं तित्थमित्तिअं दुव्वाकिसलआइं मङ्गलसमालहणं विरएमि (१)। (ण)

(ण) तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव मया कालहरणक्षमा केशरगुच्छा निक्षिप्ता तिष्ठति। तदिमां नलिनीपत्रसङ्गतां कुरु। यावदस्या अहमपि गोरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि मङ्गलसमालम्भनं विरचयामि।

उत्कण्ठां शकुन्तलाविच्छेदजनितविषादम्, विनोदयिष्यामो निवारयिष्यामः, तथापीति शेषः, तपस्विनी मातादिहीनतया शोच्या, सा शकुन्तला, निर्वृता पतिसंयोगेन सुस्था। तथा च शकुन्तलायाः पतिवियोगदुःखापेक्षया आवयोः शकुन्तलावियोगदुःखं वरमिति भावः।

(ण) अनेति। तेन हि शकुन्तलायां पतिगृहे गन्तव्यत्वेनैव हेतुना, चूतस्य आम्रवृक्षस्य शाखायामवलम्बिते रज्जुनिबद्धे, नारिकेलस्य समुद्गके सम्पुटके 'खोल' इति प्रसिद्धे, एतन्निमित्तमेव पतिगृहे शकुन्तलाया गमनकाले प्रसाधनार्थमेव कालहरण-क्षमा दीर्घकालस्थायिनी, केशरगुच्छा नागकेशरपुष्पपरागः, निक्षिप्ता अर्पिता। तत् तस्मात्, इमां केशरगुच्छाम्, नलिन्याः पद्मलताया पत्रे सङ्गतां पातितां प्रसाधनकाले अनायासेनोत्तलनार्थमिति भावः। दूर्वाणां किसलयानि पल्लवान्, मङ्गलं मङ्गलजनकं समालम्भनमनुलेपनम् उक्तविषयात्मकमनुलेपनमित्यर्थः।

(ढ) প্রিয়ংবদা। সখি! আমরা কোন রকমে উৎকণ্ঠার নিবৃত্তি করিব; তথাপি সেই দুঃখিনী এখন সুস্থ হউক।

(१) णिक्खित्ता मए केसरमालिआ। ता इमं हत्थसंखिदं करेहि। जाव अहं पि से मअलोअणं तित्थमित्तिअं दुव्वाकिसलआणि त्ति मङ्गलसमालम्भणाणि विरएमि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

প্রিয়ংবদা তথা করোতি। অনসূয়া নিষ্ক্রান্তা (১)।

নেপথ্যে। গোতমি! আদিশ্যন্তাং শাঙ্গর্ব-শারদ্বতমিশ্রা বৎসাং শকুন্তলাং নেতুং সজ্জীভবন্তু ভবন্ত ইতি (২)। (ত)

প্রিয়ং। অণসূএ! তুবর তুবর। এদে ক্খু হত্থিণাউর-গামিণো ইসীও সদ্দাবিঅন্তি (৩)। (থ)

(থ) অনসূয়ে! ত্বরস্ব ত্বরস্ব। এতে খলু হস্তিনাপুরগামিন ঋষয়ঃ শব্দায়ন্তে।

(ত) নেপথ্য ইতি। গৌতমীতি কণ্বস্য ধর্ম্মভগিনীসম্বোধনম্। শাঙ্গস্য শৃঙ্গ-নির্ম্মিতস্য ধনুষ ইব রবঃ কণ্ঠধ্বনির্যস্য স শাঙ্গর্বো নাম শিষ্যবিশেষঃ। শরদ্বান্ নাম কশ্চিন্মুনিস্তদপত্যমিতি শারদ্বতঃ তদাখ্যোঽপি কশ্চিৎ শিষ্যঃ তদুভয়াবা মিশ্রাঃ প্রধানা মুনয়ঃ। নেতুং পতিগৃহমিতি শেষঃ। সজ্জীভবন্তু উদ্যতা ভবন্তু ইতি আদিশ্যন্তা-মিত্যন্বয়ঃ।

(ণ) অনসূয়া। তাহা হইলে, এই আমের ডালে ঝুলান নারি-কেলের খোলের ভিতরে আমি এই জন্যই অনেকদিনস্থায়ী নাগকেশর ফুলের রেণু রাখিয়া দিয়াছি; তা এইগুলি তুমি পদ্মের পাতায় ঢালিয়া রাখ; আমিও উহার জন্য গোরোচনা, তীর্থের মাটী ও দূর্ব্বার অগ্র দিয়া, মাঙ্গলিক অনুলেপন তৈয়ার করি।

প্রিয়ংবদা তাহাই করিতে লাগিল, অনসূয়া চলিয়া গেল।

(ত) নেপথ্যে। গৌতমি! বৎসা শকুন্তলাকে নিয়া যাইবার জন্য শাঙ্গর্ব ও শারদ্বতমিশ্রপ্রভৃতিকে আদেশ কর যে, তোমরা সজ্জীভূত হও।

(১) প্রিয়ংবদা। তহ করীঅদু। প্রিয়ংবদা নাম্নৈব সুমনসঃ গৃহ্ণাতি।
(২) নেপথ্যে। গৌতমি! আদিশ্যন্তাং শাঙ্গর্বমিশ্রাঃ শকুন্তলানয়নায়।
(৩) প্রিয়ংবদা। কর্ণং দত্ত্বা।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन। समालम्भनहस्ता प्रविश्य। सहि! एहि गच्छम्ह।
इति परिक्रामतः (१)। (द)

प्रियं (२)। विलोक्य। एसा सुज्जोदए किदमज्जणा पड़िच्छिदणीवारभाअणाहिं सोत्थिवाअणिआहिं तावसीहिं अहिणन्दीअमाणा चिट्ठदि सउन्तला, ता उवसप्पह्म णं। इत्युभे तथा कुरुतः (३)। (ध)

---

(द) सखि! एहि गच्छावः।

(ध) एषा सूर्य्योदये कृतमज्जना प्रतीष्टनीवाराभिः स्वस्तिवाचनिकाभिः तापसीभिरभिनन्द्यमाना तिष्ठति शकुन्तला, तदुपसर्पाव एनाम्।

---

(थ) प्रियमिति। हस्तिनापुरं गमिष्यन्तीति हस्तिनापुरगामिनः। शब्दायन्ते शब्दं कुर्वन्ति कोलाहलं कुर्वन्तीत्यर्थः। अतएव शकुन्तलां प्रसाधयितुं त्वरस्वेति भावः।

(द) अनेति। समालम्भनम् उक्तानुलेपनं हस्ते यस्याः सा।

(ध) प्रियमिति। सूर्य्योदये पतिगृहे गमनानुरोधात् सूर्य्योदय एवेत्यर्थः, कृतं मज्जनमवगाहनस्नानं यया सा। "अस्नातस्तु पुमान्नार्हो जप्यादिहवनादिषु" इति श्रुतेर्यात्मकवैधकर्म्माधिकारार्थं शरीरसौन्दर्य्यार्थञ्च कृतमज्जनेत्याशयः। प्रतीष्टा मङ्गलार्थं गृहीता नीवारा मुनिधान्यतण्डुला याभिस्ताभिः, स्वस्तिवचनेन आशीर्वादेन संसृष्टा इति स्वस्तिवाचनिकास्ताभिः। "क्वचिदुत्तरपदस्य" इति परपदे दीर्घः। अभिनन्द्यमाना आशीरादिभिः संवर्द्ध्यमाना। उभे सख्यौ, तथा उपसर्पणम्।

---

(थ) প্রিয়ংবদা। অনসূয়া! ত্বরা কর, ত্বরা কর; হস্তিনাপুরগামী ঋষিরা এই কোলাহল করিতেছেন।

(দ) অনসূয়া। (অনুলেপনহস্তে প্রবেশ করিয়া) সখি! আইস যাই। (এই বলিয়া উভয়ে পাদক্ষেপ করিতে লাগিল।)

---

(१) परिक्रामतः।

(२)…सुज्जोदए एव्व सिहामज्जिदा पड़िच्छिदणीवारहत्थाहिं उवसप्पामो णं। उपसर्पतः। (३)…यथोद्दिष्टव्यापारा आसनस्था शकुन्तला।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ততঃ প্রবিশতি যথানির্দ্দিষ্টব্যাপারা সপরিবারা শকুন্তলা। (ন)

শকু। ভঅবদীও বন্দামি (১)। (প)

গীতমী। জাদে! ভত্তুণো বহুমাণসুহহেতুঅং দেবীসদ্দং অহিগচ্ছ (২)। (ফ)

(প) ভগবতীর্বন্দে।

(ফ) জাতে! ভর্ত্তুর্বহুমানসুখহেতুকং দেবীশব্দমভিগচ্ছ।

(ন) তত ইতি। যথানির্দ্দিষ্টব্যাপারা মজ্জনাভিনন্দনব্যাপারান্বিতা সপরি[illegible] তাপসীভিঃ পরিবৃতা।

(প) শকু ইতি। ভগবতীর্যুষ্মান্ তাপসীঃ।

(ফ) গীতমীতি। জাতে! তনয়ি! ভর্ত্তুর্দুষ্মন্তস্য বহুমানঃ অত্যাদরঃ [illegible] প্রকারেণ সুখস্য তয়োর্হেতুকং হেতুভূতম্, দেবীশব্দম্ অভিগচ্ছ প্রাপ্নুহি, দুষ্মন্তস্য [illegible] ভবেত্যর্থঃ। "দেবী কৃতাভিষেকায়ামিতরাসু চ ভট্টিনী" ইত্যমরঃ।

(ধ) প্রিয়ংবদা। (দেখিয়া) এই শকুন্তলা, সূর্য্যোদয়ের স[...] স্নান করিয়া অবস্থান করিতেছে; আর উড়ীধানের পাত্র হাতে করি[...] আশীর্ব্বাদের নিমিত্ত আগত তাপসীরা উহার সংবর্দ্ধনা করিতেছে[...] অতএব উহার নিকটে যাই। (এই বলিয়া উভয়ে শকুন্ত[...] নিকটে গেল।)

(ন) তদনন্তর নির্দ্দিষ্টরূপে তাপসীগণে পরিবেষ্টিত হইয়া, শকুন্ত[...] প্রবেশ।

(প) শকুন্তলা। আপনাদিগকে নমস্কার করি।

(ফ) গৌতমী। বৎসে! ভর্ত্তার আদর ও সুখের কারণ দেবী[...] লাভ কর।

(১) অয়ং পাঠঃ ক্বচিন্নাস্তি।

(২) শকুন্তলাং প্রতি তাপসীনামন্যতমা। বহুমাণসূঅঅং মহাদেইসদ্দং [...]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तापस्यः। वीरप्पसविणी होहि। इत्याशिषो दत्त्वा गौतमीवर्जं सर्वा निष्क्रान्ताः (१)। (ब)

सख्यौ। उपगम्य। सुमज्जणं दे भूदं ? (२)। (भ)

शकु। साअदं पिअसहीणं ? इदो णिसीदध (३)। (म)

सख्यौ। उपविश्य। हला! उज्जुआ दाव होहि, जाव दे मङ्गलसमालहणं करेह्म (४)। (य)

---

(ब) वीरप्रसविनी भव।

(भ) सुमज्जनं ते भूतम्।

(म) स्वागतं प्रियसख्योः ? इतो निषीदतम्।

(य) हला! ऋजुका तावत् भव, यावत्ते मङ्गलसमालम्भनं कुर्वः।

---

(ब) तापस्य इति। वीरं पुत्रं प्रसोतुं शीलं यस्याः सा वीरप्रसविनी। "प्रजु-सुवोरिन्" इतीनप्रत्ययः। गौतमीं वर्जयित्वेति गौतमीवर्जम्। कर्मस्रण्।

(भ) सख्याविति। सुमज्जनमवगाहनम्, ते भूतमिति काक्वा प्रश्नो व्यज्यते।

(म) शकु इति। स्वागतं सुखेनागमनं जातं किमिति काकुः। इतः अस्मिन् स्थाने, निषीदतम् उपविशतम्।

---

(ब) তাপসীগণ। বীরপ্রসবিনী হও। (এইভাবে আশীর্ব্বাদ করিয়া গৌতমী ভিন্ন আর সকলেই চলিয়া গেলেন।)

(ভ) সখীদ্বয়। (নিকটে যাইয়া) তোমার স্নান হইয়াছে ?।

(ম) শকুন্তলা। সখীদের শুভাগমন ত ? এইখানে উপবেশন কর।

---

(१) द्वितीया। वच्छे! वीरप्पसविणी होहि। तृतीया। वच्छे! भत्तुणो बहुमदा होहि। आशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः।

(२) सख्यौ। उपसृत्य। सहि! सुहमज्जणं दे होदु। (३) साअदं मे सहीणं।

(४) उभे। मङ्गलपात्राण्यादाय उपविश्य। हला! सज्जा होहि, जाव मङ्गलसमालम्भणं विरचेम।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। उइदं पि एदं अज्ज बहुमणिदव्वं, जदो दुल्ल
दाव पुणो मे पिअसहीमण्डणं भविस्सदि। इति बा
विसृजति (१)। (र).

सख्यौ। सहि! ण जुत्तं मङ्गलकाले रोदिदुं
इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः (२)। (ल)

(र) उचितमप्येतत् अद्य बहुमन्तव्यम्, यतो दुर्लभं तावत् पुनर्मे प्रियसखीमण्डनं भविष्यति।

(ल) सखि! न युक्तं मङ्गलकाले रोदितुम्।

(य) सख्याविति। हलेति सम्बोधने। तावत् कालं व्याप्य, ऋजुना सरलभावेन दण्डायमाना भव, यावत् कालं व्याप्य, ते तव मङ्गलसमालम्भनं माङ्गलिक गात्रानुलेपनम्।

(र) शकु इति। उचितमपि चिराभ्यस्तमपि एतत् युष्मत्कर्तृकं गात्रानुलेपनम् अद्य बहुमन्तव्यम् अतिशयेनादर्त्तव्यम्। भविष्यतीति भाविविच्छेदादिति भावः। बा विच्छेदस्मरणेन शोकोदयात् अश्रुजलम्।

(ल) सख्याविति। मङ्गलकाले पतिगृहे माङ्गलिकक्रियाकाले, कुर्वत्योः पतिगृहगमनं मङ्गलमेवेति भावः। अश्रूणि शकुन्तलाया नयनजलानि। प्रसाधनं अलङ्कुरुतः।

(य) সখীদ্বয়। ( উপবেশন করিয়া ) ওলো! সোজা হ দাঁড়াও, তোমার মাঙ্গলিক গাত্রানুলেপন করিব।

(র) শকুন্তলা। ইহা চিরকালের অভ্যস্ত হইলেও, আজ ইহা বিশেষ আদর করিতে হইবে; কারণ, আবার প্রিয়সখীদের দ্বারা সজ্জিত হওয়া আমার পক্ষে দুর্ল্লভ হইবে। ( এই বলিয়া অশ্রু বর্ষণ করিতে লাগিল। )

(१) इदं वि बहुमन्तव्वं। दुल्लहं दाणिं मे सहीमण्डणं होहिइ।

(२) उभे। सहि! उइदं ण दे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियं। सहि! आहरणारिहं दे रूअं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि (१)। (व)

प्रविश्य आभरणहस्त ऋषिकुमारः। इदमलङ्कारजातम्, अलङ्क्रियतामायुष्मती (२)। (श)

सर्वा विलोक्य विस्मिताः। (ष)

(व) सखि! आभरणार्हं ते रूपम् आश्रमसुलभैः प्रसाधनैः विप्रकार्य्यते।

---

(व) प्रियमिति। आभरणार्हं कटककुण्डलाद्यलङ्कारयोग्यम्। रूपमाकृतिः। अतएव आश्रमे सुलभैरनायासलभ्यैः कुसुमादिभिः प्रसाधनैरलङ्कारैः, विप्रकार्य्यते निन्द्यते। हन्त! मनोहरमिदं रूपं तुच्छैः पुष्पादिभिर्भूषितमिति लोकनिन्दा जन्यत इत्यर्थः।

"निकारो विप्रकारः स्यात्" इत्यमरः।

(श) प्रविश्येति। परिचयात् पूर्वं नामापरिज्ञानेन ऋषिकुमार इति सामान्यतो निर्द्देशः। अलङ्काराणां जातं समूहः। अलङ्क्रियताम् एतेन भूष्यताम्, आयुष्मती प्रशस्तायुःशालिनी शकुन्तला।

(ष) सर्वा इति। विस्मिताः अलङ्काराणां बहुमूल्यत्वात् प्रचुरत्वात् हठात् प्राप्तत्वाच्चेति भावः।

---

(ল) সখীদ্বয়। সখি! মঙ্গলের সময় রোদন করা উচিত নহে। (এই বলিয়া, চোখের জল মুছাইয়া, অভিনয়ের ধরণে সাজাইতে লাগিল।)

(ব) প্রিয়ংবদা। সখি! বাস্তবিক অলঙ্কারের যোগ্য তোমার আকৃতি, তপোবনের অনায়াসলভ্য পুষ্পপ্রভৃতি অলঙ্কারে নিন্দিত হইতেছে।

(শ) কোন মুনিকুমার অলঙ্কার হস্তে প্রবেশ করিয়া। এই অলঙ্কারসমূহ; ইহাদ্বারা আয়ুষ্মতী শকুন্তলাকে অলঙ্কৃত কর।

---

(१) आहरणोइदं रूवं।

(२) प्रविश्य उपायनहस्तौ ऋषिकुमारकौ। इदमलङ्करणम्, अलङ्क्रियतामत्रभवती।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

গৌতমী। বচ্ছ! হারীদ! কুদো ইদং আসাদিদং? (১)। (য)

হারী। তাতকণ্বপ্রভাবাত্ (২)। (হ)

গৌতমী। কিং মাণসী সিদ্ধী। (ক্ষ)

হারী। ন খলু, শ্রূয়তাম্, তত্রভবতা কণ্বেন বয়মাজ্ঞপ্তাঃ শকুন্তলাহেতোর্বনস্পতিভ্যঃ কুসুমান্যাহরতেতি। ততশ্চ—(৩) (ক)

(য) বত্স! হারীত! কুত ইদমাসাদিতম্?।

(ক্ষ) কিং মানসী সিদ্ধিঃ?।

(য) গৌতমীতি। আসাদিতং লব্ধম্।

(হ) হারীতি। গৌতম্যা ঋষিকুমারস্য নাম্নঃ পরিচায়িতত্বাত্ হারীত ইতি নির্দ্দেশ্যে সংক্ষেপার্থং হারীতি নির্দ্দেশঃ। তাতস্য গুরুত্বেন পিতৃস্থানীয়স্য কণ্বস্য প্রভাবাত্ মযা আসাদিতমিত্যন্বয়ঃ।

(ক্ষ) গৌতমীতি। মনস ইয়ং মানসী তপঃপ্রভাবাত্ মনঃসঙ্কল্পমাত্রেণ বস্তু-সম্ভারজাতস্য কিং সিদ্ধিরিত্যর্থঃ।

(ক) হারীতি। ন খলু মানসী সিদ্ধিরিত্যন্বয়ঃ। বনস্পতিভ্যো বৃক্ষেভ্যঃ। "বনস্পতির্দ্রুমাত্রে" ইতি বিশ্বঃ।

(য) (সকলে দেখিয়া বিস্ময়াপন্ন হইল।)

(স) গৌতমী। বৎস! হারীত! ইহা কোথা হইতে পাইলে?

(হ) হারীত। পিতা কণ্বের প্রভাবে।

(ক্ষ) গৌতমী। এগুলি কি কেবল মনের সঙ্কল্পেই জন্মিয়াছে?

(ক) হারীত। না, শুনুন, পূজনীয় কণ্ব, "শকুন্তলার জন্য বৃক্ষ হইতে পুষ্প আনয়ন কর" এইরূপ আমাদিগকে আদেশ করিয়াছিলেন। তাহার পর—

(১) গৌতমী। কুতো এতং?। (২) প্রথমঃ। তাতকাশ্যপপ্রভাবাত্।

(৩) দ্বিতীয়ঃ। তত্রভবতা বয়ম্। তত ইদানীম্।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित्।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै:
दत्तान्याभरणानि नः किसलयच्छायापरिस्पर्द्धिभिः (१) ॥७॥

क्षौममिति। केनचित् तरुणा, इन्दुवत् चन्द्रवत् पाण्डु शुभ्रम्, माङ्गल्यं मङ्गलाय …हितम्, क्षौमं पट्टवस्त्रम्, आविष्कृतं स्वदेहादाविष्कृत्य समर्पितम्। केनचित् …रेण तरुणा, चरणयोरुपरागे रञ्जने सुभगो मनोहरः, लाक्षारसः अलक्तकद्रवः, …ष्ठ्यूत उद्गीर्णः वहिष्कृत्य दत्तः। तथा अन्येभ्यस्तरुभ्यः, आपर्वभागं मणिबन्ध…न्तम् उत्थितैर्वहिर्गतैः, किसलयानां पल्लवानां छायां कान्तिं परिस्पर्द्धितुमनुकर्त्तुं …शं येषां तैः पल्लववत् पाटलवर्णैरित्यर्थः, वनदेवतानां करतलैः पाणिभिः कर्त्तृभिः, …यथाकसन्निके आभरणानि नानाविधालङ्काराः, दत्तानि अकुन्तलार्थमर्पितानि।
…अत्र इन्दुपाण्डु इति किसलयच्छायापरिस्पर्द्धिभिरिति समासगतं लुप्तोपमाद्वयम्, …स्य परस्परनिरपेक्षस्थितेः संसृष्टिः। तथा निरुक्तिर्नाम लक्षणञ्च। यथा दर्पणे—

"पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्त्यते।"

"सुन्दरेऽधिकभाग्ये च दुर्हृन्नेतरवाससि। तुरीयांशे श्रीमति च सुभगः—" इति …र्णवः। "छाया सूर्यप्रियाकान्तिप्रतिविम्बमनातपः" इत्यमरः।
शार्दूलविक्रीड़ितं वृत्तम् ॥७॥

…কোন বৃক্ষ, চন্দ্রের ন্যায় শুভ্রবর্ণ মাঙ্গলিক পট্টবস্ত্র আবিষ্কার করিয়া …; কোন বৃক্ষ, চরণ রঞ্জিত করিবার পক্ষে বড়ই সুন্দর অলক্তক …ত করিয়া সমর্পণ করিল এবং অন্যান্য বৃক্ষ হইতে, মণিবন্ধদেশ-…স্থ উত্থিত পল্লবশোভানুকারী বনদেবতাদিগের হস্ত, আমাদের …ট নানাবিধ অলঙ্কার দিল ॥৭॥

(१) दत्तान्याभरणानि। तत्किसलयोद्भेदप्रतिद्वन्द्विभिः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रियं। शकुन्तलां विलोक्य। हला! कोडरसम्भवा वि म
अरी पोक्खरमहु ज्जेव अहिलसदि (१)। (ख)

गौतमी। जादे! इमाए अब्भुववत्तीए सूइदा भ
गेहे अणुहोदव्वा राअलच्छी। (ग)

शकु। लज्जां नाटयति (२)। (घ)

(ख) हला! कोटरसम्भवापि मधुकरी पुष्करमध्वेव अभिलषति।

(ग) जाते! अनया अभ्युपपत्त्या सूचिता भर्तुर्गेहे अनुभवितव्या राजलक्ष्मीः

(ख) प्रियमिति। कोटरे तरुगात्रस्थविवरे सम्भवतीति सा, मधुकरी पुष्करस्य पद्मस्य मधु एव अभिलषति अभिलष्य प्राप्नोति। तथा चैवं श तपोवनजातापि हर्म्यवासिनीभोग्यानलङ्कारान् प्राप्नोति भावः।

अतएवात्र अप्रस्तुतात् समात् प्रस्तुतस्यप्रतीतेरप्रस्तुतप्रशंसालङ्कारः।

(ग) गौतमीति। जादे! तनये! अनया वसनभूषणादिदानात् वनदे कृतया अभ्युपपत्त्या अनुग्रहेण। राजलक्ष्मी राजमहिष्युपयोगिसम्पत्, सूचिता त्वया शकुन्तलया भोक्तव्यत्वेन ज्ञापिता, उपक्रमे सुखभोगापाते भाविसु सर्वत्र दर्शनात् उपक्रम एव च वनदेवतादत्तवसनभूषणादिलाभेन शकुन्तला भोगापातादित्याशयः।

"अभ्युपपत्तिरनुग्रहः" इत्यमरः।

(খ) প্রিয়ংবদা। (শকুন্তলার দিকে চাহিয়া) ওলো! জাতা ভ্রমরীও, পদ্মের মধুই চায়।

(গ) গৌতমী। বৎসে! বনদেবতাদের এই অনুগ্রহে বুঝা যাইতেছে যে, তুই ভর্ত্তার গৃহে রাজলক্ষ্মী ভোগ করিতে পারি

(ঘ) শকুন্তলা। (লজ্জা অভিনয় করিল।)

(१) हला! इमाए इत्यादि परवाक्यम्।

(२) शकुन्तला। व्रीडां रूपयति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हारी। यावदिमां वनस्पतिसेवामभिषेकार्थं मालिनीमवतीर्णाय तत्रभवते कण्वाय निवेदयामि। इति निष्क्रान्तः (१)। (ङ)

अन। सहि! अणणुभूदभूसणो अअं जणो कधं तुमं अलङ्करेदि। चिन्तयित्वा विलोक्य च। चित्तपरिचएण दाणिं दे अङ्गेसु आहरणविणिओअं करेम्ह (२)। (च)

---

(च) सखि! अननुभूतभूषणः अयं जनः कथं त्वामलङ्करोति। चित्रपरिचयेन इदानीं ते अङ्गेषु आभरणविनियोगं कुर्वः।

---

(ग) शङ्क इति। नाटयति अभिनयति, गुरुजनेन सह कथोत्थापने स्त्रीणां लज्जायाः स्वाभाविकत्वादिति भावः।

(ङ) हारीति। यावच्छब्दो वाक्यालङ्कारे। वनस्पतिसेवां तपोवनतरुसमूहकृतपरिचर्यां वसनभूषणादिदानेन तत्कृतोपकारमित्यर्थः, अभिषेकार्थं स्नानार्थम्, मालिनीं तदाख्यां नदीम्। तथा चैतच्छ्रवणे कण्वस्य महान् सन्तोषो भवेदिति भावः।

(च) अनेति। अननुभूतानि धारणेन दर्शनेन वा न ज्ञातानि भूषणानि येन सः, कदाचिदपि नाहमलङ्कारान् धृतवती न वा अन्यत्रापि दृष्टवतीत्यर्थः, अयं मत्स्वरूपो जनः, कथमलङ्करोति अलङ्कर्तुं शक्नोति, कथमपि नेत्यर्थः, अलङ्कारनिवेशनस्थानापरिचयादिति भावः। चिन्तयित्वा अलङ्कारार्पणदेशं विभाव्य, विलोक्य चित्रस्मरणेन शकुन्तलायास्तत्तदङ्गं निरूप्य। चित्रपरिचयेन आलेख्यपटे स्त्रिया यत्र यत्राङ्गे यद्यदाभरणं तिष्ठति, तत्तत्स्मरणेनेत्यर्थः। आभरणविनियोगम् अलङ्कारपरिधापनम्।

---

(ङ) হারীত। পূজনীয় কণ্ব, স্নান করিবার জন্য মালিনীনদীতে নামিয়াছেন; বৃক্ষগণের এই সেবা তাঁহাকে গিয়া জানাই। (এই বলিয়া চলিয়া গেল।)

---

(१) प्रथमः। गौतम! एह्येहि, अभिषेकोत्तीर्णाय काश्यपाय वनस्पतिसेवां निवेदयावः। द्वितीयः। तथा। निष्क्रान्तौ।

(२) सख्यौ। अए अणवहुत्तभूसणो अअं जणो। चित्तकम्मपरिचएण अङ्गेसु दे।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। जाणामि वो णिउणत्तणं। (छ)

सख्यौ। नाट्येनालङ्कारान् विनियुञ्जाते (१)। (ज)

ततः प्रविशति स्नानोत्तीर्णः कण्वः (२)। (झ)

कण्वः। विचिन्त्य (३)

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः (४)॥

इति परिक्रामति।

---

(छ) जानामि वां निपुणत्वम्।

---

(छ) शकु इति। वां युवयोः। तथा च सर्वेष्वेव विषयेषु युवयोर्नै... सत्त्वादत्रापि तन्नैपुण्यमभ्याहृतमेवेति भावः।

(ज) सख्याविति। नाट्येन अभिनयमात्रेण, न पुनर्वास्तविकत्वेनेत्यर्थः। वि... युञ्जाते परिधापयतः।

(झ) तत इति। स्नानोत्तीर्णः स्नानात् परं मालिनीनदीत उत्थितः। ए... आर्द्रदेहत्वं सूचितम्।

---

(চ) অনসূয়া। সখি! এই ব্যক্তি অলঙ্কারের কোন অনু... করে নাই; সুতরাং কি প্রকারে তোমাকে অলঙ্কৃত করিবে। (চি... করিয়া এবং দেখিয়া) চিত্রের পরিচয়ে এখন তোমার অঙ্গে অল... সন্নিবিষ্ট করিব।

(ছ) শকুন্তলা। তোমাদের নৈপুণ্য জানি।

(জ) সখীদ্বয়। (অভিনয়ের ধরণে অলঙ্কার পরাইতে লাগিল।)

---

(१) उभे। नाट्येनालङ्कुरुतः। (२) स्नानोत्तीर्णः काश्यपः।
(३) काश्यपः। (४) अन्तर्वाष्पभरोपरोधि गदितं। तावदीदृशमपि। वयं...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यास्यतीति । अद्य शकुन्तला यास्यति पतिगृहं गमिष्यति, इति हेतोः, उत्कण्ठया उन्मनस्कत्वभावेन, हृदयं मम मनः, संस्पृष्टं सम्बद्धमाक्रान्तमिति यावत्, कण्ठः स्वरः, स्तम्भितानामन्तर्निरुद्धानामपि वाष्पाणाम् अश्रुजलानां वृत्त्या पुनरागमेन कलुषः अस्वच्छः अस्पष्ट इत्यर्थः; तथा दर्शनं दृष्टिपातः, चिन्तया शकुन्तलावियोगभावनया जडं विषयपरिच्छेदासमर्थं जातमिति शेषः। तेन च, अरण्यं वनमेव ओकः आश्रयो यस्य तस्यापि सर्वदा वनवासिनोऽपीत्यर्थः मम, स्नेहात् शकुन्तलां प्रति वात्सल्यात्, ईदृशं सातिशयमिति तात्पर्य्यम्, वैक्लव्यं विह्वलत्वम्, तावत् जातमिति शेषः, अतएव नवैर्नूतनैः, तनयाविश्लेषदुःखैः कन्यावियोगकष्टैः, गृहिणो गृहस्थजनाः, कथं न पीड्यन्ते क्लिश्यन्ते, अवश्यमेव पीड्यन्त इत्यर्थः। सर्वथा विषयपराङ्मुखस्य वानप्रस्थिजनस्य कन्याविच्छेददुःखसम्भवे विषयकूपमग्नस्य गृहस्थस्य तादृशदुःखमवश्यमेव सम्भवतीति भावः।

अत्र वैक्लव्यं प्रति उत्कण्ठास्पर्शरूपे एकस्मिन् कारणे सत्यपि कण्ठकालुष्यादि-कारणान्तरद्वयोपन्यासात् समुच्चयोऽलङ्कारः, परार्द्धे अर्थापत्तिश्च, एतेषां परस्पर-निरपेक्षतया संसृष्टिः। तथा अरण्यौकस इत्यतः परं स्थितियोग्यस्य अपिशब्दस्य ईदृशमित्यतः परं पाठादक्रमतादोषः, स च 'वैक्लव्यं वनवासिनोऽपि मम तत्स्नेहात् किन्तु तादृशम्' इति पाठेन समाधेयः।

"स्वरेऽपि कण्ठ आख्यातः" इति हारावली। "ओक आश्रयमात्रे स्यान्मन्दिरे च नपुंसकम्" इति मेदिनी। शार्दूलविक्रीडितं वृत्तम् ॥८॥

---

(ঝ) তদনন্তর স্নানের পর মালিনীনদী হইতে উত্থিত কণ্বের প্রবেশ।

কণ্ব। (চিন্তা করিয়া) আজ শকুন্তলা যাইবে, এই জন্য উৎকণ্ঠা আসিয়া হৃদয় অধিকার করিয়াছে; অশ্রুজল অবরুদ্ধ করি, আবার তাহা আসিয়া কণ্ঠস্বর অস্পষ্ট করিয়া ফেলিতেছে এবং দৃষ্টিশক্তি, চিন্তা-বশতঃ কুণ্ঠিত হইতেছে। আমি বনবাসী; তাহাতে স্নেহবশতঃ আমারই এইরূপ বিহ্বলতা উপস্থিত হইয়াছে; সুতরাং নবীন কন্যা-বিচ্ছেদদুঃখে গৃহীরা পীড়িত না হইবে কেন ॥৮॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सख्यौ। हला सउन्तले! अवसिदमण्डणासि, सम्पदं परिहेहि क्खोमजुअलं। (ञ)

शकु। उत्थाय नाट्येन परिधत्ते। (ट)

गौतमी। जादे! एस दे आणन्द-वाप्प-परिवाहिणा लोअणेण परिस्सजन्तो विअ गुरू उवत्थिदो; ता समुदाआरं पड़िवज्जस्स (१)। (ठ)

(ञ) हला शकुन्तले! अवसितमण्डनासि, साम्प्रतं परिधेहि चौमयुगलम्।

(ठ) जाते! एष ते आनन्दवाष्पपरिवाहिना लोचनेन परिष्वजमान इव गुरुरुपस्थितः; तत् समुदाचारं प्रतिपद्यस्व।

(ञ) सख्याविति। अवसितमण्डना समाप्तप्रसाधना। चौमयुगलं पट्टवस्त्रद्वयं। "नैकवस्त्रधरस्तथा" इत्यनेन वैधकर्ममात्रे एकवस्त्रधारणनिषेधात् यात्रायाश्च वैधत्वरूपत्वात् चौमयुगलमित्युक्तम्।

(ट) शकु इति। उपविष्टस्य वस्त्रपरिधाने विशेषासुविधा स्यादत उत्थायेति।

(ठ) गौतमीति। आनन्देन कन्यायाः पतिसंयोगप्राप्तिसम्भावनाजनितहर्षेण निर्गतो वाष्प आनन्दवाष्पस्तं परिवहति धारयतीति तेन। परिष्वजमान इव पतिसंयोगादालिङ्गन्निव, गुरुः पिता। समुदाचारं समुपयुक्तव्यवहारं चरणवन्दनादिकं प्रतिपद्यस्व प्राप्नुहि कुरु इति तात्पर्य्यम्। अन्यमनस्कतया वन्दनविस्मरणे शङ्कया गौतम्योक्तमिदम्।

(এই বলিয়া পদক্ষেপ করিতে লাগিলেন।)

(ঞ) সখীদ্বয়। শকুন্তলা! তোমাকে অলঙ্কার পরাণ শেষ হইয়াছে; এখন পট্টবস্ত্র দুইখানি পর।

(ট) শকুন্তলা। (উঠিয়া অভিনয়ের ধরণে পরিধান করিল।)

(ঠ) গৌতমী। বৎসে! আনন্দাশ্রুবর্ষী নয়নদ্বারা আলি

(१) आणन्दपरिवाहिणा चक्खुणा। आचारं दाव।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। सव्रीड़ं वन्दनां करोति (१)। (ङ)

कण्वः। वत्से!

ययातेरिव शर्म्मिष्ठा भर्त्तुर्बहुमता भव।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि (२) ॥८॥

(ङ) शकु इति। सव्रीड़ं सलज्जम्। नवीनकुलस्त्रियाः गुरुजनान्तिके पतिविषयकव्यापारमात्रस्यैव लज्जाकरत्वादत्र च पतिगृहे यात्राप्रस्तावात् सव्रीड़मित्युक्तम्।

ययातेरिति। ययातिः तदाख्यस्य प्रसिद्धस्य राज्ञः, शर्म्मिष्ठा वृषपर्वदुहिता इव, त्वं भर्त्तुर्दुष्मन्तस्य, बहुमता अत्यादरविषयभूता भव। तथा सा शर्म्मिष्ठा, पूरुं तदाख्यं पुत्रमिव, त्वमपि सम्राजं भाविमण्डलेश्वरम्, पुत्रम्, अवाप्नुहि लभस्व।

अत्र द्वयोः श्रौतीपमालङ्कारयोः परस्परनिरपेक्षतया संसृष्टिः। तथा शर्म्मिष्ठा ययातेर्बहुमता अभूत्, त्वन्तु भव इति, एवं सा पूरुमवाप्तवती, त्वञ्च पुत्रम् अवाप्नुहि इति विधिभेदात् कालभेदाच्च भग्नप्रक्रमतादोषद्वयम् "चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा" इति दर्पणोदाहृतवत्; तत्समाधानाय चैवं श्लोकः पठनीयः—

ययातेरिव शर्म्मिष्ठा भर्त्तुर्बहुमता सती।
सम्राजं पूरुवत् पुत्रं तत्समा त्वमवाप्नुहि ॥

तत्समा शर्म्मिष्ठातुल्या त्वमित्यर्थः। इत्थञ्च आर्थोपमायामुपमानसम्बन्धिक्रियानपेक्षणान्नोक्तदोष इति सुधीभिर्भाव्यम्।

एवमत्र आशीर्नाम नाट्यालङ्कारः—"आशीरिष्टजनाशंसा" इति दर्पणलक्षणात्।

"येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्—" इत्यमरः।

---

করতই যেন তোমার পিতা এই উপস্থিত হইয়াছেন; অতএব উপযুক্ত আচার সম্পাদন কর।

(ঙ) শকুন্তলা। (লজ্জার সহিত নমস্কার করিল।)

---

(१) सव्रीड़म्। ताद! वन्दामि। (२) सुतं त्वमपि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गौतमी । जादे ! वरो क्खु, एसो, ण आसिसो (१) । (ढ)

कण्वः । वत्से ! इतः सद्योहुतानग्नीन् प्रदक्षिणी-कुरुस्व । (ण)

सर्वे तथा कारयितुं परिक्रामन्ति (२) । (त)

(ढ) जाते ! वरः खल्वेष, न आशीः ।

ययातिपुत्रानाह विष्णुपुराणम्—

"यदुञ्च तुर्वसुञ्चैव देवयानी व्यजीजनत् ।
द्रुह्युञ्चानुञ्च पूरुञ्च शर्म्मिष्ठा वार्षपर्वणी ॥" ॥८॥

(ढ) गौतमीति । एष "ययातेरिव शर्म्मिष्ठा" इत्यादिरूपः वरः खलु वा एव महर्षेः प्रभावातिशयेन वरदाने समर्थत्वात् त्वां प्रति तथा सन्तुष्टत्वाच्चेति भावः । न आशीः "ययातेरिव" इत्यादि वाक्यं नाशीर्वादः तस्य येन केनापि कर्त्तुं शक्यत्वेन सर्वं-स्यव प्रवृत्तौ विशेषप्रयोजनाभावात् । तेन चैतत्फलं त्वमवश्यमेव प्राप्स्यसीत्याशयः । ध्रुवफलकमिष्टार्थाशंसनं वरः, अध्रुवफलकमिष्टार्थाशंसनमाशीरित्युभयोर्भेदः ।

(ण) कण्व इति । इतः अस्यां दिशि । सद्योहुतान् अचिरदत्ताहुतीन् । एवं हव्यगन्धैरिति वक्ष्यमाणहव्यगन्धानां प्राचुर्य्यं व्यज्यते ।

(त) सर्वं इति । तथा—शकुन्तलाकर्त्तृकं प्रदक्षिणम् । परिक्रामन्ति पद-क्षेपं कुर्वन्ति ।

কণ্ব । বৎসে ! শর্ম্মিষ্ঠা যেমন যযাতির অত্যন্ত আদরের পাত্রী ছিলেন, তুমিও যেমন ভর্ত্তার অত্যন্ত আদরের পাত্র হও এবং তিনি ( শর্ম্মিষ্ঠা ) যেমন ভাবী সম্রাট্ পূরুকে পুত্ররূপে পাইয়াছিলেন, তুমিও তেমন ভাবী সম্রাট্ পুত্র লাভ কর ॥৭॥

(ঢ) গৌতমী । বৎসে ! ইহা বরই বটে, কিন্তু আশীর্বাদ নহে।

(ণ) কণ্ব । বৎসে ! এই দিকে সদ্য আহুত অগ্নিগুলিকে প্রদক্ষিণ কর ।

(१) भगवं ! वरो ण । (२) सर्वे परिक्रामन्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कण्वः। वत्से! (१)

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु ॥१०॥

अमी इति। वेदिं परितः वेद्याः सर्वासु दिक्षु, क्लृप्तानि रचितानि धिष्ण्यानि स्थानानि येषां ते, एतेन सर्वस्यामेव दिशि हव्यगन्धप्राप्तिसम्भवो दर्शितः। समिध एषां सन्तीति समिद्वन्तः। अनेनाग्नीनां स्थायित्वं सूचितम्। प्रान्तेषु सर्वेषु अग्नि-समीपदेशेषु संस्तीर्णा आस्तीर्णा दर्भाः कुशा येषां ते। एतेन प्रान्तदेशानामपि पवित्रतया दुरितनाशकत्वं सूचितम्। तथा हव्यानाम् आहुतानां घृतादिद्रव्याणां गन्धैः, दुरितं पापम्, अपघ्नन्तो नाशयन्तः, अमी दृश्यमानाः, वितानस्य यज्ञस्य इमे इति वैतानाः, वह्नयो दक्षिणाग्निगार्हपत्याहवनीयभेदात् त्रिविधा अग्नयः, त्वां पावयन्तु पवित्रीकुर्वन्तु।

अत्र विशेषणानां विशेषविशेषाभिप्रायेण प्रयुक्तत्वात् परिकरोऽलङ्कारः। अतएव च नापुष्टार्थत्वदोषः।

"क्रतुविस्तारयोरस्त्री वितानम्" इत्यमरः।

वेदिमिति परित इत्यस्य योगे "तसोभयाभिपरिसर्वैः" इत्यनेन द्वितीया।

अयन्तु सततवेदपाठनिरतकण्वप्रयुक्तो वैदिक एव छन्दोविशेषः। तथा च "अग्नी षोमौ ज्जुषमाणोऽनुशेते" इत्यादिवत् प्रथमपादस्तृतीयपादश्च; "जहत्येनां सुत्तभीगा-मग्नीऽस्थः" इत्यादिवत् द्वितीयपादः, चतुर्थपादस्तु शालिन्या एव "मात्तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात्। अतएवेदमुपजातिविशेषं वदन्ति ॥१०॥

(ঙ) ( শকুন্তলাকে সেইরূপ করাইবার জন্য সকলে পাদক্ষেপ করিতে লাগিল। )

কণ্ব। বৎসে!

(१) काश्यपः। [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

শকু। প্রদক্ষিণং করোতি (১)।

কণ্বঃ। বৎসে! প্রতিষ্ঠস্বেদানীম্। সদৃষ্টিক্ষেপম্। ক্ব নু তে শাঙ্গরবশারদ্বতমিশ্রাঃ ? (২)। (থ)

শিষ্যৌ। প্রবিশ্য। ভগবন্! ইমৌ স্বঃ (৩)। (দ)

কণ্বঃ। বৎসৌ! ভগিন্যাঃ পন্থানমাদেশয়তম্ (৪)। (ধ)

(থ) কণ্ব ইতি। সদৃষ্টিক্ষেপং শাঙ্গরবাদীনামন্বেষণার্থং সর্বতো দৃষ্টিং পাতয়িত্বেত্যর্থঃ। তে পূর্বমাদিষ্টাঃ। ক্ব বর্ত্তন্ত ইতি শেষঃ।

(দ) শিষ্যাবিতি। স্বস্তিষ্ঠাবঃ, আবামিতি শেষঃ।

(ধ) কণ্ব ইতি। ভগিন্যাঃ শকুন্তলায়াঃ। যুবাং শিষ্যত্বেন মম পুত্রস্থানীয়ৌ, শকুন্তলা তু কন্যৈবেতি যুষ্মাকং পরস্পরং ভ্রাতৃভগিনীরূপ এব সম্বন্ধ ইতি ভাবঃ। আদেশয়তং যুবামিতি শেষঃ।

বেদির উপর সকল দিকেই এগুলির স্থান কল্পিত হইয়াছে, সমিধ রহিয়াছে, চারি প্রান্তেই কুশ আস্তীর্ণ আছে এবং ইহারা হবির গন্ধে পাপ নাশ করিতেছে, এই ত্রিবিধ যজ্ঞীয় অগ্নি তোমাকে পবিত্র করুক ॥১০॥

শকুন্তলা। (প্রদক্ষিণ করিল।)

(থ) কণ্ব। বৎস! এখন প্রস্থান কর। (দৃষ্টিক্ষেপের সহিত) সেই শার্ঙ্গরব ও শারদ্বতমিশ্র কোথায় ?।

(দ) শিষ্যদ্বয়। (প্রবেশ করিয়া) ভগবন্! আমরা এই আছি।

(ধ) কণ্ব। বৎস! তোমরা ভগিনীর পথ দেখাইয়া দাও।

(১) পাঠোঽয়ং ক্বচিন্নাস্তি।

(২)…পাবয়ন্তু। প্রতিষ্ঠস্বেদানীম্। ক্ব তে শাঙ্গরবমিশ্রাঃ ?।

(৩) শিষ্যঃ। ভগবন্! ইমে স্বঃ।

(৪) ভগিন্যাস্তে মার্গমাদেশয়।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिष्यौ। इत इतो भवती। (न)

सर्वे परिक्रामन्ति। (प)

कण्वः। भो भोः! सन्निहितवनदेवतास्तपोवन-तरवः! (१)। (फ)

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् (२) ॥११॥

(न) शिष्याविति। भवती शकुन्तला, इत इतः अनेनानेन पथा, गच्छत्विति शेषः।

(प) सर्वं इति। परिक्रामन्ति पादक्षेपं कुर्वन्ति।

(फ) कण्व इति। सन्निहिता अवस्थानेनासन्ना वनदेवता येषु ते तादृशाः!। तरूणामचेतनतया तत्सम्बोधनस्य निष्फलत्वात् तत्सम्बोधनमुखेन तदधिष्ठात्रीणां वनदेवतानामेवाभिमुख्यार्थमेतद्विशेषणम्। तेन च तरूणामपि ज्ञातज्ञता सम्पन्नेत्यवधेयम्।

पातुमिति। युष्मासु तपोवनतरुषु, असिक्तेषु युष्माकं मूले जलसेकेष्वकृतेषु, या शकुन्तला, प्रथमं जलं पातुं न व्यवस्यति न प्रवर्त्तते, युष्मान् प्रत्यादरातिशयादिति भावः। प्रियं प्रीतिकरं मण्डनं भूषणं यस्याः सा तथोक्तापि, या शकुन्तला, स्नेहेन भवतां तपोवनतरूणाम्, पल्लवं मण्डनभूतं किसलयम्, न आदत्ते न गृह्णाति, युष्माकं वेदनानुभवसम्भवादित्याशयः। तथा वो युष्माकं कुसुमप्रवृत्तिसमये पुष्पोत्पत्तिकाले

(न) শিষ্যদ্বয়। তুমি এই এই পথে চল।

(প) সকলে। ( পাদক্ষেপ করিতে লাগিল। )

(ফ) কণ্ব। ওহে ওহে! বনদেবতাসমন্বিত তপোবনের বৃক্ষসকল!

(१) काश्यपः। भो भोः सन्निहितास्तपोवनतरवः!।

(२) युष्मास्वपीतेषु वा। आद्ये वः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आकाशे। (ब)

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमरीचितापः।
भूयात् कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः (१) ॥१२॥

सर्वे सविस्मयमाकर्णयन्ति।

आदौ अस्मदादीनां सर्वेषामेव पूर्वम्, यस्याः शकुन्तलायाः, उत्सव आनन्दो भवति, युष्मान् प्रति स्नेहाधिक्यादित्यभिप्रायः। सा इयं शकुन्तला, पतिगृहं याति, सर्वैः युष्माभिः, अनुज्ञायतां तदनुमन्यताम्, युष्मदनुज्ञाया अभावे स्नेहाकर्षणेन यात्रा गमनमेव न सम्भवतीति भावः।

अत्र तरून् प्रति शकुन्तलायाः स्नेहाधिक्यप्रतिपादनकार्य्ये कारणत्रयोपन्यासात् समुच्चयोऽलङ्कारः। तथा व्यवस्यति भवतीति परस्मैपदिक्रियाद्वयस्य मध्ये आदत्ते इत्यात्मनेपदिक्रियाप्रयोगात् भग्नप्रक्रमतादोषः; स च 'गृह्णाति प्रियमण्डनापि न वः स्नेहाद्भवत्पल्लवम्' इति पाठेन समाधेयः।

शार्दूलविक्रीडितं वृत्तम् ॥११॥

(ब) आकाश इति। शून्ये तपोवनतरुस्थितवनदेवतानामुक्तिरियमित्याशयः।

रम्येति। अस्याः शकुन्तलायाः, पन्थाः पतिगृहगमनमार्गः, कमलिनीभिः पद्मलताभिः हरितैः पालाशवर्णैः सरोभिर्वापीभिः, रम्यं मनोहरम् अन्तरं मध्यदेशो यस्य स तादृशः

তোমাদের মূলে জল না দেওয়া হইলে, যে প্রথমে জলপান করিতে প্রবৃত্ত হয় না; অলঙ্কারপ্রিয় হইয়াও যে, স্নেহবশতঃ তোমাদের পল্লব গ্রহণ করে না এবং তোমাদের পুষ্পোৎপত্তির সময়ে সকলের আগে যাহার আমোদ হয়, সেই শকুন্তলা এই পতিগৃহে যাইতেছে; তোমরা সকলেই অনুমতি কর ॥১১॥

(१) अनुमतेत्यादिश्लोकात् परं रम्येत्यादिश्लोकः क्वचित् पठितः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार्ङ्ग°। कोकिलशब्दं सूचयित्वा। भगवन्! (१)। (भ)

छायाप्रधाना द्रुमा वृक्षाः, नियमितो निवारितः अर्कमरीचीनां रविकिरणानां तापो यत्र सः, कुशेशयरजसां पद्मपरागाणां मृदुः सुरभित्वात् कोमलो रेणुवत् वायुचालिताः मृदांशा यत्र स तादृशः, तथा शान्तः अवेगवाहित्वात् सौम्यः अनुकूलः पृष्ठतोगामी च पवनो वायुर्यस्मिन् स तथोक्तश्च भूयात्, अतएव शिवो मङ्गलकरश्च भूयात्। मध्ये सरोलाभात् पिपासानिवृत्तिः, छायाद्रुमलाभात् तापाभावे कष्टाधिक्यनिवृत्तिः, पद्मपराग-रेणुलाभादामोदप्राप्तिः, शान्तपवनप्राप्तौ श्रमापनोदनम्, पवनस्यानुकूलत्वे च मङ्गललाभ इति भावः।

अत्रापि पथः शिवत्वं प्रति अनेककारणोपन्यासात् समुच्चयोऽलङ्कारः।

कुशे जले शेते तिष्ठतीति कुशेशयम्। "प्रायेण सप्तम्या अलुक्" इत्यलुक् समासः। "कुमलम्, च" इति "सहस्रपत्रं कमलं शतपत्रं कुशेशयम्" इति चामरः।

अनुकूलपवनस्य मङ्गलसूचकत्वमुक्तं भट्टिटीकायाम्—

"वामे मधुरवाक् पक्षी वृक्षः पल्लवितोऽग्रतः।
अनुकूलो वहन् वायुः प्रयाणे शुभशंसिनः॥"

वसन्ततिलका वृत्तम् ॥१२॥

(भ) शार्ङ्गेति। सूचयित्वा स्वकण्ठेनैव प्रकाश्य।

(ব) (শূন্যে) পদ্মপাতায় হরিদ্বর্ণ সরোবরসমূহে পথের সমস্ত মধ্যভাগ সুন্দর হউক, ছায়াপ্রধান বটপ্রভৃতি বৃক্ষ, সূর্য্যকিরণের তাপ নিবারণ করুক এবং পদ্মের কোমলরেণুবাহী বায়ু, পৃষ্ঠদিক হইতে শান্তভাবে প্রবাহিত হউক; এইভাবে সমস্ত পথটী শকুন্তলার পক্ষে মঙ্গলময় হউক ॥১২॥

(সকলে বিস্ময়ের সহিত শুনিতে লাগিল।)

(ভ) শার্ঙ্গরব। (কোকিলের ন্যায় শব্দ করিয়া) ভগবন্!

(१) कोकिलरवं सूचयित्वा।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः।
परभृतविरुतं कलं यतः
प्रतिवचनीकृतमेभिरात्मनः (१) ॥१३॥

गौतमी। जादे। सा दिजणासिणिद्धाहिं अणुसादगमणासि तवोवणदेवदाहिं। ता पणम भअवदीणं (२)। (म)

(म) जाते! ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः। तत् प्रण भगवतीः।

अनुमतेति। इयं शकुन्तला, वनवासेन तपोवने एकत्रावस्थानेन बन्धवः सुह सौहार्दार्स्तैः, तरुभिर्वृक्षैः, अनुमतम् अनुज्ञातं गमनं भर्त्तृगृहे प्रस्थानं यस्याः तथोक्ता जाता। यतो हेतोः, एभिस्तरुभिः, कलं मधुरास्फुटम्, परैः काकैर्भि परिपाल्यत इति परभृतः कोकिलस्तस्य विरुतं रवः, आत्मनः स्वगणस्य, प्रतिवचनीकृ भवदनुज्ञाप्रार्थनस्य प्रत्युत्तरीकृतम्, इदानीममीषां मनुष्यवद्वागुच्चारणासम्भवात् आकस्मिककोकिलरव एव प्रतिवचनत्वेन मन्तव्य इति भावः।

अत्र परभृतविरुते प्रतिवचनत्वारोपस्य प्रकृतशकुन्तलागमनोपयोगितया परिण लङ्कारः, स च समानविभक्तिकत्वात् तुल्याधिकरणरूपः।

"वनप्रियः परभृतः कोकिलः पिक इत्यपि" इत्यमरः।

अपरवक्त्रं नाम वृत्तम्—"अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ" इति लक्षणात् ॥१३॥

(म) गौतमीति। ज्ञातिजनवत् स्वजनवत् स्निग्धाभिस्त्वां प्रति सौहृदयुक्ताभिः ...

তপোবনে একত্র বাসনিবন্ধন সঞ্জাতসৌহার্দ্দ বৃক্ষসমূহ, এই শকুন্তলাকে যাইবার অনুমতি দিয়াছে; যে হেতু ইহারা অস্পষ্ট অথচ মধুর কোকিল শব্দকে আপনাদের প্রত্যুত্তর করিয়াছে ॥১৩॥

(१) कलं यथा एभिरीदृशम्। (२) क्वचित् ता इति नास्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । सप्रणामं परिक्रम्य जनान्तिकम् । हला पिअंवदे ! अज्ज-उत्तदंसणोस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण चलणा मे पुरमुहा ण णिवड़न्ति (१) । (य)

प्रियं । ण केवलं तुमं ज्जेव तवोवणविरहकादरा, तुए उवत्थिदविओअस्स तवोवणस्स वि अवत्थं पेक्ख दाव (२) । (र)

(य) हला प्रियंवदे ! आर्य्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःखदुःखेन चरणौ मे पुरोमुखौ न निपततः ।

(र) न केवलं त्वमेव तपोवनविरहकातरा ; त्वयोपस्थितवियोगस्य तपोवनस्यापि अवस्थां प्रेक्षस्व तावत् ।

वनदेवताभिः, अनुज्ञातं गमनं यस्याः सा तादृशी असि । तत्तस्मात्, भगवतीर्माहात्म्यवतीर्वनदेवताः ।

"स्त्रियस्तु वत्सलौ वत्सः स्नेहयुक्तजने भवेत्" इति शब्दरत्नावली ।

(य) शकु इति । सप्रणामं वनदेवताभ्यो नमस्कारपूर्वकम्, परिक्रम्य सम्मुखे कियन्तं पदक्षेपं कृत्वा, जनान्तिकं केवलं श्रव्यं।रैवान्तिके मृदु मृदु इत्यर्थः, गुरुजनान्तिके पतिकथोल्लेखस्य लज्जाकरत्वादिति भावः । जनान्तिकलक्षणं प्रागुक्तम् । आश्रमपदं तपोवनम् । दुःखदुःखेन नितान्तदुःखेन हेतुना, पुरोमुखौ सम्मुखौ सन्तौ ।

(ম) গৌতমী। বৎসে! স্বজনের ন্যায় স্নেহসম্পন্ন বনদেবতারা তোমার গমনে অনুমতি দিয়াছেন। অতএব ইঁহাদিগকে নমস্কার কর।

(য) শকুন্তলা। (নমস্কার করিয়া পাদক্ষেপপূর্ব্বক প্রিয়ংবদার নিকট চুপি চুপি) আমি আর্য্যপুত্রের দর্শনের নিমিত্ত উৎকণ্ঠিত হইয়াছি, তথাপি তপোবন পরিত্যাগ করিতেছি বলিয়া আমার চরণ-যুগল সম্মুখের দিকে পড়িতেছে না।

(१) णं अज्जउत्त···अस्सम···दुक्खेण मे चलणा पुरदो पवट्टन्ति ।

(२) ण केवलं तवोवणविरहकादरा सही एव्व । समवत्था दीसइ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उग्गिलदब्भकवला मई परिच्चत्तणत्तणा मोरी ।
ओसरिअपाण्डुपत्ता मुअन्ति अस्सु विअ लदाओ ॥१४॥

शकु । स्मृत्वा । ताद ! लदावहिणीं दाव माहवीं आमन्-
इस्सं (१) । (ल)

उद्गीर्णदर्भकवला मृगी परित्यक्तनर्त्तना मयूरी ।
अपसृतपाण्डुपत्रा मुञ्चन्ति अश्रु इव लताः ॥१४॥

(र) प्रियमिति । त्वया सह उपस्थितो वियोगो यस्य तस्य ।

उद्गीर्णेति । मृगी हरिणी, उद्गीर्णः शोकात् मुखतो निर्गमितः दर्भकवल-
कुशग्रासो यया सा, मयूरी परित्यक्तं नर्त्तनं नृत्यं यया सा ; तथा अपसृतानि पतितानि
पाण्डूनि पक्वतया पाण्डुवर्णानि पत्राणि यासां तास्तथाविधाः लताः, अश्रु नयनजलं
मुञ्चन्ति तव विरहशोकोद्‌दयात् पातयन्तीव । अतएव तव विरहेण तपोवनमपि दुःखि-
जातमिति भावः ।

अत्र तपोवनविरहकातरत्वप्रतिपादनकार्य्यं प्रति कारणत्रयोपन्यासात् समुच्चयोऽलङ्कारः
तथा पाण्डुपत्रपतने अश्रुपातनत्वसम्भावनाकरणात् क्रियोत्प्रेक्षा ; उद्गीर्णदर्भकवल-
त्वादिकार्य्येण मृगीप्रभृतिषु भगिनीव्यवहारसमारोपात् समासोक्तिश्च, इत्येतेषां परस्पर-
निरपेक्षतया संसृष्टिः । तथा मईमोरी इति एकवचनान्तप्रयोगेण प्रक्रम्य लदाओ इति
बहुवचनोपन्यासात् भग्नप्रक्रमतादोषः ; स च 'परिच्चअदि अस्सु, विअ लदा' इति पाठे
समाधेयः । आर्य्या जातिः ॥१४॥

(র) প্রিয়ংবদা। কেবল তুমিই তপোবনের বিরহে কা-
হও নাই ; তোমার সহিত বিরহ উপস্থিত হওয়ায় তপোবনের
অবস্থা দেখ—

হরিণী মুখ হইতে কুশগ্রাস উদ্‌গিরণ করিয়া ফেলিতেছে ; ম-
নৃত্য ত্যাগ করিয়াছে এবং লতাগুলি, পাণ্ডুবর্ণ পত্র পতিত হ-
থাকায় যেন অশ্রু বিসর্জ্জন করিতেছে ॥১৪॥

(१) लतावहिनिकां वनज्योत्स्नां ताव आमन्त्रयिष्ये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कण्वः । वत्से ! अवैमि ते तस्यां सौहार्दम् । इयं सा दक्षिणे पश्य (१) । (व)

शकु । उपेत्य लतामालिङ्ग्य । लदावहिणि ! पच्चालिङ्गस्स मं साहामएहिं वाहुहिं । अज्ज पहुदि दूरवत्तिणी क्खु दे भविस्सं । ताद ! अहं विअ इअं तुए चिन्तणीआ (२) । (श)

(ल) तात ! लताभगिनीं तावत् माधवीमामन्त्रयिष्ये ।

(श) लताभगिनि ! प्रत्यालिङ्ग मां शाखामयैर्बाहुभिः । अद्य प्रभृति दूरवर्त्तिनी खलु ते भविष्यामि । तात ! अहमिव इयं त्वया चिन्तनीया ।

(ल) शकु इति । स्मृत्वा नयनोन्मीलनादिना स्मृतिमभिनीय । लता चासौ भगिनी चेति तां माधवीलतारूपां भगिनीमित्यर्थः, आमन्त्रयामि गमनकालीनं सम्भाषणं करोमीति प्रार्थना ।

(व) कण्व इति । तस्यां माधव्याम्, ते तव, सौहार्दं पूर्वोत्पन्नस्नेहम्, अवैमि अवगत एवास्मि । सा माधवी, दक्षिणे दिग्विभागे वर्त्तते इति पश्येत्यर्थः ।

(श) शकु इति । लतां प्रकृतां माधवीम् । शाखामयैर्विटपरूपैः । अत्र परम्परितरूपकमलङ्कारः । चिन्तनीया स्नेहं द्रष्टव्या, मत्स्थानपातित्वादित्याशयः ।

---

(ल) শকুন্তলা । ( স্মরণ করিয়া ) পিতঃ! লতাভগিনী মাধবীর সম্ভাষণ করি ।

(ব) কণ্ব । বৎসে ! তাহার প্রতি তোমার সৌহার্দ্দ আমি জানি ; এই সে দক্ষিণদিকে রহিয়াছে, দেখ ।

(শ) শকুন্তলা । ( নিকটে যাইয়া মাধবীলতাকে আলিঙ্গন করিয়া ) লতাভগিনি ! শাখারূপ বাহুদ্বারা আমাকে প্রত্যালিঙ্গন কর ; যে

---

(१) काश्यपः । अवैमि ते तस्यां सौदर्य्यास्नेहम् । इयं तावत् दक्षिणेन ।

(२) शकुन्तला । लतामुपेत्य । वणजोसिणि चूदसंगदावि मं पच्चालिङ्ग इदोगदाहिं साहाबाहाहिं । अज्ज पहुदि दूरपरिवट्टिणी दे भविस्सं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कण्वः। वत्से!

सङ्कल्पितं प्रथममेव मया त्वदर्थं
भर्त्तारमात्मसदृशं स्वगुणैर्गतासि।
अस्यास्तु सम्प्रति वरं त्वयि वीतचिन्तः
कान्तं समीपसहकारमिमं करिष्ये (१) ॥१५॥

तदितः प्रस्थानं प्रतिपद्यस्व (२)। (ष)

माधवीस्मरणमङ्गीकरोति सङ्कल्पितमिति। मया प्रथममेव तव विवाहात् पूर्वं त्वदर्थं सङ्कल्पितं मनसा विभावितम्, आत्मसदृशं स्वानुरूपम्, भर्त्तारम्, स्वगुणैः सौन्दर्य्यादिभिः, गतासि प्राप्तासि। अतएव सम्प्रति, त्वयि त्वद्विषये, वीता गता चिन्ता वरसंग्रहभावना येन स तादृशोऽहम्, कान्तं मनोहरम्, इमं दृश्यमानम्, समीपे सहकारः समीपसहकारस्तं निकटवर्त्तिनमाम्रतरुम्, अस्या माधवीलतायाः वरस्वरूपम्, करिष्ये संयोजनादिना कल्पयिष्ये। अतएव त्वत्प्रार्थितां माधवीं ममवश्यमेव करिष्यामीति भावः।

अत्र सहकारे वरत्वारोपः शाब्दः, माधवीलतायां कन्यात्वारोपस्तु आर्थं इत्यं ... ईषद्विवर्त्तिरूपकमलङ्कारः।

वसन्ततिलका वृत्तम् ॥१५॥

---

হেতু আজ অবধি আমি তোমাদের দূরবর্ত্তিনী হইব। পিতঃ আপনি ইহাকে আমারই ন্যায় চিন্তা করিবেন।

কণ্ব। বৎসে! আমি প্রথমেই তোমার জন্য যাহা মনে মনে কল্পনা করিয়াছিলাম, তুমি নিজ গুণে সেই আত্মসদৃশ পতি লাভ করিয়াছ, এখন তোমার বিষয়ে নিশ্চিন্ত হইয়াছি, তাই নিকটবর্তী এই সুন্দর আম্রবৃক্ষটীকে এই মাধবীলতার বর করিব ॥১৫॥

---

(१) मया तवार्थे सुकृतैर्गता त्वम्। चूतेन संश्रितवती नवमालिकेयं ... त्वयि च सम्प्रति वीतचिन्तः। (२) इतः पन्थानं प्रतिपद्यस्व।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। सख्यावुपेत्य। हला! एसा दोसं पि वो हत्थे णिक्खेवो (१)। (स)

सख्यौ। अअं जणो दाणिं कस्स हत्थे समप्पिदो। इति बाष्पं विसृजतः (२)। (ह)

कण्वः। अनसूये! प्रियंवदे! अलं रुदितेन। ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्त्तव्या (३)। इति सर्वे परिक्रामन्ति। (च)

---

(स) हला! एषा द्वयोरपि वां हस्ते निक्षेपः।

(ह) अयं जनः इदानीं कस्य हस्ते समर्पितः?।

---

(य) तदिति। तत् तस्मात् माधवीलतायाः अपि उपायकरणेन तवोद्वेगाभावादित्यर्थः। इत आश्रमात्, प्रस्थीयते अनेनेति प्रस्थानं पन्थास्तत् हस्तिनापुरगमनमार्गमिति तात्पर्य्यम्, प्रतिपद्यस्व प्राप्नुहि।

(स) शकु इति। एषा माधवीलता। निक्षेपो निक्षेपभावेन स्थापिता। इतः परं युवाभ्यामेवास्या रक्षणावेक्षणादिकं कर्त्तव्यमित्याशयः।

(ह) सख्याविति। अयम् अनसूयारूपः प्रियंवदारूपश्च जनः, द्वयोरेव वक्तृत्वात्। रक्षिकायास्तवाभावे रक्षकहीने एवावां स्व इति भावः।

(च) कण्व इति। रुदितेन रोदनेन। नन्वित्यवधारणे। भवतीभ्यां युवाभ्याम्

---

(য) অতএব এখান হইতে পথে উপস্থিত-হও।

(স) শকুন্তলা। ( সখীদ্বয়ের নিকট যাইয়া ) ওলো! এই মাধবীলতা তোমাদের দুইজনের হাতে গচ্ছিত থাকিল।

(হ) সখীদ্বয়। এই ব্যক্তিকে এখন কাহার হাতে সমর্পণ করিলে? ( এই বলিয়া অশ্রু বিসর্জ্জন করিতে লাগিল। )

---

(१) शकुन्तला। सख्यौ प्रति। (२) उभे। जणो जनः।

(३) काश्यपः। अनसूये! अलं रुदित्वा।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। विलोक्य। ताद! एसा उड़अपज्जन्तचारिणी गब्भ-
हारमन्थरा मिअवह्न जदा सुहप्पसवा भविस्सदि, तदा मे कम्पि
पिअणिवेदअं विसज्जइस्ससि, मा एदं विसुमरिस्ससि (१)।(क)
कण्वः। वत्से! नेदं विस्मरिष्यामि (२)।

(क) तात! एषा उटजपर्य्यन्तचारिणी गर्भभारमन्थरा मृगवधूः यदा सुखप्रसवा भविष्यति, तदा मे कमपि प्रियनिवेदकं विसर्ज्जयिष्यसि, मा इदं विस्मरिष्यसि।

---

शकुन्तलास्थाने युवामेव मया स्थापनीये इत्यर्थः। परिक्रामन्ति हस्तिनापुरदिग्गामिनि पथि पादक्षेपं कुर्व्वन्ति।

(क) शकु इति। उटजस्य पर्णशालायाः पर्य्यन्ते प्रान्तभागे चरतीति त. गर्भभारेण मन्थरा मन्दगमना, सुखेन अनायासेन प्रसवो यस्याः सा तादृशी। मे मम समीपे। प्रियनिवेदकं प्रीतिकरतद्विषयज्ञापकं पुरुषम्, विसर्ज्जयिष्यसि प्रेरयिष्यसि एतेन मृगवधूं प्रति आदरातिशयो व्यज्यते।

---

(ক) কণ্ব। অনসূয়া! প্রিয়ংবদা! রোদন করিও না। আমি তোমাদিগকেই শকুন্তলা স্থির করিব। (ইহার পর সকলে পাদক্ষেপ করিতে লাগিল।)

(ক) শকুন্তলা। (দেখিয়া) পিতঃ! গর্ভভারে অলসা এই হরিণী পর্ণশালার প্রান্তপর্য্যন্ত আসিয়াছে, ইহার যখন অনায়াসে প্রসব হইবে তখন প্রিয়নিবেদনকারী কোন ব্যক্তিকে আমার নিকট পাঠাইবেন ইহা বিস্মৃত হইবেন না।

কণ্ব। বৎসে! ইহা বিস্মৃত হইব না।

---

(१) शकुन्तला। अणघप्पसवा होइ, तदा मे कं वि पिअणिवेदइत्तिअं विसज्जइस्ससि

(२) शकुन्तला। गतिभङ्गं रूपयित्वा। अम्मो! को णु क्खु, एसो णिवसणे मे सज्जइ। इति परावर्त्तते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । गतिभेदं रूपयित्वा । अम्मो ! को णु क्खु एसो पदक्कन्तो विअ मे पुणो पुणो वसणन्ते सज्जदि । इति परावृत्यावलोकयति । (ख)

कण्वः । वत्से !

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्द्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥१६॥

(ख) अम्मो ! को नु खलु एष पदाक्रान्त इव मे पुनः पुनर्वसनान्ते सजते ? ।

(ख) शकु इति । गतिभेदं गमनस्य प्रकारविशेषं मृगस्य वसनान्ते लग्नत्वात् कियत्सबाधं गमनमित्यर्थः, रूपयित्वा अभिनीय । पदाक्रान्त इव नूपुरादिवत् पादे घनसंसक्त इव । वसनान्ते वस्त्राञ्चले, सजते लगति । परावृत्य घूर्णित्वा ।

यस्येति । त्वया, कुशानां सूचिभिः सूचिवत् तीक्ष्णाग्रदेशैः, विद्धे भक्षणकाले क्षतविक्षतीकृते, यस्य मृगस्य मुखे, व्रणविरोपणं क्षतनाशकम्, इङ्गुदीनां तदाख्यानां फलानां तैलम्, न्यषिच्यत निषिक्तं सिञ्चितमित्यर्थः । एतेन मृगे शकुन्तलायाः स्नेहातिशयो व्यज्यते । श्यामाकानां तदाख्यानां घासानां मुष्टिभिः मुष्टिमुष्टिपरिमितश्यामाकघासदानैरित्यर्थः परिवर्द्धितकः सर्वतोभावेन वृद्धिं प्रापितः, अतएव पुत्रकृतकः कृत्रिमपुत्ररूपः, अयं स मृगः, ते तव, पदवीं भर्त्तृगृहगमनपथम्, न जहाति न परित्यजति, पूर्वोपकारस्मरणेन कृतज्ञतया भाविविच्छेदाशङ्कया विह्वलत्वादिति भावः ।

अत्र पुत्रकृतक इति निरङ्गं केवलरूपकमलङ्कारः ।

"कृतकः स्यात् पुमान् कृष्णखर्परे चाप्यसम्भवे । पुत्रभेदे कृत्रिमे त्रिषु ।" इति शब्दार्णवः ।

(ख) शकुन्तला । ( गমনের ব্যাঘাত অভিনয় করিয়া ) ওমা ! এ কে আমার চরণ যেন আক্রমণ করিয়া বার বার বস্ত্রাঞ্চলে লগ্ন হইতেছে । ( এই বলিয়া ফিরিয়া দেখিল । )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु । वच्छ ! किं मं सहवासपरिच्चाइणीं अणुवन्धेसि, णं अचिरप्पसूदोवरदाए जणणीए विणा जधा मए वड्ढिदोसि, तधा दाणिं पि मए विरहिदं तादो तुमं चिन्तइस्सदि। ता णिवत्तस्स । इति रुदती प्रस्थिता (१) । (ग)

(ग) वत्स ! किं मां सहवासपरित्यागिनीम् अनुबध्नासि, ननु अचिरप्रसूतोपरतया जनन्या विना यथा मया वर्द्धितोऽसि, तथा इदानीमपि मया विरहितं तातस्त्वां चिन्तयिष्यति । तन्निवर्त्तस्व ।

व्रणं मध्यविलं क्षतं विरोपयति मांसपूरणेन पूरयतीति व्रणविरोपणम्, नन्द्यादित्वात् रोपयतेर्युप्रत्ययः । परिवर्द्धितक इति अनुकम्पायां कप्रत्ययः ।

· वसन्ततिलका वृत्तम् ॥१६॥

(ग) शकु इति । सहवासम् एकत्रावस्थानं परित्यक्तुं शीलं यस्यास्तां तादृशीं माम्, किं कथम्, अनुबध्नासि अनुगच्छसि, नास्ति ते अनुगमनकारणमित्यर्थः । ननु तवाभावे मम पर्य्यवेक्षकाभावादस्त्येवानुगमनकारणमित्यत आह नन्विति । अवधारणे ननुशब्दः । अचिरं प्रसूतं यया सा अचिरप्रसूता चासौ उपरता मृता चेति सा तया । विरहितं भर्त्तृगृहगमनेन परित्यक्ताम् । तातः कण्वः । चिन्तयिष्यति रक्षणावेक्षण-विषये भावयिष्यति । तत् तस्मात् आत्मनो रक्षणावेक्षणविषये भावनायुक्तत्वादित्यर्थः । प्रस्थिता प्रस्थातुमारभते ।

कण्व । বৎসে ! যাহার মুখ, কুশের আগায় ক্ষত হইলে, তুমি ক্ষতনিবারক ইঙ্গুদীতৈল সেই মুখে দিতে এবং প্রতিদিন মুষ্টিপরিমিত শ্যামাঘাস দিয়া যাহাকে পরিবর্দ্ধিত করিয়াছিলে, তোমার সেই কৃত্রিম পুত্র এই হরিণটী তোমার পথ ছাড়িতেছে না ॥১৬॥

(গ) শকুন্তলা । বৎস ! আমি তোমাদের সহিত একত্র বাস পরিত্যাগ করিয়া যাইতেছি ; সুতরাং তুমি আমার অনুগমন করিতেছ

(१) अणुवन्धेसि । विणा विवड्ढिदो एव्व । दाणिं वि । णिवत्तेहि इमा ।

कण्वः। वत्से ! अलं रुदितेन, स्थिरा भव, इतः पन्थानमालोकय (१)। (घ)

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
वाष्पं कुरु स्थिरतया शिथिलानुबन्धम् (२)।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥१७॥

(घ) कण्व इति। रुदितेन विच्छेदवशात् रोदनेन। इतः सम्मुखे।

उत्पक्ष्मणोरिति। उद्गतानि पक्ष्माणि लोमानि, ययोस्तयोः, नयनयोश्चक्षुषोः, उपरुद्धा निवारिता वृत्तिर्दर्शनशक्तिर्येन तं तादृशम्, वाष्पम् अश्रु, स्थिरतया आत्मनो धैर्येण, शिथिलो न्यूनीभूतः अनुबन्ध उत्पत्तिर्यस्य तत् तादृशं कुरु। कथमित्याह अलक्षितो नयनयोरुपरुद्धवृत्तिकतया न दृष्टः नतोन्नतो नीचोच्चः भूमिभागो यस्मिन् तस्मिन् तादृशे, मार्गे पथि, ते तव पदानि पदन्यासाः, खलु निश्चितमेव विषमीभवन्ति असमाना भवन्ति स्खलन्तीत्यर्थः। यात्राकाले तत् स्खलमङ्गलसूचकं क्वचिद्वेदनाजनकञ्च भवेदतः पथो दर्शनाय दर्शनविघातकं वाष्पं निवारयेति भावः।

अत्र पूर्वार्द्धवाक्यार्थं प्रति परार्द्धवाक्यार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गम्, पदानां विषमीभवनं प्रति नतोन्नतभूमिभागस्य अलक्षितत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गान्तरञ्च ; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः। तथा प्रधानस्य

কেন ? প্রসব করিয়াই তোমার মাতা মরিয়া গেলে পর তাহাকে ছাড়া আমি যেমন তোমাকে বড় করিয়াছি, তেমন এখন আমাকে ছাড়াও পিতাই তোমার চিন্তা করিবেন। অতএব নিবৃত্ত হও। (এই বলিয়া রোদন করিতে করিতে চলিল।)

(ঘ) কণ্ব। বৎসে ! রোদন করিও না, স্থির হও; এই দিকে পথ দেখ।

(१) क्वचिदयं पाठो नास्ति। (२)…विरलानुबन्धम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिष्यौ । भगवन् ! ओदकान्तं स्निग्धोऽनुगम्यत इति श्रूयते । तदिदं सरसीतीरम्, अत्र नः सन्दिश्य प्रतिगन्तुमर्हसि (१) । (ङ)

कण्वः । तेन हीमां क्षीरिवृक्षच्छायामाश्रयामः (२) । (च)

वाष्पमुत्थितमस्य समासे गुणीभावात् विधेयाविमर्शदोषः, स च 'वाष्पं स्वयं ...
विनिवारय त्वम्' इति पाठेन समाधेयः ।

वसन्ततिलका वृत्तम् ॥१७॥

(ङ) शिष्याविति । आ उदकान्तं ओदकान्तं स्वभावस्थितजलसमीपपर्यन्तमित्यर्थः तात्पर्य्यम् । तेन गृहद्वारस्थितकुम्भाभ्यन्तरगतजलसमीपे अनुगन्तुं निवृत्तिः, तत्र सीतोत्तोलनस्थितत्वेन स्वभावस्थितत्वाभावादित्यवधेयम् । स्निग्धः स्नेहपात्रीभूतो जनः अनुगम्यते स्नेहकर्त्तृजनैरिति शेषः । सरसीतीरं स्वभावस्थितजलस्य समीपे इत्याशयः । नः अस्माकमन्तिके, सन्दिश्य दुष्मन्तसमीपवक्तव्यवाचिकमुपदिश्य ।

"ओदकान्तं प्रियं प्रोथमनुव्रजेत्" इति श्रुतिः ।

(च) कण्व इति । क्षीरिवृक्षस्य वटादेः कस्यचित् वृक्षस्य ।

তোমার নয়নের লোমগুলি উঁচু হইয়াছে, অশ্রু আসিয়া সেই নয়নযুগলের দৃষ্টি লোপ করিতেছে, অতএব ধৈর্য্য অবলম্বন করিয়া অশ্রু নিবৃত্তি কর। কারণ, এই জায়গাগুলি উঁচু-নীচু, তাহা দেখিতে পাইতেছ না; সুতরাং এই পথে তোমার পদক্ষেপ সমান হইতেছে না ॥১৭॥

(ঙ) শিষ্যদ্বয়। ভগবন্! জলপর্য্যন্ত প্রিয়জনের অনুগমন করিতে হয় ইহা শুনিয়াছি। অতএব এই সরোবরের তীর, এইখানে আপনি আমাদের নিকট সংবাদ বলিয়া যাইতে পারেন।

(१) शार्ङ्गरवः । भगवन् ! उदकान्तं स्निग्धो जनोऽनुगन्तव्यः । ...

(२) क्षीरिच्छायाम्, क्षीरवृक्षच्छायाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वे तथा नाटयन्ति (१)। (छ)

कण्वः। किन्नु खलु तत्रभवतो दुष्मन्तस्य युक्तरूपं सन्देष्टव्यम्। इति चिन्तयति (२)। (ज)

अन। सहि! अस्समपदे ण अत्थि को वि चित्तवन्तो, जो तए विरहिज्जन्तो ण ताम्मदि। पेक्ख दाव (३)। (झ)

(झ) सखि! आश्रमपदे नास्ति कोऽपि चित्तवान्, यस्त्वया विरह्यमाणो न ताम्यति। प्रेक्षस्व तावत्।

"न्यग्रोधोदुम्बराश्वत्थ-पारिश-प्लक्ष-पादपाः।
पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक् पञ्चवल्कलम्॥"

इति राजनिर्घण्टोक्तेर्वटादि पञ्चकस्यैव क्षीरिवृक्षत्वात्। आश्रयामः सन्देशे विलम्ब-सम्भवात् तथात्वे च अनातपदेशाश्रयस्यावश्यकत्वादिति भावः।

(छ) सर्व इति। तथा क्षीरिवृक्षच्छायाश्रयणम्।

(ज) कण्व इति। तत्रभवतो राजत्वेन माननीयस्य, दुष्मन्तस्य समीपे। सन्देष्टव्यं वाचिकभावेन प्रेषणीयम्।

(झ) अनेति। चित्तवान् मनःशाली चेतनः पदार्थ इत्यर्थः। विरह्यमाणः त्यज्यमानः, न ताम्यति न खिद्यति।

(চ) কণ্ব। তাহা হইলে, এই ক্ষীরিবৃক্ষের ছায়া আশ্রয় করি।

(ছ) (সকলে তাহাই করিলেন।)

(জ) কণ্ব। মাননীয় দুষ্মন্তের নিকটে সঙ্গতরূপ কোন্ সংবাদ পাঠান যাইতে পারে। (এই বলিয়া চিন্তা করিতে লাগিলেন।)

(१) सर्वे परिक्रम्य स्थिताः।
(२) काश्यपः। आत्मगतम्। युक्तरूपमस्माभिः सन्देष्टव्यम्। चिन्तयति।
(३) शकुन्तला। जनान्तिकम्। हला! पेक्ख, णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडइ। दुक्करं अहं करेमि। अनसूया। सहि! मा एव्वं मन्तिय।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

পুড়ইণি-বত্তন্তরিঅং বাহরিঅো বি ণ হু বাহরেই পিঅং।
মুহ উব্বূঢ়মিণালো তই দিট্ঠিং দেই চক্কাঅো (১) ॥১৮॥

পুটকিনীপত্রান্তরিতাং ব্যাহৃতোঽপি ন খলু ব্যাহরতি প্রিয়াম্।
মুখ উদ্ব্যূঢ়মৃণালস্ত্বয়ি দৃষ্টিং দদাতি চক্রবাকঃ ॥১৮॥

পুটকিনীতি। ব্যাহৃতোঽপি প্রিয়য়া আলপিতোঽপি, চক্রবাকস্তদাখ্যঃ পক্ষী, পুটকং কলিকাসম্পুটমস্যা অস্তীতি পুটকিনী পদ্মিনী পদ্মলতেতি যাবৎ তস্যাঃ পত্রেণ অন্তরিতাম্ অভ্যন্তরীকৃতাম্ আবৃতদেহামিত্যর্থঃ, প্রিয়াং চক্রবাকীম্, ন খলু ব্যাহরতি ন তু প্রত্যালপতি, ত্বদ্গতচিত্তত্বেন প্রিয়াব্যাহারাশ্রবণাৎ পুটকিনীপত্রান্তরিতত্বেন তস্যা অদর্শনাচ্চেতি ভাবঃ। তথা মুখে বদনে, উদ্ব্যূঢ়ম্ উত্তোল্য ভক্ষণায় ধৃতং মৃণালং যেন স তাদৃশঃ সন্নপি, ত্বয়ি শকুন্তলায়াম্, দৃষ্টিং দদাতি, ন তু ত্বদ্গতচিত্ততয়া মুখধৃতমপি তন্মৃণালং ভক্ষয়তীত্যর্থঃ। অতএব পক্ষিমাত্রস্য অবিশিষ্টচেতনস্য চক্রবাকস্যাপি ঈদৃগবস্থায়া জায়মানত্বাৎ বিশিষ্টচেতনস্য তু মনুষ্যস্য ত্বদ্বিরহহেতুকঃ খেদো জাত এবেতি "অত্তমপদে ণত্থি" ইত্যাদ্যুক্তং সত্যমেবেত্যাশয়ঃ।

অত্র "ত্বয়ি দৃষ্টিং দদাতি" ইত্যনেন "ন তু তন্মৃণালং ভক্ষয়তি" ইতি মৃণালভক্ষণ-ব্যপোহনাদার্থী পরিসংখ্যালঙ্কারঃ। পুটকিনীপত্রান্তরিতামিত্যনেন চক্রবাক্যা অদৃশ্যত্বং -সূচিতমিতি নাপুষ্টার্থত্বদোষঃ।

"নালীকিনী পুটকিনী বিষনালিন্য পদ্মিনী" ইত্যুৎপলিনী। আর্য্যা জাতিঃ ॥১৮

(ঝ) অনসূয়া। সখি! তপোবনে এমন কোন হৃদয়বান্ প্রাণী নাই, যে তোমার বিরহে খিন্ন না হইতেছে। দেখ—

চক্রবাকী আলাপ করিলেও চক্রবাক, সেই পদ্মপত্রাবৃতদেহ চক্রবাকীর সহিত আলাপ করিতেছে না; কিন্তু মুখে মৃণাল ধারণ করিয়াই তোমার প্রতি দৃষ্টিপাত করিতেছে ॥১৮॥

(১) এসাবি পিএণ বিণা গমেই রঅণিং বিসাঅদীহঅরং।
গরুঅং বি বিরহদুক্খং আসাবন্ধো সহাবেই ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कण्वः । वत्स ! शार्ङ्गरव ! इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्याभिधातव्यः (१) । (ञ)

शार्ङ्ग । आज्ञापयतु भवान् । (ट)

कण्वः ।

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मनः
त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतः परं न खलु तत् स्त्रीबन्धुभिर्याच्यते (२) ॥१८॥

(ञ) कण्व इति । शकुन्तलां पुरस्कृत्य अग्रे स्थापयित्वा, मद्वचनात् स राजा दुष्मन्तः, इति वक्ष्यमाणमभिधातव्यो वक्तव्यः ।

(ट) शार्ङ्गेति । आज्ञापयतु वक्तव्यं ब्रवीतु । गौरवाद्वचने आज्ञोक्तिरिति बोध्यम् ।

अस्मानिति । अस्मान्, संयमरूप एव धनं येषां तान् तथाभूतान्, साधु सम्यक्, विचिन्त्य मनसा पर्य्यालोच्य । एतेन कन्यायाः पितृगृहात् प्रचुरतरधनोपहारप्राप्ती तस्यामादरातिशयो यत् सर्व्वत्र प्रचलितस्तदत्र न सम्भवति ; किन्तु सामान्यप्रतिपत्तिपूर्व्वकादर्शने तादृशानामस्माकमाक्रोशात् तवानिष्टं भविष्यतीति सूचितम् । आत्मनः स्वस्य, उच्चैः कुलस्य महान्तं वंशञ्च विचिन्त्य । महाकुलप्रसूता हि जनाः प्रायेण सर्व्वत्रैव समदर्शिनो भवन्ति । तेनापीयं त्वया सामान्यप्रतिपत्तिपूर्व्वकमेव द्रष्टव्येत्यभिप्रायः ; तथा त्वयि, अस्याः शकुन्तलायाः, तां स्वयमेवानुभूतपूर्व्वाम्, कथमपि केनापि प्रकारेण, बान्धवैः पित्रादिबन्धुजनैः कृतेति बान्धवकृता न बान्धवकृता अबान्धवकृता शकुन्तला

(ঞ) কণ্ব। বৎস! শার্ঙ্গরব! তুমি আমার আদেশ অনুসারে শকুন্তলাকে সম্মুখে রাখিয়া সেই রাজাকে বলিবে।

(ট) শার্ঙ্গরব। আপনি আদেশ করুন।

(१) काश्यपः । शार्ङ्गरव !···वक्तव्यः ।

(२) भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार्ङ्ग । गृहीतोऽयं सन्देशः (१)। (ठ)

स्वयमेव विहितेत्यर्थः ताम्, स्नेहप्रवृत्तिम् अनुरागोत्पत्तिञ्च विचिन्त्य । कन्याया बन्धुजनकृते हि वरानुरागे तस्या गुणवत्त्वे आदरः, दोषवत्त्वे चावज्ञा सम्भवति, किन्तु कन्यया स्वयमेवानुरज्य वरवासनापूरणादिना तदुपकारे कृते स चेत् सामान्यप्रतिपत्तिपूर्वकमपर्थनं तां न पश्यति, तर्हि महत्येव कृतघ्नता स्यादतोऽपीयं सामान्यप्रतिपत्तिपूर्वकमेव दृश्येत्याशयः । त्वया इयं शकुन्तला, दारेषु गृहीतासु ग्रहीष्यमाणासु च भार्य्यासु मध्ये, सामान्यप्रतिपत्तिपूर्वकं अपरा भार्य्या यथा इयं शकुन्तलापि तथैवेति समानताज्ञानपूर्वकमेव, दृश्या द्रष्टव्या ; न पुनस्ताभ्योऽधमत्वेन दृश्येति भावः । अतः परं सामान्यप्रतिपत्तिपूर्वकदर्शनादधिकम् अन्याभ्योऽधिकादरणीयत्वेन दर्शनमित्यर्थः, भाग्याधीनं कन्याया भाग्यप्रयुक्तमेव, भवति, न तु तद्बन्धुजनप्रार्थनामात्रेणेत्यभिप्रायः । अतएव स्त्रीबन्धुभिः कन्यानां पित्रादिबान्धवजनैः, तत् दारेषु मध्ये आधिक्येन दर्शनम्, न खलु याच्यते प्रार्थ्यते । अतएव मयापि तन्न प्रार्थ्यत इत्याशयः ।

अत्र विचिन्त्येत्येकया क्रियया अस्मानित्यादीनां त्रयाणामेवाप्रस्तुतानां कर्मत्वयाभिसम्बन्धात् तुल्ययोगिता, याचनाभावं प्रति भाग्याधीनपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, स्त्रीबन्धुभिरित्यप्रस्तुतात् सामान्यात् शकुन्तलाबन्धुना मयेति प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसा चालङ्कारः, तेषाञ्च परस्परनिरपेक्षतया संसृष्टिः ।

"प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ प्रागल्भ्ये बोधे" इति हेमचन्द्रः ।

शार्दूलविक्रीड़ितं वृत्तम् ॥१९॥

---

কণ্ব। আমাদের কেবল তপস্যাই ধন, নিজের বংশও উচ্চ এবং তোমার প্রতি শকুন্তলার যে অনুরাগ জন্মিয়াছে, তাহাও উহার কোন বন্ধুজনই কোন রকমেই ঘটাইয়া দেয় নাই, এই সমস্ত ভাল করিয়া বিবেচনা করিয়া, তুমি এই শকুন্তলাকে ভার্য্যাবর্গের মধ্যে সমান জ্ঞানে দেখিবে ; ইহা অপেক্ষা অধিক আদর পাওয়া ভাগ্যের অধীন ; সুতরাং তাহা স্ত্রীলোকের বন্ধুরা প্রার্থনা করে না ॥১৯॥

---

(१) शार्ङ्गरवः । सुगृहीतः सन्देशः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कण्वः। शकुन्तलां विलोक्य। वत्से! त्वमिदानीमनुशासनीयासि। वनौकसोऽपि वयं लौकिकज्ञा एव (१)। (ड)

शार्ङ्ग। भगवन्! न खलु कश्चिदविषयो नाम धीमताम् (२)। (ढ)

कण्वः। सा त्वमितः पतिगृहं प्राप्य (३) (ण)

---

(ठ) शार्ङ्गेति। सन्देशो वाचिकम्, गृहीतः दुष्मन्तसमीपेऽभिधानाय अवलम्बितः।

(ड) कण्व इति। इदानीं गार्हस्थ्यप्रवेशसमये, अनुशासनीया गार्हस्थ्यविषये उपदेशनीया। इतः पूर्वं कौमार्य्यावस्थायां गार्हस्थ्यविषये अनुशासनीया नासीरितीदानींपदप्रयोगस्याभिप्रायः। ननु वनवासी भवान् कथं लोकसमाजाचारमुपदेष्टुं शक्नुयादित्याह वनौकसोऽपीति। वनमोक आश्रयो येषां ते तथोक्ता अपि वयम्, लौकिकं गृहस्थलोकसमाजाचारं जानन्तीति ते तादृशा एव, बुद्ध्यानुमानात् लोकमुखे श्रवणाच्चेति भावः।

(ढ) शार्ङ्गेति। धीमतां बुद्धिमतां जनानाम्, कश्चिदपि पदार्थः न खलु अविषयो नैव धियामगोचरः, इति नाम सम्भावयामीत्यर्थः। अतो वनवासित्वेऽपि धीमत्तया, गृहस्थलोकाचारस्याप्यभिज्ञत्वात् यथेष्टं भवानुपदेष्टुमर्हतीत्याशयः।

---

(ঠ) শার্ঙ্গরব। এ খবর মনে রাখিলাম।

(ড) কণ্ব। (শকুন্তলার প্রতি দৃষ্টিপাত করিয়া) বৎসে! তোমাকে এখন উপদেশ দিতে হইবে; আমরা বনবাসী হইলেও গৃহস্থলোকের আচার জানি।

(ঢ) শার্ঙ্গরব। ভগবন্! বুদ্ধিমান্‌গণের কোন বিষয়ই বুদ্ধির অগোচর নহে।

(ণ) কণ্ব। সেই তুমি এস্থান হইতে পতিগৃহে যাইয়া—

---

(१) काश्यपः। वनौकसोऽपि सन्तो लौकिकज्ञा वयम्।
(२) शार्ङ्गरवः। न खलु धीमतां कश्चिदविषयो नाम। (३) पतिकुलं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः (१) ॥२०॥

(ष) कण्व इति । सा अनुशासनीया त्वम्, इतस्तपोवनात्, पतिगृहं प्राप्य, गुरून् शुश्रूषस्व इत्यादिश्लोकस्थक्रियाभिरन्वयः ।

शुश्रूषस्वेति । गुरून् श्वश्रूश्वशुरादिगुरुजनान् शुश्रूषस्व परिचर; सपत्नीजने प्रियसखीवृत्तिं प्रियसखीवद्व्यवहारं कुरु; विप्रकृतापि भर्त्रैव अवमानितापि, रोषणतया तं प्रति क्रोधशीलतया, प्रतीपं प्रातिकूल्यम्, मास्म गमः न प्राप्नुहि; परिजने दासदास्यादिपरिचारकवर्गे, भूयिष्ठं बहुलं यथा स्यात्तथा, दक्षिणा उदारा भव; यथा भोगेषु सुखेषु, अनुत्सेकिनी अगर्विता भव। एवमित्थम्भूताः, युवतयः स्त्रियः, गृहिणीपदं गृहकर्त्रीस्थानं यान्ति प्राप्नुवन्ति; किन्तु वामा उक्तस्वभावविपरीता युवतयः, कुलस्य सजातीयगणस्य, आधयो मनोव्यथाः मनोव्यथाजनिका इत्यर्थः। अत उक्तरूपविपरीता मा भवेति भावः।

अत्र अन्यस्य वृत्तिं कथमन्यः करोतीति वस्तुसम्बन्धोऽसम्भवन् प्रियसखीवृत्तिवत् वृत्तिमिति साहश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना, "यान्त्येवं गृहिणीपदं युवतयः" इति सामान्येन प्रथमपादत्रयगतविशेषसमर्थनादर्थान्तरन्यासः, एवं युवतयो वामाश्च युवतय इति विरूपयोः सङ्घटनया विषमालङ्कारः, तथा कार्य्यभूतेन आधिना सह कारणभूताया वामाया अभेदेनाभिधानात् हेतुर्नामालङ्कारश्च इत्येतेषां मिथो निरपेक्षतया संसृष्टिः। तथा उपदिष्टं नाम नाट्यलक्षणञ्च। यथा दर्पणे—

"उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः।"

"निकारो विप्रकारः स्यात्" इत्यमरः। "प्रतीपोऽन्यः पराङ्मुखे। ना श्यामको क्लीवलिङ्गं वामे" इति शब्दार्णवः। "प्रमदा चेति विज्ञेया युवतिश्च तथा सुता"

(१) भाग्येष्वनुत्सेकिनी।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोतमी वा किं मन्यते (१)। (त)

गोतमी। एत्तिओ क्खु वहूजणे उवदेसो। जादे! एदं क्खु हिअए करेहि, मा विसुमरिस्ससि (२)। (थ)

---

(थ) एतावान् खलु वधूजने उपदेशः। जाते! एतत् खलु हृदये कुरु, मा विस्मरिष्यसि।

---

इति भागुरिः। "कुलं जनपदे गोत्रे सजातीयगणेष्वपि। भवने च तनौ क्लीवं वराटकार्य्योषधौ कुली॥" इति मेदिनी।

यान्त्येवेति "स्मृ-हश्मौ च सनन्तौ तु रुचादौ श्रूरनाङ्प्रति।" इत्यादिना रुचादित्वादात्मनेपदम्। रोषणेति "क्रुधिमण्डिचलिशब्दार्थेभ्यो युः" इति क्रुध्यर्थात् रुषधातोर्युः। शार्दूलविक्रीड़ितं वृत्तम्॥२०॥

(त) गौतमीति। किं मन्यते एतदुपदेशविषये किं मनसि करोति। तदभिदधात्विति भावः।

(थ) गौतमीति। एतावान् एतत्पर्य्यन्त एव। हृदये कुरु मनसि रक्ष।

---

গুরুজনবর্গের শুশ্রূষা করিবে, সপত্নীগণের প্রতি প্রিয়সখীর ব্যবহার করিবে, ভর্ত্তা অপমান করিলেও ক্রুদ্ধ হইয়া তাঁহার প্রতিকূলাচরণ করিবে না, দাস-দাসীপ্রভৃতি পরিজনের প্রতি অত্যন্ত উদারপ্রকৃতি হইবে এবং ভোগে গর্বিতা হইবে না; এইরূপ স্ত্রীলোকেরাই গৃহিণীর পদ পাইয়া থাকে; আর ইহার বিপরীতস্বভাব স্ত্রীলোকেরা বংশের মনোদুঃখ জন্মায়॥২০॥

(ত) গৌতমী বা কি মনে করেন?।

(থ) গৌতমী। বধূজনের প্রতি এই উপদেশই উপযুক্ত। বৎসে! ইহা মনে রাখিও, বিস্মৃত হইও না।

---

(१) कथं वा गौतमी मन्यते।

(२) जादे! एदं क्खु सुव्वं ओधारेहि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

কণ্বঃ। বত্সে! এহি পরিষ্বজস্ব মাং সখীজনঞ্চ (১)। (দ)

শকু। তাদ! ইদো জ্জেব কিং পিঅসহীও ণিবত্তিস্সন্তি (২)। (ধ)

কণ্বঃ। বত্সে! ইমে অপি প্রদেয়ে, তন্ন যুক্তমনযোস্তত্র গন্তুম্। ত্বযা সহ গৌতমী গমিষ্যতি (৩)। (ন)

শকু। পিতুরঙ্কমাশ্লিষ্য। কধং দাণিং তাদস্স অঙ্কাদো পরিব্ভট্টা মলঅপব্বদাদো উম্মুলিদা চন্দণলদা বিঅ দেসন্তরে জীবিদং ধারইস্সং (৪)। (প)

(ধ) তাত! ইত এব কিং প্রিয়সখ্যৌ নিবর্ত্তিষ্যেতে?।

(প) কথমিদানীং তাতস্য অঙ্কাত্ পরিভ্রষ্টা মলযপর্ব্বতাদুন্মূলিতা চন্দনলতেব দেশান্তরে জীবিতং ধারযিষ্যামি।

(দ) কণ্ব ইতি। পরিষ্বজস্ব আলিঙ্গ। প্রস্থানকালে উচিতত্বাদিত্যাশযঃ।

(ধ) শকু ইতি। নিবর্ত্তিষ্যেতে আশ্রমং প্রতি গমিষ্যতঃ।

(ন) কণ্ব ইতি। ইমে অনসূযাপ্রিযংবদে অপি, প্রদেয়ে পাত্রসাত্কর্ত্তব্যে অনূঢ়ে ইত্যর্থঃ, তত্তস্মাত্ অনূঢ়াযা বযস্থাযা নিঃসম্পর্কস্থ নে গমনাযুক্তত্বাদিত্যর্থঃ। গৌতমী গমিষ্যতি। তেন চ কেবলপুরুষৈঃ সহ গমনদোষো নাশঙ্কনীয ইতি ভাবঃ।

(প) শকু ইতি। অঙ্কং ক্রোড়ম্, আশ্লিষ্য আলিঙ্গ্য। যুবত্যা ভর্তৃমিলন

(দ) কণ্ব। বৎসে! আয়, আমাকে এবং সখীজনকে আলিঙ্গন কর।

(ধ) শকুন্তলা। পিতঃ! প্রিয়সখীরা কি এখান হইতেই ফিরিবে?।

(ন) কণ্ব। বৎসে! ইহাদিগকেও দান করিতে হইবে, অতএব ইহাদের সেখানে যাওয়া উচিত নহে; তোর সঙ্গে গৌতমী যাইবেন।

(১) বত্সে! পরিষ্বজস্ব। (২) কিং পিঅংবদামিস্সা সহীণী।

(৩) ন যুক্তং গৌতমী যাস্যতি। (৪) পিতরমাশ্লিষ্য। মলযপতন্মূলিতা।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कण्वः। वत्से! किमेवं कातरासि?।

अभिजनवतो भर्त्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला (१)।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से! शुचं गणयिष्यसि ॥२१॥

---

पुत्रस्य वक्षस्यालिङ्गनमसङ्गतमिति अङ्कमित्युक्तम्, सन्तानस्य च जनकजनन्योरङ्कसेवा-श्रयणीयतया अङ्कान्तरानुक्तिरित्यवधेयम्। जीवितं जीवनम्।

अभीति। हे वत्से! त्वम्, अभिजनः प्राशस्त्येन कुलमस्यास्तीति अभिजनवान् उत्तमकुलोत्पन्न इत्यर्थस्तस्य, भर्त्तुर्दुष्मन्तस्य, श्लाघ्ये गौरवास्पदे, गृहिणीपदे गृहकर्त्री-स्थाने स्थिता, तथा विभवेन धनसम्पत्त्या गुरूणि नानाविधत्वाद्बहुतरत्वाच्च महान्ति तैः, अस्य भर्त्तुः, कृत्यैः परिजनपरिचालनादिभिर्व्यापारैः, प्रतिक्षणं सर्वदा, आकुला व्यग्रा च सती, अचिरात् शीघ्रमेव, प्राची पूर्वा दिक्, अर्कं सूर्यमिव, पावनं पवित्रताजनकम्, एकत्र "पवित्रताकारणाय तस्मै शुद्धात्मने नमः" इति विष्णुपुराणात् अन्यत्र नानासत्-कार्याणां प्रवर्त्तयिष्यमाणत्वादिति भावः, तनयं पुत्रम्, प्रसूय च, मम विरहजां एतद्विच्छेदजाताम्, शुचं शोकम्, न गणयिष्यसि नानुभविष्यसि; नानाकार्यचिन्तया पुत्रमुखावदर्शनामोदेन च सर्वदैव मनसः पूर्णत्वात्। अतः किमेवं कातरासीति भावः।

अत्र श्रौती पूर्णोपमालङ्कारः। सादृश्यस्य प्रसवपर्यन्त एव समाप्त्या "लतेव राजसे तन्वि!" इत्यादिवदनुपपत्त्यभावात् पुरुषभेदेऽपि न भग्नप्रक्रमतादोषः।

---

(প) শকুন্তলা। (পিতার ক্রোড় আলিঙ্গন করিয়া) মলয়পর্ব্বত হইতে উন্মূলিত চন্দনলতার ন্যায় আমি পিতার ক্রোড় হইতে বিচ্যুত হইয়া, এখন দেশান্তরে কি করিয়া জীবন ধারণ করিব।

কণ্ব। বৎসে! কেন এরূপ কাতর হইতেছিস্।

---

(१) कृत्यैस्तस्य।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। पितुः पादयोः पतित्वा। ताद! वन्दामि (१)। (फ)

कण्वः। वत्से! यदहमिच्छामि, तदस्तु ते (२)। (ब)

शकु। सख्यावुपगम्य। सहीओ! एध, दुवे वि मं समं ज्जेव परिस्सजध (३)। (भ)

(फ) तात! वन्दे।

(भ) सख्यौ। एतम्, द्वे अपि मां सममेव परिष्वजेथाम्।

---

"अभिजनान्वयौ" "अथ-रै-विभवा अपि" इति चामरः। "गौरवितात्मार्थमिदः श्लाघ्यास्तवभवन्मुखाः" इति त्रिकाण्डशेषः।

अभिजनवत इति प्रशंसायां वन्तुप्रत्ययः। हरिणी वृत्तम् ॥२१॥

(ब) कण्व इति। एतेन सर्वविधमङ्गलस्यैव प्राप्तत्वात् महत्यैवाशीः सूचिता।

(भ) शकु इति। सख्यावुपगम्य अनसूयाप्रियंवदयोः समीपं गत्वा। एतम् आगच्छतम्। समं युगपदेव, परिष्वजेथाम् आलिङ्गतम्।

---

বৎসে! সৎকুলোৎপন্ন ভর্ত্তার শ্লাঘ্য গৃহিণীপদে থাকিয়া, বিপুল-সম্পত্তিনিবন্ধন গুরুতর ভর্তৃকার্য্যে সর্ব্বদা ব্যগ্র হইয়া, পূর্ব্বদিক্ যেমন সূর্য্যকে প্রসব করে, সেইরূপ অচিরকালমধ্যে পবিত্র পুত্র প্রসব করিয়া, আমার বিরহজাত শোক মনেও করিবে না ॥২১॥

(ফ) শকুন্তলা। (পিতার চরণে পতিত হইয়া) পিতঃ! নমস্কার করি।

(ব) কণ্ব। বৎসে! আমি যাহা ইচ্ছা করি, তোমার তাহা হউক।

(ভ) শকুন্তলা। (সখীদের নিকটে যাইয়া) সখীরা! আইস, তোমরা দুইজনেই আমাকে যুগপৎ আলিঙ্গন কর।

---

(१) शकुन्तला। पितुः पादयोः पतति।

(२) काश्यपः। यदिच्छामि ते तदस्तु। (३) शकुन्तला। हला! दुवे वि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सख्यौ। तथा कृत्वा। सहि! जइ णाम सो राएसी पच्चहिण्णाणमन्थरो भवे, तदो से इमं अत्तणो णामधेअङ्किदं अङ्गुलिअअं दंसइस्ससि (१)। (म)

शकु। इमिणा वो सन्देसेण कम्पिदं मे हिअअं (२)। (य)

सख्यौ। सहि! मा भाआहि। सिणेहो पावमासङ्कदि (३)। (र)

---

(म) सखि! यदि नाम स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत्, तदा अस्य इदमात्मनो नामधेयाङ्कितमङ्गुरीयकं दर्शयिष्यसि।

(य) अनेन वां सन्देशेन कम्पितं मे हृदयम्।

(र) सखि! मा बिभीहि। स्नेहः पापमाशङ्कते।

---

(म) सख्याविति। स राजर्षिर्दुष्मन्तः, प्रत्यभिज्ञाने तव परिचये मन्थरो मन्दः अक्षमः इत्यर्थः। अस्य समीपे, आत्मनस्तस्यैव राज्ञः, नामधेयाङ्कितम् उत्कीर्णनामाक्षरम्।

(य) शकु इति। वां युवयोः सन्देशेन वाचिकेन वाचकीकृत्य उपदेशेनेत्यर्थः। कम्पितमिति तत्कर्त्तृकविस्मरणाशङ्कावशादिति भावः।

(र) सख्याविति। मा बिभीहि भीता मा भव। स्नेहः प्रणयः, पापं पाप-

---

(म) সখীদ্বয়। (তাহা করিয়া) সখি! যদি সেই রাজর্ষি তোমাকে চিনিতে অসমর্থ হন, তবে তাঁহাকে নিজের নামাঙ্কিত এই অঙ্গুরী দেখাইবে।

(য) শকুন্তলা। তোমাদের এই খবরে আমার হৃদয় কম্পিত হইল।

---

(১) सो राआ मन्थरो होइ दंसेसु। (२) सन्देसेण आकम्पिअ म्हि।
(३) सिणेहो पावसङ्की।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार्ङ्ग। भगवन्! दूरमधिरूढ़ः सविता; तत्त्वरयात्र-भवतीम् (१)। (ल)

शकु। भूयः पितुरङ्कमाश्लिष्य आश्रमाभिमुखीभूय च। ताद! कदा णु क्खु, भूओ तवोवणं पेक्खिस्सं (२)। (व)

कण्वः। वत्से! (३)

भूत्वा चिराय सदिगन्तमहीसपत्नी
दौष्मन्तिमप्रतिरथं तनयं प्रसूय।

(व) तात! कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये।

जनितममङ्गलम्। तथा च स्नेहस्यैष स्वभावः, यत् स स्निग्धजनस्य अमङ्गलाशङ्कां जनयति। तेन स्निग्धायास्तव तादृशममङ्गलमाशङ्क्य वेदमभिहितम्, न पुनर्वस्तुत एव तस्य राज्ञः प्रत्यभिज्ञानमन्यरता भवेदिति भावः। बिभीहीति भीधातोर्लोटि प्रयोगः।

(ल) शार्ङ्गेति। सविता सूर्यः, दूरम् उदयाचलादाकाशस्य अधिकं देशम्, अधिरूढ़ आरूढ़ः। तत्तस्मात्, अत्रभवतीं गुरुकन्यात्वेन माननीयां शकुन्तलाम्, त्वरं गन्तुं सत्वरीकुरु। अन्यथा आतपेन नितरां कष्टं भविष्यतीति भावः।

(व) शकु इति। भूयः पुनरपि। प्रेक्षिष्ये द्रक्ष्यामि।

(य) সখীদ্বয়। সখি! ভীত হইও না; স্নেহ অমঙ্গল আশঙ্কা করিয়া থাকে।

(ল) শার্ঙ্গরব। ভগবন্! সূর্য্য উদয়াচল হইতে অনেক দূর উঠিয়াছেন, অতএব শকুন্তলাকে সত্বর করুন।

(ব) শকুন্তলা। (পুনরায় পিতার ক্রোড় আলিঙ্গন করিয়া, আশ্রমের অভিমুখ হইয়া) পিতঃ! আবার কবে তপোবন দেখিব।

(१) शार्ङ्गरवः। युगान्तरमारूढ़ः सविता। त्वरतां भवती।

(२) शकुन्तला। आश्रमाभिमुखी स्थित्वा। ताद! कदा णु भूओ तवोवणं पेक्खिस्सं। (३) श्रूयताम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्सन्निवेशितधुरेण सहैव भर्त्रा
शान्त्ये करिष्यसि पदं पुनराश्रमेऽस्मिन् (१) ॥२२॥

गौतमी। जादे! परिहीअदि दे गमणवेला, ता णिवत्ता-

भूत्वेति। चिराय अतिदीर्घकालं यावत्, दिगन्तैः सहेति सदिगन्ता सम्पूर्णेत्यर्थः या मही पृथिवी तस्याः सपत्नी समानभर्तृका भूत्वा। दुष्मन्तस्य चिराय समग्रपृथिवीश्वरत्वे शकुन्तलायाश्च तावत्कालं तत्पत्नीत्वे एतत्सिद्धिरित्यवधेयम्। न विद्यते प्रतिरथः समानयोद्धा यस्य तं तादृशम्, दुष्मन्तस्यापत्यमिति दौष्मन्तिस्तम्, तनयं पुत्रम्, प्रसूय उत्पाद्य, तस्मिन् तनये सन्निवेशिता संस्थापिता धूः साम्राज्यभारो येन तेन तादृशेन, भर्त्रा स्वामिना दुष्मन्तेन सहैव, न पुनर्वध्व्यादेकाकिनीत्याशयः, अस्मिन् आश्रमे तपोवने, शान्त्यै शान्तिलाभाय मुक्तिलाभायेत्यर्थः पुनः पदं स्थितिम्, करिष्यसि; इदानीं विच्छेदेऽपि पुनर्दीर्घकालमत्रावस्थानसम्भवान्नात्यन्तविषादः कर्त्तव्य इति भावः।

अत्र सपत्नीत्यनेन मह्यामपि पत्नीत्वारोपो व्यज्यत इति वस्तुना रूपकालङ्कारध्वनिः।

"पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः।

प्रसवात् प्राक् किञ्चित् परमेव वा अप्रतिरथत्वासम्भवेऽपि "भाविनि भूतवदुपचारः" इति न्यायादुपपत्तिः "धूरनक्षस्य च" इति राजादित्वादत्प्रत्यये तत्सन्निवेशितधुरेणेति सिद्धम्।

"पुत्रेषु दारान्निक्षिप्य वनं गच्छेत् सहैव वा" इति स्मृतेः भर्त्रा सहैवेत्युक्तम्।

वसन्ततिलका वृत्तम् ॥२२॥

কণ্ব। বৎসে! অতিদীর্ঘকাল যাবৎ সমগ্র পৃথিবীর সপত্নী হইয়া, দুষ্মন্তের ঔরসজাত অপ্রতিদ্বন্দ্বী পুত্র প্রসব করিয়া, সেই পুত্রের উপরে রাজ্যভার সমর্পণকারী ভর্ত্তার সঙ্গেই মুক্তিলাভের নিমিত্ত পুনরায় এই আশ্রমে অবস্থান করিবে ॥২২॥

(१) चतुरन्तमहीसपत्नी तनयं निवेश्य। भर्त्रा तदर्पितकुटुम्बभरेण सार्द्धं शान्ते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेहि पिदरं । अधवा चिरेण वि एसा ण णिउत्तिस्सदि, ता णिउत्तदु भवं (१) । (अ)

कण्वः । वत्से ! उपरुध्यते मे तपोऽनुष्ठानम् । (ष)

शकु । तवच्चरणवावारेण णिरुक्कण्ठो तादो, अहं उण उक्कण्ठाभाइणी संवुत्ता (२) । (स)

---

(अ) जाते ! परिहीयते ते गमनवेला, तन्निवर्त्तय पितरम् । अथवा चिरेण एषा न निवर्त्तिष्यते, तन्निवर्त्ततां भवान् ।

(स) तपश्चरणव्यापारेण निरुत्कण्ठस्तातः, अहं पुनरुत्कण्ठाभागिनी संवृत्ता।

---

(अ) गौतमीति । परिहीयते ईषदालोचनेन परित्यज्यते, अथ तेति वाक्यार्थः । शकुन्तलाकर्त्तृकं निवर्त्तनमसम्भवमाशङ्क्याह अथवेति । एषा शकुन्तला न निवर्त्तिष्यते ईषदनिष्पन्नयोजनकथोपकथनादिति शेषः ।

(ष) कण्व इति । उपरुध्यते ईषद्विलम्बेन व्याहन्यते । तन्मां विसर्जयेत्याशयः ।

(स) शकु इति । तपश्चरणव्यापारेण अनवरततपोऽनुष्ठानकार्य्येण निरुत्कण्ठः मद्विरहनिबन्धनविषादहीनः ; पुनः किन्तु, उत्कण्ठाभागिनी तपोवत् अपसरणं ... भावात् तातविरहनिबन्धनविषादशालिनी । तथा च विरहे उभयोः समानदुःख... औचित्येऽपि ममैव दुःखभोगसम्भवादहं निवर्त्तयितुं निवर्त्तितुं वा ... इति भावः ।

---

(শ) গৌতমী। বৎসে! তোমার গমনের সময় অতীত হইতেছে, অতএব পিতাকে ফিরাও। অথবা, এ দীর্ঘকালেও নিবৃত্তি পাইবে না, অতএব আপনিই ফিরুন।

(ষ) কণ্ব। বৎসে! আমার তপস্থার ব্যাঘাত হইতেছে।

---

(१)...चिरेण वि पुणो पुणो एसा एव्वं मन्तइस्सदि, णिवत्तदु भवं ।

(२) भूयः पितरमाश्लिष्य । तवच्चरणपीडिअं तादसरीरं । ता मा अदिमेत्तं मम किदे उक्कण्ठिदुं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कण्वः। वत्से! मामेवं जड़ीकरोषि। निःश्वस्य (१) (ह)

अपयास्यति मे शोकः, कथं नु वत्से! त्वया रचितपूर्वम्।
उटजद्वारविरूढ़ं नीवारबलिं विलोकयतः (२) ॥२३॥

(ह) कण्व इति। एवम् इत्थम्भूतेन वात्सल्यप्रकाशेन आलापेन च, जड़ीकरोषि सर्वकार्याचमीकरोषि।

इदानीं निरुत्कण्ठमतात इत्युक्तं प्रतिवदति अपेति। नु हे वत्से! त्वया रचितपूर्वं पक्षिणां भक्षणाय रोपितपूर्वम्, उटजद्वारि पर्णशालायाः सम्मुखे विरूढ़मङ्कुरितम्, नीवारबलिं तृणधान्यरूपमुपहारम्, विलोकयतः पश्यतः, मे मम, शोकः त्वद्विरहनिबन्धनविषादः, कथम् अपयास्यति निवर्त्तिष्यते, अपि तु कथमपि नेत्यर्थः, तन्नीवारबलेरेव तव स्मारकत्वात् अभावकाले आत्मीयजनस्मरणस्यैव च शोकपदार्थत्वादिति भावः।

अत्र नीवारबलिविलोकनमेव शोकानपगमनं प्रति हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तदनुप्राणिता चार्थापत्तिः, इत्युभयोरङ्गाङ्गिभावेन सङ्करः। तथा 'अपयास्यति मे शोकः कथम्' इत्यनेन वाक्यसमाप्तावपि पुनस्तदन्तर्गतस्य मे इत्यस्य विशेषणतया त्वया रचितपूर्वमित्यारभ्य द्वितीयार्द्धस्य पुनरात्तत्वात् समाप्तपुनरात्ततादोषः; स च "निवर्त्तिष्यते शोकः" इति प्रथमचरणपाठेन "नीवारबलिं पश्यतो मे" इति चतुर्थचरणपाठेन च समाधेयः। तादृशपाठे तु मे इति विशेषस्यापि पुनरात्तत्वान्नोक्तदोषः, समाप्तवाक्यान्तर्गतस्य कस्यचिद्विशेषणतयैव पुनरुपादाने तद्दोषाङ्गीकारात्। आर्य्या जातिः॥२३॥

(स। শকুন্তলা। তপস্যার ব্যগ্রতাবশতঃ পিতার উৎকণ্ঠা নাই, কিন্তু আমিই উৎকণ্ঠাভাগিনী হইলাম।

(হ) কণ্ব। বৎসে! এইরূপ কথা বলিয়া আমাকে একেবারে জড় করিয়া ফেলিতেছ। (নিশ্বাস ত্যাগ করিয়া)

বৎসে! পর্ণশালার দ্বারে তুমি রোপণ করিয়াছিলে, তাহা এখন

(१) काश्यपः। सनिःश्वासम्।

(२) शममेष्यति मम शोकः…। उटजद्वारि विरूढं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गच्छ, शिवास्ते सन्तु पन्थानः । (च)

इति निष्क्रान्ताः शकुन्तलया सह गौतमी-शार्ङ्गरव-शारद्वतमिश्राः । (१)

सख्यौ । चिरं विचिन्त्य सकरुणम् । हद्दी हद्दी । अन्तरिदा

सउन्तला वणराइहिं (२) । (क)

कण्वः । सनिःश्वासम् । अनसूये । प्रियंवदे । गतावां

सहचरी ; निगृह्य शोकावेगं मामनुगच्छतम् । ...

प्रस्थिताः (३) । (ख)

---

(क) हा धिक् हा धिक् ! अन्तरिता शकुन्तला वनराजिभिः ।

---

(च) गच्छेति । शिवा मङ्गलकरा इत्यर्थः ।

(क) सख्याविति । वनानां राजिभिः श्रेणीभिः, अन्तरिता तिरोहिता । ...

च शोकात् सकरुणमित्युक्तम् ।

---

অঙ্কুরিত হইয়াছে, পশু-পক্ষিগণের খাদ্য সেই উড়ীধানগুলি দেখিয়া ...

সময়ে আমার শোক কি প্রকারে যাইবে ॥২৩॥

(ক) যাও, তোমার পথ মঙ্গলময় হউক।

(ইহার পরে শকুন্তলার সহিত গৌতমী, শার্ঙ্গরব ও শারদ্বত ...

প্রস্থান করিলেন।)

(ক) সখীদ্বয়। (বহুকাল চিন্তা করিয়া শোকের সহিত) হা

হায়! শকুন্তলা বনশ্রেণীতে অন্তরিত হইয়া গেল।

(খ) কণ্ব। (নিশ্বাস ত্যাগ করিয়া) অনসূয়া! প্রিয়ংবদা ...

---

(१) निष्क्रान्ता शकुन्तला सहयायिनश्च ।

(२) सख्यौ । शकुन्तलां विलोक्य । हद्धी हद्धी ! अन्तरिहिया ...

वणराईए ।

(३) काश्यपः । सनिःश्वासम् । अनसूये ! गतवती वां सहधर्मचारिणी ...

निगृह्य शोकमनुगच्छ माम् । प्रस्थिताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभे। ताद! सउन्तलाविरहिदं सुस्सं विअ तवोवणं पविसह्म। (ग)

कण्वः। स्नेहप्रवृत्तिरेवं दर्शिनी। सविमर्षं परिक्रम्य। हन्त भोः! शकुन्तलां पतिगृहे विसृज्य लब्धमिदानीं स्वास्थ्यम्। कुतः (१) (घ)

(ग) तात! शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशामः।

(ख) कण्व इति। वां युवयोः सहचरी शकुन्तला। अतएव निगृह्य अवरुध्य। सर्वे कण्वादयः, प्रस्थिताः पर्णशालां प्रति प्रस्थातुमारभन्ते।

(ग) उभे इति। शून्यमिव जनपूर्णत्वेऽपि शून्यवत्प्रतीयमानम्।

(घ) कण्व इति। स्नेहप्रवृत्तिर्वात्सल्यप्रवाहः, एवंदर्शिनी इत्थंप्रत्यायिनी स्निग्ध-जनाभावे निरवच्छिन्नतत्स्नेहप्रवाह एव जनपूर्णत्वेऽपि तत्स्थानस्य शून्यताप्रत्यायक इति रीतेः सार्वजनीनत्वात् नात्र किञ्चिदाश्चर्य्यमिति भावः। सविमर्षं सवितर्कम्, परिक्रम्य गृहं प्रति कियन्तं पदक्षेपं कृत्वा। हन्तेति हर्षे। विसृज्य सम्प्रेष्य। स्वास्थ्यं प्रकृतिस्थता। तत्कारणमाह कुत इति।

"प्रवृत्तिः कथिता वृत्तौ प्रवाहोदन्तयोरपि।" इति विश्वः। "वितर्कः स्यादुन्नयनं परामर्शो विमर्शनम्। अध्याहारस्तर्क ऊहः" इति हेमचन्द्रः।

তোমাদের সহচরী চলিয়া গিয়াছে; শোকের আবেগ দমন করিয়া, আমার পিছনে আইস। ( সকলে প্রস্থান করিল। )

(গ) সখীদ্বয়। পিতঃ! শকুন্তলা না থাকায় শূন্য তপোবনে যেন প্রবেশ করিতেছি।

(ঘ) কণ্ব। স্নেহপ্রবাহই এইরূপ মনে করাইতেছে। ( বিতর্কের সহিত পদক্ষেপ করিয়া ) ওহে! শকুন্তলাকে পতিগৃহে পাঠাইয়া দিয়া এখন স্বাস্থ্য লাভ করিলাম। কারণ,

(১) কাশ্যপঃ। শকুন্তলাং বিসৃজ্য।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अर्थो हि कन्या परकीय एव
तामद्य सम्प्रेष्य परिग्रहीतुः ।
जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा (१) ॥२४॥

इति निष्क्रान्ताः सर्वे ।

## चतुर्थोऽङ्कः ॥०॥

---

अर्थ इति । कन्या अर्थः कन्यारूपं धनम्, परकीय एव, हि सर्वथा अन्यदीय एव, अल्पकालं पितुः अधिककालञ्च वरस्य स्वत्ववत्त्वात् "अधिकेन व्यपदेशा भवन्ती"ति न्यायादिति भावः। अद्य तां कन्याम्, परिग्रहीतुः परिणेतुर्दुष्मन्तस्य समीपे, सम्प्रेष्य विसृज्य, चिरस्य निक्षेपं चिरकालन्यासीकृतं धनम्, अर्पयित्वा इव प्रत्यर्प्य इव, सद्यस्तत्क्षणात्, विशदान्तरात्मा प्रसन्नचित्तः, जातोऽस्मि ; उभयत्रापि दायित्वापगमादिति भावः ।

अत्र श्रौतोपमालङ्कारः। एवशब्दस्य स्थितौ पुनर्हिशब्दस्य उपादानेऽपि "यः कौमारहरः स एव हि वरः" इत्यादिवत् 'एव' 'हि' इति शब्दद्वयेनैव अत्यन्तावधारणसूचनात् न निरर्थकत्वदोषः ।

इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम ॥२४॥

इति महामहोपाध्याय-भारताचार्य्य श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायाम् अभिज्ञानशकुन्तलटीकायामभिज्ञानकौमुद्यां चतुर्थाङ्कविवरणं समाप्तम् ॥०॥

---

কন্যারূপ ধন পরেরই ; তাহা আজ পরিগ্রহীতার নিকট পাঠাইয়া, চিরকালের গচ্ছিত বস্তু ফিরাইয়া দেওয়ার পরে যেমন, সেরূপ সদ্যই প্রসন্নচিত্ত হইলাম ॥২৪॥

( ইহার পরে সকলে চলিয়া গেল। )

চতুর্থ অঙ্ক ॥০॥

---

(१) जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# पञ्चमोऽङ्कः ।

—०:*:०—

ततः प्रविशति कञ्चुकी (१)। (क)

कञ्चुकी। अहोवत! कीदृशीं वयोऽवस्थामापन्नोऽस्मि (२)। (ख)

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनाय (३) ॥१॥

---

(क) तत इति। कञ्चुकं वस्त्रनिर्म्मितदेहावरणमस्यास्तीति कञ्चुकी। स चान्तःपुरचारी गुणवान् वृद्धो ब्राह्मण इत्यालङ्कारिकसङ्केतः। यथा भरतः—

"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः।
सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते।
जरावैक्लव्ययुक्तेन विशेद्गात्रेण कञ्चुकी॥"

(ख) कञ्चुकीति। अहो इत्याश्चर्य्ये, वत इति खेदे। वयसः अवस्थां कालकृतवैषम्यम्, आपन्नः प्राप्तः। ईदृशीं वयोऽवस्थामवलोक्य युगपद्विस्मयो दुःखञ्च जायत इत्याशयः।

---

(क) তদনন্তর কঞ্চুকীর প্রবেশ।

(খ) কঞ্চুকী। হায়! কি রকম বয়সের অবস্থা প্রাপ্ত হইলাম।!

---

(१) कस्मिंश्चित् पुस्तके परवर्त्तिनी राजविदूषकयोः प्रवेशादारभ्य "भावस्थिराणि जननान्तरसौहृदानि" इत्यन्तसन्दर्भः प्रथममेवात्र लिखितः। (२) अहो नु खलु ईदृशीमवस्थां प्रतिपन्नोऽस्मि। (३) आचार इत्यवहितेन···अवलम्बनार्थाः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावदभ्यन्तरगताय देवाय स्वमनुष्ठेयमकालक्षेपार्हं निवेदयामि । स्तोकमन्तरं गत्वा । किं पुनस्तत् ? । विचिन्त्य । आं ज्ञातम्, कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति । भोः । चित्रमेतत् (१) । (ग)

तदेव व्यनक्ति आचार इति । राज्ञः अवरोधगृहेषु अन्तःपुरभवनेषु, अधिकृतेन अध्यक्षतया नियुक्तेन तत्परिरक्षकेणेत्यर्थः मया, आचार इति कञ्चुकिनां वेत्रयष्टिधारणमेव व्यवहार इति हेतोः, न पुनरिदानीमिव देहदौर्बल्येन प्रयोजनवशादिति भावः, या वेत्रयष्टिः, गृहीता पूर्वं धृता ; बहुतिथे अत्यधिके काले गते पूर्णवार्द्धक्य एवावते सतीत्यर्थः, सैव वेत्रयष्टिः, प्रस्थाने स्थानान्तरप्राप्तिकाले विक्लवा देहदौर्बल्यात् वातरोगागमाच्च विह्वला गतिः पादक्षेपो यस्य तस्य मम, अवलम्बनाय आश्रयाय जाता । तथा चेदानीं देहदुर्बलतावशात् यष्टिं विना चलितुमेव न शक्नोमि । तेन च पूर्वं या वेत्रयष्टिर्विनाप्रयोजनं धृता, इदानीन्तु सैव महाप्रयोजनार्था जाता इत्यतो विस्मयः, नितान्तदुर्बलतया परनिर्भरकरणाच्च दुःखमिति भावः ;

अत्र वेत्रयष्टिः पूर्वमाचारमात्रगोचर आसीत् इदानीन्तु अवलम्बनगोचर एव जातेति एकस्या एव वेत्रयष्टेरनेकगोचरत्वात् विशेषालङ्कारः ।

बहूनां पूरण इति बहुतिथः "आख्यातात्व तमादयः" इति पूरणेऽर्थे तिथप्रत्ययः ।

वसन्ततिलका वृत्तम् ॥१॥

(ग) यावदिति । यावदिति वाक्यालङ्कारे । अभ्यन्तरगताय अन्तःपुरवर्तिने देवाय राज्ञे, स्वं स्वीयं तदीयमिति यावत्, अनुष्ठेयं कर्त्तव्यं सन्दर्शनदानमित्यर्थः

---

আমি, রাজার অন্তঃপুরের গৃহগুলিতে অধ্যক্ষরূপে নিযুক্ত হইয়া 'কঞ্চুকীদের বেত্রযষ্টিই ধারণ করিতে হয়' এই ব্যবহারবশতই যে বেত্রযষ্টি ধারণ করিয়াছিলাম, বহুকাল অতীত হওয়ায় সেই বেত্রযষ্টি আমার এখন অবলম্বনের উপায় হইয়া দাঁড়াইয়াছে ; কারণ, চলিবার সময়ে বর্ত্তমানে আমার পদক্ষেপ, বিহ্বল হইয়া থাকে ।১।

---

(१) यावदित्यादिपाठः क्वचिन्नास्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः (१) ॥२॥

परिक्रम्यावलोक्य च । एष देवः—

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते श्रान्तमना विविक्तम् ।

---

अकालक्षेपाह विलम्बायोग्यम् । स्तोकमन्तरं कियद्दूरम् । किं पुनस्तत्, यन्निवेदया-मीत्यर्थः । एतेन विस्मृतिर्द्योतिता । विचिन्त्य स्मृत्वा स्मृतिमभिनीयेति तात्पर्य्यम् । आमिति स्मृतिद्योतकमव्ययम् । ज्ञातं स्मृतम् । किं स्मृतमित्याह कण्वेति । भो इति विषादे । एतत् हठाद्विस्मरणं हठाच्च स्मरणम्, चित्रमाश्चर्य्यम् ।

"भोस्तु सम्बोधनविषादयोः" इति मेदिनी ।

क्षणादिति । निर्वास्यतो निर्वाणं प्राप्स्यतः अचिरं मरिष्यतश्च, प्रदीपस्य, शिखा इव, जरतो वृद्धजनस्य, मतिर्बुद्धिः, क्षणात् प्रबोधम् उन्मेषम् दीप्तिञ्च, आयाति प्राप्नोति क्षणादेव च पुनस्तमसा उन्मेषनिवारकेण तमोगुणेन अन्धकारेण च, लङ्घ्यते आक्रम्यते । एतदेव चित्रमित्याशयः ।

अत्र श्रौती पूर्णोपमालङ्कारः ॥२॥

---

(গ) রাজা অন্তঃপুরে গিয়াছেন, বিলম্বের অযোগ্য তাঁহার কোন কর্ত্তব্য কার্য্য উপস্থিত হইয়াছে, তাঁহাকে জানাই। (একটু দূরে যাইয়া) তাহা জানি কি ? (স্মরণ করিয়া) ও! মনে পড়িয়াছে ; তপস্বী কণ্বশিষ্যগণ মহারাজকে দেখিতে ইচ্ছা করেন। হায়! ইহা আশ্চর্য্য বটে।

যে দীপ নিবিয়া যাইবে, তাহার শিখার ন্যায় বৃদ্ধের বুদ্ধি, ক্ষণ-কালের মধ্যে উন্মেষ লাভ করে, আবার অন্ধকারে আক্রমণ করে ॥২॥

(পাদক্ষেপ করিয়া, দেখিয়া) এই রাজা—

---

(१) अयं श्लोकोऽपि क्वचिन्न दृश्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यूथानि सञ्चार्य्य रविप्रतप्तः
शीतं गुहास्थानमिव द्विपेन्द्रः (१) ॥३॥

भोः! सत्यं धर्म्मकार्य्यमनतिपात्यं देवस्य, तथापि शङ्कितवानस्मि इदानीमेव धर्म्मासनादुत्थिताय देवाय कण्वशिष्यागमनं निवेदयितुम्। अथवा कुतो विश्रामो लोकपालानाम्। तथाहि—(२) (घ)

प्रजा इति। यूथानि हस्तिसमूहान्, सञ्चार्य्य यथास्थाने परिचाल्य, रविणा सूर्य्येण प्रतप्तः सन्तप्तो द्विपेन्द्रो हस्तिश्रेष्ठः, शीतं शीतलम्, गुहास्थानं गह्वरदेशमिव, एष देवो राजा दुष्मन्तः, स्वाः स्वकीयाः, प्रजाः सन्तानानिव, वात्सल्यविषया इति भावः, प्रजाः स्वाधिकारवासिनो जनान्, तन्त्रयित्वा शासनेन न्याय्यपथे स्थापयित्वा, श्रान्तं परिश्रान्तं मनो यस्य स श्रान्तमनाः सन्, विविक्तं निर्जनस्थानम्, निषेवते आश्रयति, श्रमापनोदनार्थमिति भावः।

अत्र प्रथमे पादे यमकं श्रौतीपमा च, द्वितीयार्द्धे चापरा श्रौतीपमा, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः।

"प्रजा स्यात् सन्ततौ जने" इत्यमरः। "तन्त्रि कुटुम्बधारणे" धारणञ्च न्याय्यपथस्थापनम्, "संस्था तु मर्य्यादा धारणा स्थितिः" इत्यमरकोषात्। "विविक्तौ पूतविजनौ" इति चामरः। इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥३॥

হস্তিগণকে যথাস্থানে সঞ্চালিত করিয়া, সূর্য্যের কিরণে সন্তপ্ত হইয়া, হস্তিশ্রেষ্ঠ যেমন শীতল পর্ব্বতগুহা আশ্রয় করে, সেইরূপ ইনি নিজের সন্তানের ন্যায় প্রজাবর্গকে ন্যায্যপথে চালাইয়া, পরিশ্রান্তচিত্ত হইয়া, নির্জ্জন স্থান আশ্রয় করিয়াছেন ॥৩॥

(१) शीतं दिवा स्थानमिव।

(२) भोः! कामं तथापीदानीमेव धर्म्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदयितुम्। अथवा अविश्रमो लोकतन्त्राधिकारः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म्म एषः ॥४॥

इति परिक्रामति । (ङ)

(घ) भो इति । देवस्य राज्ञो दुष्मन्तस्य, धर्म्मकार्य्यं यत् किमपि धर्म्मसम्बन्धि कर्म्म, अनतिपात्यम् अनतिक्रमणीयम्, सत्यम् इति स्वीकरोमीत्यर्थः । धर्म्मासनात् धर्म्मपरिचालनासनात् विचारासनादिति तात्पर्य्यम्. उत्थिताय उत्थानानन्तरमारब्ध-विश्रामायेत्यर्थः । शङ्कितवान् सातङ्कः । तथा च प्रचुरतरविचारकरणेन दारुण-परिश्रमानन्तरं केवलमारब्धविश्रामः पुनरपि परिश्रमविषयमाकर्ण्य यदि मां प्रति क्रुध्ये-दित्यत इत्याशयः । लोकपालानां नृपतीनाम् ।

"सत्यं प्रश्नेऽभ्युपगमे" इति मेदिनी ।

भानुरिति । भानुः सूर्य्यः, सकृत् जीवने एकवारमात्रं युक्ता जगत्पर्य्यटनाय रथे निबद्धाः तुरङ्गा अश्वा येन स तादृश एव ; न तु कदाचिदपि तुरङ्गान् विमोच्य विश्राम्य-तीति भावः । गन्धवहो वायुः, रात्रिन्दिवम् अहोरात्रमेव, प्रयाति प्रवहति, न पुनः कदाचिदपि ततो विरमतीत्यभिप्रायः । तथा शेषः अनन्तनागः, सदैव, आहितो धृतः भूमिभारो येन स तथाभूतः, न तु क्वचिदपि तां भूमिमपास्य कियन्तं विश्रामं करोतीत्याशयः । षष्ठांशः प्रजानिर्म्मितशस्यादीनां षष्ठो भाग एव वृत्तिर्जीविका यस्य तस्य तथोक्तस्यापि राज्ञोऽपीत्यर्थः, एषः अविरतपरिश्रमरूपः, धर्म्म आचारः । एवञ्च राज्ञो विश्रामासम्भवादकुतोभयेनैव कण्वशिष्यागमनं निवेदयितुमर्हामीति भावः ।

(ঘ) ওহে ! রাজা নিশ্চয়ই ধর্ম্মকার্য্যের অতিক্রম করিবেন না ; তথাপি এখনই ধর্ম্মাসন হইতে উঠিয়া গিয়াছেন ; সুতরাং এখনই আবার কণ্বশিষ্যগণের আগমন জানাইতে আশঙ্কিত হইতেছি। অথবা, রাজাদের বিশ্রাম হইবে কোথা হইতে। কারণ,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः प्रविशति राजा विदूषको विभवतश्च परीवारः (१)। (च)

राजा। अधिकारखेदं निरूप्य। सर्वः प्रार्थितमधिगम्य सुखी सम्पद्यते जन्तुः; राज्ञान्तु चरितार्थता दुःखोत्तरैव। कुतः (२) (छ)

अत्र अविरतपरिश्रमरूपस्य एकस्यैव धर्म्मस्य विभिन्नवाक्यैः पृथक् पृथक् निर्द्देशात् "विमल एव रविर्विशदः शशी" इत्यादिदर्पणोदाहरणवत् मालारूपा प्रतिवस्तूपमा; एवशब्दाभ्यां कादाचित्कतुरङ्गमोचनादिधर्म्मव्यपोहनात् शाब्दपरिसंख्यावयश्च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः। सकृदयुक्ततुरङ्गादिशब्दैर्विच्छित्तिविशेषजननाभ्रानवीकृतत-दोष इति सप्तमपरिच्छेदे दर्पणकृतामाशयः।

रात्रिश्च दिवा चेति द्वन्द्वे "अचतुरविचतुर..." इति निपातनात् रात्रिन्दिवमिति सिद्धम्। इन्द्रवज्रा वृत्तम्—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात् ॥४॥

(ङ) इतीति। परिक्रामति राज्ञोऽन्तिकं गन्तुं पादक्षेपं करोति।

(च) तत इति। परीवारो मन्त्रिप्रभृतिपरिजनः, विभवतः सम्पत्त्यनुसारेण अभिनेतृगणस्य यावत् सम्भवति तावत्संख्यकः परिजन इत्यर्थः।

परीवार इति "क्वचित् दीर्घता" इति परेरिकारस्य दीर्घता।

(छ) राजेति। अधिकारखेदं स्वकर्त्तव्यनिबन्धनं विषादम्, निरूप्य अभिनीय। सर्वो जन्तुः प्राणी, प्रार्थितम् आकाङ्क्षितम्, अधिगम्य प्राप्य, सुखी सम्पद्यते भवति।

---

সূর্য্য, নিজের রথে একবারমাত্র অশ্ব বন্ধন করিয়াছেন; বায়ু দিবারাত্র প্রবাহিত হইতেছেন; অনন্তদেব সর্ব্বদাই পৃথিবীর ভার বহন করিতেছেন; আর করগ্রাহী রাজাদেরও এই ধর্ম্ম ॥৪॥

(ঙ) (এই বলিয়া পদক্ষেপ করিতে লাগিলেন।)

(চ) তদনন্তর রাজা, বিদূষক ও সম্ভবতঃ পরিজনবর্গের প্রবেশ।

---

(१) ततः प्रविशत्यासनस्थो राजा विदूषकश्च।

(२) राजा। परिक्रामति। अधिकारखेदं निरूप्य। सर्वः प्रार्थितमर्थम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

७५ औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् (१) ॥५॥

तु किन्तु, राज्ञां चरितार्थता प्रार्थितराज्यलाभेन कृतकार्य्यता, दुःखमेव उत्तरं चरमं फलं यस्यां सा तादृशी एव। अतः प्राण्यन्तरेभ्यो निकृष्टा एव राजान इति भावः। तत् समर्थयितुमाह कृत इति।

"प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इत्यमरः।

औत्सुक्येति। प्रतिष्ठा प्रार्थितराज्यलाभनिष्पत्तिः, औत्सुक्यमात्रं तद्राज्यलिप्सानिबन्धनां केवलामुत्कण्ठाम्, अवसादयति निवर्त्तयति। तथा च ईप्सितनूतनराज्यादिप्राप्तिः तत्प्राप्त्याशानिबन्धनं पूर्वजातमुत्कण्ठामात्रं निवर्त्तयति ; किन्तु तस्य सुव्यवस्थापनाय व्यापारसहस्रव्यापृततया न काञ्चिदपि शान्तिं जनयतीति मात्रपदस्यार्थो भावार्थश्चायं च। तथा लब्धस्य राज्यादेः परिपालनवृत्तिरेव शासनव्यापार एव, क्लिश्नाति राजानं पीड़यति ; सर्वदैव नानाकार्य्यव्यापृततया कादाचित्कशान्तेरप्यभावादिति भावः। अतः स्वेन हस्तेन धृतो दण्डो यस्य तत् तादृशम्, आतपत्रं छत्रमिव, राज्यं कर्तृ, श्रमाय यथा भवति, तथा अतिश्रमापनयनाय श्रमस्यात्यन्तदूरीकरणाय न भवति, यावत्परिमाणेन श्रमं जनयति, तावत्परिमाणेन श्रमं न नाशयतीत्यर्थः।

अत्र परार्द्धवाक्यार्थं प्रति पूर्वार्द्धवाक्यार्थद्वयं हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गं श्रौतोपमा च, अनयोर्मिथो निरपेक्षतया संसृष्टिः।

"प्रतिष्ठा स्थानमात्रके। गौरवे यागनिष्पत्ति-चतुरक्षरपद्ययोः।" इति विश्वः। वसन्ततिलका वृत्तम् ॥५॥

(छ) राजा। (निजेर कार्य्यवशतः विषाद अभिनय करिया) सकल प्राणीइ प्रार्थित वस्तु लाभ करिया सुखी हय ; किन्तु राजादेर कृतकार्य्यतार परेओ दुःख। केन ?।

(१) नातः श्रमापनयनाय।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेपथ्ये वैतालिकौ । जयति जयति देवः (१) । (ज)

एकः (२) । (झ)

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते सृष्टिरेवंविधैव ।
अनुभवति हि मूर्द्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥६॥

(ज) नेपथ्य इति । वैतालिकौ राविशेषे बोधकारौ स्तुतिपाठकौ । "वैतालिका बोधकराः" इत्यमरः ।

(झ) एक इति । वैतालिकयोरेकतर इत्यर्थः ।

स्वसुखेति । प्रतिदिनं सर्वदैवेति तात्पर्य्यम्, त्वम्, स्वसुखे आत्मसुखानुभवे निरभिलाषो निःस्पृहः सन्, लोकहेतोः प्रजानां सुखसाधनार्थम्, खिद्यसे परिश्राम्यसि। अथवा ते तव सृष्टिर्विधातृकर्त्तृकनिर्म्माणम्, एवंविधैव कीवलपरार्थपरैव, वर्त्तते इति शेषः । हि तथाहि, पादपो वृक्षः, मूर्द्ध्ना आत्मनो मस्तकेन, तीव्रं प्रखरम्, उष्णम् आतपम्, अनुभवति स्वयं प्रत्यक्षीकरोति ; किन्तु छायया, संश्रितानाम् आत्मानमाश्रितानां जनानाम्, परितापं रविकिरणसन्तापम्, शमयति निवारयति। यथा पादपो निजमस्तकेन तीव्रमातपतापमनुभवन् छायया आश्रिततापं निवारयति; तथा त्वमपि स्वयं खिद्यमानः सामदानादिभिः परखेदं निवारयसीति भावः ।

अत एवात्र दृष्टान्तोऽलङ्कारः । तथा "तद्गच्छ सिद्धै कुरु देवकार्य्यम्" इति

নূতন রাজ্যলাভপ্রভৃতি, কেবল উৎকণ্ঠা নিবৃত্তি করে; আবার রাজ্যের পরিপালনব্যাপারই ক্লেশ জন্মায়। অতএব স্বহস্তধৃত ছত্রের ন্যায় রাজত্ব, যতটা শ্রম জন্মায়, ততটা পরিশ্রম নষ্ট করে না ॥৫॥

(জ) নেপথ্যে দুইজন স্তুতিপাঠক। মহারাজের জয় হউক মহারাজের জয় হউক।

(१) विजयतां देवः । (२) प्रथमः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वितीयः । नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः संविभक्ता-
स्त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम् (१) ॥७॥

दर्पणोदाहृतवत् 'मूर्द्धा' इत्यत्र पदांशगतो दुःश्रवत्वदोषः; स तु 'अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णम्' इति पाठेन समाधेयः ।

मालिनी वृत्तम् ॥६॥

नियमेति । त्वम् आत्तदण्डो धृतराजदण्डः सन्, विमार्गप्रस्थितान् विपथगामिनो जनान्, नियमयसि विमार्गान्निवर्त्तयसि; विवादं प्रजानां परस्परविरोधम्, प्रशमयसि सद्विचारेण निवारयसि; तथा रक्षणाय विपन्नः प्रजानां परिपालनाय, कल्पसे शक्नोषि; तथा ज्ञातयो प्रजानां भ्रात्रादिदायादाः, अतनुषु अनल्पेषु प्रचुरेष्वित्यर्थः विभवेषु धनेषु संविभक्ताः सम्यक् विभज्य त्वया विवादान्निवर्त्तिताः । तुशब्दोऽवधारणे । अतएव जनानां प्रजानाम्, बन्धुकृत्यं सुहृत्कार्य्यम्, त्वयि तु त्वय्येव, परिसमाप्तं निष्पन्नम्; सर्वथैव हितसाधनादिति भावः ।

अत्र नियमयसीत्यादिक्रियात्रयस्य त्वमित्येककर्तृकारकत्वात् दीपकमलङ्कारः चतुर्थ-चरणार्थं प्रति पूर्वचरणत्रयगतवाक्यार्थो हेतव इति वाक्यार्थहेतुकं काव्यलिङ्गञ्च; अनयोः परस्परनिरपेक्षतया संसृष्टिः । तथा नियमयसीत्यादिपरस्मैपदिक्रियया प्रक्रम्य कल्पसे इत्यात्मनेपदिक्रियाभिधानात् कर्तृवाच्यप्रत्ययेन प्रक्रम्य संविभक्ता इति कर्मवाच्य-प्रत्ययाभिधानाच्च भग्नप्रक्रमताद्दोषद्वयम्, 'कल्पसे रक्षणाय' इत्यत्र 'रक्षसि त्वं विपन्नः'

এক স্তুতিপাঠক। আপনি নিজের সুখে নিঃস্পৃহ হইয়া সাধারণ লোকের সুখের জন্য সর্ব্বদা পরিশ্রম করিয়া থাকেন। অথবা আপনার সৃষ্টিই এইরূপ পরের জন্য। কারণ, বৃক্ষ নিজের মস্তকে অত্যন্ত রৌদ্র ভোগ করে, অথ চ ছায়াদ্বারা আশ্রিতলোকের সন্তাপ শান্তি করে ॥৬॥

(१) ज्ञातयः सन्तु नाम···बन्धुकृत्यं प्रजानाम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। আকর্ণ্য সাশ্চর্য্যম্। এতেন কার্য্যানুশাসনপরিশ্রান্তাঃ পুনর্নবীকৃতাঃ স্মঃ (১)। (ঞ)

বিদূ। বিহস্য। ভো! গোবিন্দারঅত্তি ভণিদস্স বিসভস্স কিং পরিস্সমো বাস্সদি? (২)। (ট)

(ট) ভোঃ! গোবৃন্দারকেতি ভণিতস্য বৃষভস্য কিং পরিশ্রমো নশ্যতি?।

ইতি পাঠেন 'ম্রিয়েত বহুত্বতে থান্ধবান্ সংবিভজ্য' ইতি পাঠেন চ সমাধেয়ঃ। অল্পধনে নাতিদুষ্করত্বাৎ প্রায়েণৈব গ্রাম্যমধ্যস্থেন বিভাগসম্পাদনদর্শনাৎ তত্র বিভাজকস্য নাতিদক্ষত্বম্, নানাবিধবহুধনবিভাগস্য তু মহাদুষ্করত্বাত্তত্র বিভাজকস্য মহাদক্ষত্বমেবেতি সূচয়িতুম্ অনতুদ্বিতি বিশেষণমিতি নাপুষ্টার্থত্বদোষঃ।

মালিনী বৃত্তম্ ॥৭॥

(ঞ) রাজেতি। সাশ্চর্য্যং বিরতহৃদয়স্য সহসৈব ভদ্রমানুভবাৎ সবিস্ময়ম্। এতেন বৈতালিকবাক্যেন, কার্য্যানুশাসনেন রাজকর্ম্মচারিষু কর্ত্তব্যোপদেশেন পরিশ্রান্তাঃ পরিশ্রমেণ বিরতোদ্যমা অপি বয়মিত্যর্থঃ, পুনর্নবীকৃতাঃ পুনর্নবোদ্যমীকৃতাঃ। অবসরসাধুক্তং বৈতালিকাভ্যামিতি ভাবঃ।

দ্বিতীয় স্তুতিপাঠক। আপনি রাজদণ্ড ধারণ করিয়া, বিপথগামী লোকদিগকে নিয়মিত করেন, প্রজাগণের পরস্পর বিবাদ মিটাইয়া থাকেন, জনসাধারণকে রক্ষা করেন এবং প্রচুর ধনসম্পত্তি থাকিলে তাহা জ্ঞাতিদিগকে বিভক্ত করিয়া দেন; সুতরাং লোকের বন্ধুকার্য্য আপনাতেই নিষ্পন্ন হয় ॥৭॥

(ঞ) রাজা। (শুনিয়া আশ্চর্য্যের সহিত) কার্য্যের উপদেশ দিতে থাকায় আমি পরিশ্রান্ত হইলেও, এই উক্তিতে পুনরায় নবোদ্যমীকৃত হইলাম।

(১) রাজা। এতে ক্লান্তমনসঃ পুনর্নবীকৃতাঃ স্মঃ। পরিক্রামতি।

(২) কস্মিংশ্চিৎ পুস্তকে অয়ং পাঠো ন দৃশ্যতে।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सस्मितम्। ननु क्रियतामासनपरिग्रहः (१)। (ठ)

उभावुपविष्टौ, परिजनश्च यथास्थानं स्थितः। (ड)

नेपथ्ये वीणाशब्दः।

विदू। कर्णं दत्त्वा। भो वअस्स! सङ्गीदसालब्भन्तरे कण्णं देहि, ताललअसुद्धाए वीणाए सलसंजोओ सुणीअदि। जाणे तत्थभोदी हंसवदी वण्णपरिचअं करेदि त्ति (२)। (ढ)

---

(ढ) भो वयस्य! सङ्गीतशालाभ्यन्तरे कर्णं देहि,ताललयशुद्धाया वीणायाः स्वरसंयोगः श्रूयते। जाने तत्रभवती हंसवती वर्णपरिचयं करोतीति।

---

(ट) विदू इति। विहस्य स्ववाक्यस्य कौतुककरत्वात् मन्दहास्यं कृत्वा। गवां वृन्दारकः श्रेष्ठ इति गोवृन्दारकः, इति इत्थं भणितस्य प्रशंसितस्य वृषभस्य, किं परिश्रमो नश्यति कुतोऽपि नेत्यर्थः। अतएव च वैतालिकाभ्यां प्रशंसितस्य भवतोऽपि परिश्रमो न नष्ट इत्याशयः। एतेन राज्ञो वृषभत्वसूचनात् कौतुकं सूचितम्।

(ठ) राजेति। सस्मितम् उक्तकौतुकवाक्यश्रवणादीषत् समन्दहासम्। ननु अनुज्ञायां नुशब्दः। आसनपरिग्रहः आसने उपवेशनमित्यर्थः।

(ड) उभाविति। राजविदूषकावित्यर्थः।

---

(ट) বিদূষক। (হাস্য করিয়া) ওহে! গোশ্রেষ্ঠ বলিলে কি বৃষের পরিশ্রম নষ্ট হয়?।

(ঠ) রাজা। (ঈষৎ হাস্য করিয়া) ওহে! তুমি আসন গ্রহণ কর!

(ড) (রাজা ও বিদূষক উপবেশন করিলেন, পরিজনবর্গও যথাস্থানে বসিল।)

নেপথ্যে বীণার ধ্বনি হইতে লাগিল।

---

(१) क्वचिदेष पाठोऽपि नास्ति।

(२) अवहाणं देहि। काअलिमहाए गीदीए सरसंजोओ सुणीअदि। जाणामि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। तूष्णीम्भव, यावदाकर्णयामि। (ण)

कञ्चुकी। विलोक्य। अन्यासक्तो देवः, तदवसरं प्रतिपाल-यामि। इत्येकान्ते स्थितः (१)। (त)

नेपथ्ये गीयते (२)। *

अहिणव-महु-लोह-भाविदो
तह परिचुम्बिअ चूअमञ्जरिं।

(ढ) विदू इति। देहि नियोजय। तालः कालक्रियामानम्, लयः गानवाद्ये-साम्यं ताभ्यां शुद्धाया निर्दोषायाः, स्वरसंयोगः स्वरसम्बन्धः। जाने मन्ये, तत्रभवती राजरमणीत्वात् माननीया, हंसवती नाम काचित् राज्ञी, वर्णपरिचयं गीताचरणेन 'स-ऋ ग-म'-शिक्षामित्यर्थः।

(ण) राजेति। तूष्णीम्भव नीरवो भव, यावत् कालं व्याप्य। अन्यथा तवाडम्-स्वरेण गीतस्वरतिरोधानादाकर्णयितुं न शक्नोमीति भावः।

(त) कञ्चुकीति। विलोक्य—राजानं गाने दत्तावधानमवगम्य। अन्यस्मिन् विषये आसक्तो दत्तावधानः। तत्तस्मात्। प्रतिपालयामि प्रतीक्षे। एकान्ते एकस्मिन् पार्श्वे।

* नेपथ्य इति। गीयते हंसवत्येति बोध्यम्।

अभिनवेति। हे मधुकर! भ्रमर! अन्यत्र मधुमन्मधुरसुरतसुखकर! तुम-

(ঢ) বিদূষক। (কাণ দিয়া) বয়স্য! সঙ্গীতশালার ভিতর কাণ দাও; তাল-লয়শুদ্ধ বীণার স্বর শুনা যাইতেছে, সুতরাং বোধ হয় মাননীয়া হংসবতী 'স-ঋ-গ-ম' সাধিতেছেন।

(ণ) রাজা। চুপ কর, যাবৎ শুনি।

(ত) কঞ্চুকী। (দেখিয়া) রাজা অন্য বিষয়ে আসক্ত রহিয়াছেন, অতএব অবসর প্রতীক্ষা করি। (এই বলিয়া একপ্রান্তে রহিলেন।)

* নেপথ্যে গান করিতে লাগিল।

(१) क्वचिदयं पाठो नास्ति। (२) आकाशे गीयते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कमलवसदिमेत्तणिव्वुदो

महुअर ! विह्मरिदोसि णं कहं (१) ॥८॥

अभिनवमधुलोभभावितस्तथा परिचुम्ब्य चूतमञ्जरीम् ।

कमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽसि एनां कथम् ॥८॥

अभिनवस्य नूतनोत्पन्नस्य, अतएवात्यन्तसुस्वादस्येति भावः, मधुनो रसस्य लोभेन भावितो वासितः समन्वित इति यावत्, अन्यत्र अभिनवस्य रमणीजनस्य मधुनो मधुवत्परममनोहर-सुरतसुखस्य लोभेन भावितो वासितः समन्वितः सन्, तथा तेन प्रकारेण अत्यन्तरूपेणेत्यर्थः चूतमञ्जरीम् आम्रवल्लरीम्, परिचुम्ब्य मधुपानाय मुखसंयोगपात्रीकृत्य, अन्यत्र चूत-मञ्जरीवत् परमलोभनीयां तरुणीम्, परिचुम्ब्य गाढालिङ्गनादिभोगविषयीकृत्य, अधुना कमले पद्मे वसतिमात्रेण केवलावस्थानेन परिणतप्रायतया तादृशमध्वभावात् न तु मधुपानेनापीति मात्रपदस्यार्थः, निर्वृतः सुस्थः सन्, अन्यत्र कमले कमलवत् सुदृश्यमात्रे प्रौढ़प्रायत्वात् सुरसहीने अन्यराज्ञीजने वसतिमात्रेण केवलावस्थानेन न तु तादृशामोद-करणेनेत्यर्थः, निर्वृतः अगत्या सुस्थः सन्, एनां चूतमञ्जरीम्, अन्यत्र परिचुम्बितपूर्वां हंसवतीं शकुन्तलाञ्च, कथं विस्मृतोऽसि, सुखकरवस्तुनः सर्वदैव स्मरणौचित्यात् इदं तव विस्मरणं महदेवानुचितमिति भावः ।

पदार्थद्वयस्य प्राकरणिकत्वाभावान्न श्लेषः, अपि तु शब्दशक्तिमूलो वस्तुध्वनिः, तथा प्रच्छेदकाख्यं लास्याङ्गमिदम् । यथा दर्पणे—

"अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना ।

वीणापुरःसरः गानं स्त्रियाः प्रच्छेदको मतः ॥"

तथा राज्ञः सहसैव हंसवतीरूपार्थसम्पत्तिः, तेन च सभ्यानामपि तथैवार्थसम्पत्तिः ; परञ्च शकुन्तलाप्रत्यच्चे पूर्वापेचया उपचारातिशयेन तद्रूपार्थसम्पत्तेर्गुणवत्त्वादिदं दर्पणोक्तं प्रथमं पताकास्थानम् । यथा तत्रैव—

"सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।

पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ॥"

(१) अहिणवमहुलोलुवो तुमं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। अहो! रागपरिवाहिणी गीतिः। (थ)

विदू। भो वअस्स! किं दाव से गीदिआए अवि गहीदो भअदा अक्खरत्थो (१)। (द)

राजा। सस्मितम्। सकृत्कृतप्रणयोऽयं जन इत्यक्षरार्थः। तदहं देवीं हंसवतीमन्तरेण उपालम्भनमागतोऽस्मि। सखे!

(द) भो वयस्य! किं तावदस्या गीतिकाया अपि गृहीतो भवता अक्षरार्थः।

---

"भावितं वासिते प्राप्ते" इति मेदिनी।

विस्मृत इत्यादिकर्म्मणि कर्त्तरि क्तः।

अपरवक्त्रं नाम वृत्तम्—"अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥८॥

(थ) राजेति। अहो आश्चर्य्यें। रागमनुरागं परिवहति प्रवाहवदविच्छिन्नभावेन स्रवतीति रागपरिवाहिणी, गीतिर्गानम्, इदं गानं प्रवाहभावेनानुरागं व्यनक्तीत्यर्थः।

(द) विदू इति। गीतिकाया गानस्य। अक्षरार्थः अक्षरप्रतिपाद्यो व्यक्तार्थः अपि गृहीतः किमवगतः। अक्षरं वर्णः।

---

হে ভ্রমর! তুমি নূতন মধুর লোভে আকৃষ্ট হইয়া, সেইভাবে আম্রমঞ্জরীকে চুম্বন করিয়া, এখন কেবল পদ্মে বাস করায় সন্তুষ্ট হইয়া, সে আম্রমঞ্জরীকে বিস্মৃত হইলে কেন।৮।

(থ) রাজা। কি আশ্চর্য্য! গানটী যে একেবারে অনুরাগের প্রবাহ চালাইয়া দিল।

(দ) বিদূষক। বয়স্য! তুমি এই গীতের অর্থ বুঝিতে পারিয়াছ ত?।

---

(१) विदूषकः। किं दाव गीदीए अवगदो अक्खरत्थो।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माधव्य! मद्वचनादुच्यतां देवी हंसवती, सम्यगुपालब्धो-ऽस्मीति (१)। (ध)

विदू। जं भवं आणवेदि। उत्थाय। भो वअस्स! गहीदो तुए परकीएहिं हत्थेहिं सिहण्डए अच्छभल्लो, ता वीदराअस्स असरणस्स णत्थि मे मोक्खो (२)। (न)

(न) भो वयस्य! गृहीतस्त्वया परकीयाभ्यां हस्ताभ्यां शिखण्डके अच्छभल्लः। तद्वीतरागस्य अशरणस्य नास्ति मे मोक्षः।

(ध) राजेति। अल्पमतेर्विदूषकस्यापि अवगतो आत्मनोऽवगतेः सर्वथा सिद्धत्वे-ऽपि पुनः प्रश्नकरणात् कौतुकेन स्मितमिति बोध्यम्। सकृदेकवारं कृतः प्रणयो यस्मिन् स तादृशः, अयं हंसवतीरूपो जनः, इति इत्थम् अक्षरार्थः अक्षरप्रतिपाद्यो व्यङ्ग्यार्थः। इदन्तु विदूषकप्रश्नस्योत्तरम्। अन्तरेण विना परित्यज्य स्थित इत्यर्थः, उपालम्भनम् उक्तरूपं तिरस्कारम्, आगतः प्राप्तः। उपालब्धस्तिरस्कृतः। एतेनात्मनो दक्षिण-नायकत्वं सूचितम्। यथा दर्पणे—

"एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः।"

(न) विदू इति। परकीयाभ्याम् अन्यजनसम्बन्धिभ्याम्, हस्ताभ्यां कराभ्याम्,

(ধ) রাজা। (ঈষৎ হাস্যের সহিত,) এই ব্যক্তির সহিত একবার-মাত্র প্রণয় করা হইয়াছিল, ইহাই এই গানের অর্থ। অতএব আমি রাণী হংসবতীকে ছাড়িয়া এই তিরস্কার প্রাপ্ত হইলাম। বয়স্য! মাধব্য! আমার বাক্যানুসারে রাণী হংসবতীকে বল—ঠিক্ তিরস্কৃত হইয়াছি।

(१) राजा। स्मितं कृत्वा। जनः। तदस्या देवीं वसुमतीमन्तरेण महदुपा-लम्भनं गतोऽस्मि। सखे! माधव्य! उच्यतां हंसपदिका निपुणमुपालब्धोऽस्मीति।

(२) वअस्स! गहीदस्स तए सिहण्डए ताडीअमाणस्स अच्छराए वीदराअस्स विअ णत्थि दाणिं मे मोक्खो।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । सखे ! गच्छ, नागरिकवृत्त्या सान्त्वयैनाम् (१)। (प)

विदू । का गई ! इति निष्क्रान्तः । (फ)

(फ) का गतिः ।

शिखण्डके शिखायाम्, अच्छभल्लो भालूकः, गृहीतो धृतः। तथा च शिखायां भालूकग्रहणे तदीयनखानां सुतीक्ष्णत्वादतिशयेनैव ग्रहीतुर्देहविदारणसम्भावनेति बोध्यम्। इत्थञ्च यथा परद्वारा शिखायां भालूकधारणे तस्य परस्यैव महाविपत्सम्भावना, स्वयन्तु निर्विपदेव तिष्ठति, तथा मद्द्वारा हंसवतीसान्त्वने ममैव महाविपत्सम्भावना, भवांस्तु निर्विपदेव स्थास्यतीति भावः। अतएवात्र असम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः। वीतरागस्य ईदृशकार्थ्यप्रवृत्त्या परित्यक्तजीवनानुरागस्य, अशरणस्य रक्षकहीनस्य मे मम, मोक्षः हंसवतीवकाशादव्याहतिर्नास्ति, अच्छभल्लवत् हंसवती व्यवहारेणैव मे अवसानसम्भावनेति भावः।

(प) राजेति। नागरिकस्य नगरवासिनो जनस्य वृत्त्या व्यवहारेण चातुर्येणेत्यर्थः। नगरवासिनो हि स्वभावत एव चतुरा भवन्ति। एनां हंसवतीम्, सान्त्वय प्रसादय।

(फ) विदू इति। का गतिः अगतौ क उपायः। तेनावश्यमेव गन्तव्यमिति भावः। अत्रेदमालोचनीयम्—विदूषकमपसारयता कविना परस्तात् शकुन्तलाप्रत्याख्यानमुपपादितम्। अन्यथा तत्र सन्निहितो विदूषकः पूर्वजल्पनया सम्भाव्यमानं शकुन्तलापरिणयमवश्यमेव स्मारयेत् तथा च सति तत् प्रत्याख्यानं न स्यादिति।

(न) বিদূষক। তুমি যাহা আদেশ কর। (উঠিয়া) বয়স্য! তুমি পরের হাত দিয়া ভালূকের মাথা ধরিলে। তা জীবনের আশাশূন্য এবং রক্ষকহীন আমার অব্যাহতি নাই।

(প) রাজা। সখে! যাও, চাতুর্য্যবৃত্তিদ্বারা ইহাকে শান্ত কর।

(ফ) বিদূষক। উপায় কি। (এই বলিয়া চলিয়া গেল।)

(१) राजा। गच्छ संज्ञापयैनाम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। स्वगतम्। किन्नु खलु गीतमेवंविधमाकर्ण्य इष्ट-जनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि। अथवा—(१) (ब)

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्य्युत्सुको भवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि (२) ॥८॥

६४

(ब) राजेति। इष्टजनस्य प्रियजनस्य विरहात् ऋतेऽपि विनापि, बलवदत्यन्तम्। इष्टजनस्य विरहं विनापि आत्मनो बलवदुत्कण्ठां समर्थयितुमाह अथवेति।

रम्याणीति। सुखितोऽपि प्रियजनसंयोगेन सञ्जातसुखोऽपि, जन्तुः प्राणी, रम्याणि सुन्दराणि वस्तूनि वीक्ष्य, मधुरान् सुश्राव्यान् शब्दांश्च निशम्य श्रुत्वा, यत् पर्य्युत्सुक इष्टजनविरहाभावेऽपि उत्कण्ठितो भवति, तत् नूनं निश्चितमेव, चेतसा मनसा, अबोधपूर्वम् अननुभवपूर्वकम्। यथा कथञ्चिदनुभूतस्यैव पदार्थस्य तदननुभवकाले चित्ते उपस्थितिर्हि स्मरणम्; तदनुभवपूर्वकत्वञ्चात्र नास्ति जन्मान्तरगतत्वादिति भावः। भावस्थिराणि स्वभावत एवाक्षयाणि, जननान्तरसौहृदानि पूर्वजन्मगतप्रणयान्, स्मरति स्वभावादेवानुध्यायति स जन्तुरित्यन्वयः। अतएव इयं गायिका या काचिद्भवतु, मा भवतु चेष्टजनविरहः; तथापि एतद्गायिकया सह जन्मान्तरे मम किञ्चित् सौहार्द्दमासीत्, तद्वशादेवैयमुत्कण्ठा जातेत्याशयः।

अतएवात्र अप्रस्तुतात् जन्तुसामान्यात् प्रस्तुतस्य आत्मरूपस्य जन्तुविशेषस्य प्रतीते-रप्रस्तुतप्रशंसालङ्कारः, बोधरूपकारणाभावेऽपि स्मरणरूपकार्य्योत्पत्तेर्विभावना च अनयो-रङ्गाङ्गिभावेन सङ्करः। तथा रम्याणीति नपुंसकलिङ्गेन प्रक्रम्य मधुरानिति पुंलिङ्गप्रयोगात् भग्नप्रक्रमतादोषः, स च 'रम्यान् समीक्ष्य' इति पाठेन समाधेयः।

(ব) রাজা। (স্বগত) ইষ্টজনের বিচ্ছেদ না থাকিলেও, এইরূপ গান শুনিয়া আমি, অত্যন্ত উৎকণ্ঠিত হইলাম কেন?। অথবা—

(१) राजा। आत्मगतं गीतमाकर्ण्य। (२) पर्य्युत्सुकीभवति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ইত্যস্মৃতিনিমিত্তমুন্মনস্কত্বং রূপয়তি (১)। (ম)

কঞ্চুকী। উপসৃত্য। জয়তি জয়তি দেবঃ। এতে খলু হিমগিরেরুপত্যকারণ্যবাসিনঃ কণ্বসন্দেশমাদায় সস্ত্রীকা-স্তপস্বিনঃ সম্প্রাপ্তাঃ। শ্রুত্বা দেবঃ প্রমাণম্ (২)। (ম)

---

"ভাবঃ সত্তাস্বভাবাভিপ্রায়চেষ্টাত্মজন্মসু" ইত্যমরঃ।

সুখমস্য সঞ্জাতমিতি সুখিতঃ তারকাদিত্বাদিতচ্ প্রত্যয়ঃ।

বসন্ততিলকা বৃত্তম্ ॥৯॥

(ম) ইতীতি। উন্মনস্কত্বমুৎকণ্ঠাম্, রূপয়তি অভিনয়তি।

(ম) কঞ্চুকীতি। উপত্যকায়ামাসন্নভূমৌ যদরণ্যং তত্র বসন্তীতি তে। কণ্বস্য মহর্ষেঃ সন্দেশং বাচিকম্। সম্প্রাপ্তা উপস্থিতাঃ। দেবো রাজা ভবান্, প্রমাণং কর্তব্য-নির্ণেতা যৎ কর্তব্যং মন্যতে তৎ কর্তুমর্হতীত্যর্থঃ।

"উপত্যকাদ্রেরাসন্না" ইতি "প্রমাণং হেতুমর্য্যাদাশাস্ত্রেয়ত্তাপ্রমাতৃষু" ইতি চামরঃ।

---

সুখী প্রাণীও, রম্য বস্তু দেখিয়া এবং মধুর শব্দ শুনিয়া যে উৎকণ্ঠিত হয়, সে নিশ্চয়ই, স্বভাবতই স্থায়ী জন্মান্তরের সৌহার্দ্দকে অননুভবপূর্ব্বক মনে মনে স্মরণ করে ॥৯॥

(ভ) (এই বলিয়া, অস্মরণনিবন্ধন উন্মনস্কতা অভিনয় করিতে লাগিলেন।)

(ম) কঞ্চুকী। (নিকটে যাইয়া) মহারাজের জয় হউক, মহা-রাজের জয় হউক। হিমালয়ের নিকটস্থ-বনবাসী, স্ত্রীলোকের সহিত এই মুনিগণ, মহর্ষি কণ্বের কোন সংবাদ লইয়া, উপস্থিত হইয়াছেন। শুনিয়া, মহারাজের যাহা বিবেচনা হয়, তাহা করুন।

---

(১) পর্য্যাকুলত্বিষ্ঠতি।

(২) উপগম্য। জয়তু দেবঃ। হিমবতী গিরেঃ··· কাশ্যপসন্দেশমাদায়।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सविस्मयम्। किं कण्वसन्देशहारिणः सस्त्रीकास्तपस्विनः? (१)। (य)

कञ्चुकी। अथ किम्। (र)

राजा। तेन हि विज्ञाप्यतां मद्वचनादुपाध्यायः सोमरातः, अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति। अहमप्येतांस्तपस्विदर्शनोचितप्रदेशे प्रतिपालयामि (२)। (ल)

---

(य) राजेति। विस्मयेन सस्त्रीका इति श्रवणादाश्चर्य्येण सहेति सविस्मयम्। कण्वसन्देशहारिणः महर्षेः कण्वस्य संवादवाहिनः।

(र) कञ्चुकीति। अथकिमित्येकमेव स्वीकारार्थमव्ययम्। तथा च हारावली—
"अङ्गीकारेऽपि चाथकिम्।"

(ल) राजेति। उपाध्याय आत्मनोऽध्यापकः, सोमाय एनं रायात् देयादिति सोमरातः तदाख्यः पुरोहितः। एक एव जनः अध्यापकः पुरोहितश्चासीदिति बोध्यम्। सोमरात इति सोमोपपदे राधातोः "तिक्कृतौ संज्ञायामाशिषि" इति क्तप्रत्ययः। आश्रमवासिनस्तपस्विनः, श्रौतेन वेदोक्तेन, विधिना विधानेन, सत्कृत्य सम्मान्य। एतान् तपस्विनः। प्रतिपालयामि प्रतीक्षे।
"विधिर्विधाने दैवे च" इत्यमरः।

---

(य) राजा। (विস্ময়ের সহিত) কি কণ্বের বার্ত্তাবাহী স্ত্রীলোকের সহিত তপস্বীরা!।

(র) কঞ্চুকী। হাঁ।

(ল) রাজা। তাহা হইলে আমার বাক্যানুসারে অধ্যাপক সোমরাতকে জানান, বেদবিধানে এই তপোবনবাসীদিগকে সম্মানিত

---

(१) राजा। सादरम्। किं काश्यपसन्देशहारिणः?।

(२) अर्हतीति। अहमपि अत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

কঞ্চুকী। যথাজ্ঞাপয়তি দেবঃ। ইতি নিষ্ক্রান্তঃ।

রাজা। উত্থায়। বেত্রবতি! অগ্নিশরণমার্গমাদেশয়। (ব)

প্রতীহারী। ইদো ইদো এদু দেবো। পরিক্রম্য। এসো অহিণব-সম্মজ্জণরমণীও সণ্ণিহিদহোমধেণু অগ্গিসরণালিন্দো; তা আরোহদু দেবো (১)। (শ)

(শ) ইত ইত এতু দেবঃ। এষঃ অভিনবসম্মার্জ্জনরমণীয়ঃ সন্নিহিতহোমধেনুঃ অগ্নিশরণালিন্দঃ; তদারোহতু দেবঃ।

(ব) রাজেতি। বেত্রং যষ্টিরূপমস্যা অস্তীতি বেত্রবতী প্রতীহারী, তস্যাঃ সম্বোধনম্। অগ্নেৰ্হোমীয়বহ্নেঃ শরণং গৃহং হোমগৃহমিত্যর্থঃ তস্য মার্গং পন্থানম্, আদেশয় প্রদর্শয়। এতেন রাজ্ঞ ইয়ন্তি গৃহাণ্যাসন্, যেন সর্ব্বেষাং প্রবেশপথমপি রাজা ন অনুমন্তুমশক্নোদিতি সূচিতম্।

"শরণং গৃহরক্ষিত্রোঃ" ইত্যমরঃ।

(শ) প্রতীতি। ইত ইতঃ অনেনানেন পথা। পরিক্রম্য হোমগৃহে গমনায় পাদক্ষেপং কৃত্বা। অভিনবেন সদ্যঃকৃতেন সম্মার্জ্জনেন পরিষ্কারেণ রমণীয়ঃ, সন্নিহিতা সংস্থাপিতা হোমধেনুর্হোমীয়ঘৃতসম্পাদিকা ধেনুর্যত্র সঃ, অগ্নিশরণালিন্দঃ হোমগৃহস্য বহির্দ্বারপ্রকোষ্ঠম্।

"প্রঘাণপ্রঘণালিন্দা বহির্দ্বারপ্রকোষ্ঠকে" ইত্যমরঃ।

করিয়া তিনি নিজেই প্রবেশ করান। আমিও, তপস্বীদিগের সঙ্গে সাক্ষাৎ করিবার উপযুক্ত স্থানে যাইয়া, ইঁহাদের প্রতীক্ষা করি।

কঞ্চুকী। মহারাজ যাহা আদেশ করেন। (এই বলিয়া চলিয়া গেলেন।)

(ব) রাজা। (উঠিয়া) বেত্রবতি! হোমগৃহের পথ দেখাও।

(শ) প্রতীহারী। মহারাজ এই এই পথে আসুন। (পাদক্ষেপ

(১) ইদো ইদো দেবো। ইতঃ পরং বহুত্র পুনঃ সম্মজ্জণশব্দোঽস্তি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। आरुह्य परिजनांसावलम्बी तिष्ठन्। वेत्रवति! किमुद्दिश्य तत्रभवता कण्वेन मत्सकाशमृषयः प्रेषिताः? (१)। (ख)

किं तावद्व्रतिनामुपोढ़तपसां विघ्नैस्तपो दूषितं?
धर्म्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम्?।
आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढ़बहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥१०॥

(ख) राजेति। परिजनस्य कस्यचित् परिचारकस्य अंसावलम्बी स्कन्धे स्थापितहस्तः। ऋषीणामुपस्थितिसमये उपवेशनमयुक्तम्, अथ च आरोहणपरिश्रान्तो राजा निरवलम्बनो दीर्घकालं दण्डायमानीभवितुं नार्हतीति परिजनांसावलम्बनम्।

किमिति। विघ्नैरन्तरायभूतै राक्षसादिभिः, उपोढ़ं गृहीतं तपो वैधकर्म्मप्रभृतं कर्म्म यैस्तेषाम्, व्रतिनां चातुर्म्मास्यादिनियमवतां तापसानाम्, तत् तपः, किं तावत् दूषितं किं व्याहतम्। तत्प्रतीकारप्रार्थनया किमागता इति भावः। उत अथवा केनचित्, जनेन धर्म्मारण्यचरेषु तपोवनविहारिषु, प्राणिषु हरिणादिजन्तुषु किम् असच्चेष्टितम्, हत्यादिना अत्याचारः कृतः। तन्निवारणार्थं किमागता इत्याशयः आहोस्वित् अथवा, ममापचरितैरन्यायमत्परिचर्य्याजनैः, वीरुधां लतानाम्, प्रसवः फलम्, विष्टम्भितः पुष्पनाशादिना उत्पत्तौ प्रतिषिद्धः किम्। तत्प्रतिकारार्थमुपस्थिताः किमित्यभिप्रायः। इति अनेन प्रकारेण, आरूढ़ा उपस्थिता बहवः प्रतर्का वितर्का यस्मिन् तत् तादृशम्,

করিয়া) এই হোমগৃহের বহির্দ্বারপ্রকোষ্ঠ, সদ্য প্রক্ষালন করায় এই স্থান মনোহর হইয়াছে এবং ইহার নিকটে হোমধেনু রহিয়াছে। অতএব মহারাজ আরোহণ করুন।

(খ) রাজা। (আরোহণ করিয়া, কোন পরিজনের স্কন্ধধারণপূর্ব্বক অবস্থান করতঃ) বেত্রবতি! পূজনীয় মহর্ষি কণ্ব, কি মনে করিয়া আমার নিকট তপস্বীদিগকে পাঠাইলেন।

(১) भगवता काश्यपेन प्रेषिताः स्युः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रती। देवस्स भुअदण्डणिव्वुदे अस्समपदे कुदो एवं; किन्तु सुचरिताहिणन्दिणो इसीओ देवं सभाजइदुं आअदे त्ति तक्केमि (१)। (स)

(स) देवस्य भुजदण्डनिर्वृते आश्रमपदे कुत एवम्; किन्तु सुचरिताभिनन्दिन ऋषयः देवं सभाजयितुमागता इति तर्कयामि।

---

मे मम मनः, अपरिच्छेदेन एकतरनिश्चयाभावेन आकुलं तन्निश्चयार्थं विह्वलं जातमिति शेषः।

अत्र अपरिच्छेदाकुलत्वं प्रति आरूढबहुप्रतर्कपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

"तपसी वै धर्म्मे शस्त्ररूपत्वम्" इति प्रायश्चित्ततत्त्वे स्मार्त्तः। "प्राक्षु तपादे फले पुंसे प्रसवो गर्भमोचने" इति "लता प्रतानिनी वीरुत्" इति चामरः। "विष्टम्भः प्रतिबन्धे स्यात् प्रमर्दे चामरस्य च" इति मेदिनी।

शार्दूलविक्रीड़ितं वृत्तम् ॥१०॥

(घ) प्रतीति। भुजदण्डेन निर्वृते सुस्थीकृते, आश्रमपदे तपोवने, एवं म-वितर्कितरूपमसदाचरणम्, कुतो भवितुमर्हति कुतोऽपि नेत्यर्थः। सुचरितेन देवस्य सद्व्यवहारेण अभिनन्दन्ति सन्तुष्यन्ति ये ते। देवं राजानं भवन्तम्, सभाजयितुं प्रीणयितुम्।

---

তপঃপ্রবৃত্ত ব্রতীদিগের তপস্থা, বিঘ্নে দূষিত হইয়াছে কি? অথবা তপোবনচারী প্রাণিগণের প্রতি কেহ অন্যায় আচরণ করিয়াছে? কিংবা যাহারা আমার পরিচয় পায় নাই, এইরূপ কোন লোকেরা তপোবনের লতার ফল নষ্ট করিয়াছে, আমার মনে এইরূপ বহুতর তর্ক উপস্থিত হইতেছে, কিন্তু নির্ণয় করিতে না পারায় আমার মন আকুল হইয়াছে ॥১০॥

---

(१) प्रतीहारी। सुचरिअणन्दिणो इसीओ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः प्रविशतो गौतमीसहितौ शकुन्तलामादाय कण्वशिष्यौ पुरतश्चैषां पुरोहित-कञ्चुकिनौ (१)। (ङ)

कञ्चुकी। इत इतो भवन्तः। (च)

शाङ्गरवः। सखे! शारद्वत!

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव (२) ॥११॥

(ङ) तत इति। पुरतः अग्रतः स्त्रीपुंसयोः पुंसःप्राधान्यविवक्षया एषामित्यस्य पुंस्त्वम्।

(च) कञ्चुकीति। इत इतः अनेनानेन पथा, भवन्त आगच्छन्तु इति शेषः। अत्रापि उक्तरीत्या भवन्त इत्यस्य पुंस्त्वम्।

महाभाग इति। असौ महान् भागो भाग्यं यस्य स महाभागः, अतएव नरपतिः राजा दुष्मन्तः, कामं यथेष्टमेव, न भिन्ना न लङ्घिता स्थितिर्लोकमर्य्यादा येन स

(গ) প্রতীহারী। মহারাজের বাহুবলে সুস্থীকৃত তপোবনে এরূপ হইবে কি করিয়া; তবে আমি মনে করি মহারাজের সদ্ব্যবহারে আনন্দিত হইয়া মুনিগণ মহারাজের সংবর্দ্ধনা করিবার জন্য আসিয়াছেন।

(ঙ) (তদনন্তর শকুন্তলাকে লইয়া, গৌতমীর সঙ্গে কণ্বশিষ্যদ্বয়ের এবং ইহাদের অগ্রে অগ্রে পুরোহিত ও কঞ্চুকীর প্রবেশ।)

(ক) কঞ্চুকী। আপনারা এই এই পথে আসুন।

শার্ঙ্গরব। সখে! শারদ্বত!

(१) ततः प्रविशन्ति गौतमीसहिताः शकुन्तलां पुरस्कृत्य मुनयः पुरतश्चैषां कञ्चुकी पुरोहितश्च। (२) अभिन्नस्थितिरस्तौ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शारद्वतः। शार्ङ्गरव! स्थाने खलु पुरप्रवेशात्तवेदृशः संवेगः। अहन्तु (१) (क)

ताहृशः। अतएवास्मादस्माकं नास्ति भयमिति भावः। तथा वर्णानां ब्राह्मणादीनां मध्ये, कश्चिदपकृष्टोऽपि उत्कृष्टे का कथा, जात्या कर्म्मणा वा निकृष्टोऽपि जनः, अपथम् असन्मार्गं मर्य्यादालङ्घनादिकम्, न भजते राजभयान्नाश्रयति। तेन प्रजाभ्यः कर्म्मचारिभ्यो वापि नास्ति भयमित्याशयः। तथापि राजप्रजयोरीदृक्साधुत्वे सत्यपि, अहम् सततं परिचितमभ्यस्तं विविक्तं विजनस्थानं तत्रावस्थानं येन तादृशेन मनसा, इदं जनाकीर्णं लोकपूर्णम्, गृहं राजभवनम्, हुतवहेन अग्निना परीतं व्याप्तमिव, मन्ये सम्भावयामि। इदन्त्वमङ्गलसूचकमित्यभिप्रायः।

अत्र हेतुं विनापि राजगृहस्य हुतवहपरीतत्वप्रकारकमननरूपकार्य्योत्पत्तेः हि... विभावना, उत्त प्रथमार्द्धप्रतिपादिते राजप्रजयोः साधुत्वरूपे कारणे सत्यपि ... कार्य्यानुत्पत्तेर्विशेषोक्तिरित्युभयोः सन्देहसङ्करः, अपकृष्टोऽपीत्यत्र अर्थापत्तिः, हुतवह-परीतमिवेति वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा च इत्येतेषां गुणप्रधानभावेनावस्थानाभावात् समुदायेऽपि पुनः सङ्करः। इदं राजगृहं हुतवहपरीतं गृहमिव इति ... तु श्रौतीपमेति बोध्यम्। परिचितविविक्तेन मनसेति उक्तोत्प्रेक्षाया निमित्त... नापुष्टार्थत्वदोषः।

"भाग्यो रूपार्द्धके भागं कदेशयोः" इति हेमचन्द्रः। "संस्था तु मर्य्यादा धारणा स्थितिः" इत्यमरः।

शिखरिणी वृत्तम् ॥११॥

মহাভাগ্যবান্ এই রাজা, ইচ্ছানুসারে কাহারও মর্য্যাদা নষ্ট করেন না এবং ইহার কর্ম্মচারী বা প্রজা চারি বর্ণের মধ্যে কোন নি... লোকও অসৎপথ আশ্রয় করে না; তথাপি আমি, চিরকাল নি... স্থানে থাকা অভ্যস্ত বলিয়া মনে মনে, এই রাজবাড়ীটাকে যেন জনাকী... এবং অগ্নিবেষ্টিত বলিয়া ধারণা করিতেছি ॥১১॥

(१) शारद्वतः। जाने भवान् पुरप्रवेशादित्थम्भूतः संवृत्तः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभ्यक्तमिव स्नातः, शुचिरशुचिमिव, प्रबुद्ध इव सुप्तम्।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥१२॥

(क) शारीति। सर्वेग उद्वेगः, स्थाने खलु युक्त एव, ममाप्युद्वेगाविर्भावात् "प्रायेण समानाः सहचरा भवन्ति" इति न्यायादिति भावः। अहमित्यस्य श्लोकस्थस्नात इत्यादिभिः प्रथमान्तैः पदैः सहान्वयः।

"युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः।

अभ्यक्तमिति। स्नातः कृतस्नानः अहम्, इह राजधान्याम्, सुखसङ्गिनं स्नानादेव प्राप्तशुद्धिसुखं जनम्, अभ्यक्तं तैलाक्तदेहमिव अवैमि अवगच्छामि; यात्रादिप्रथमावस्थायां तैलाक्तदेहदर्शनममङ्गलसूचकमिति कवेरभिप्रायः। शुचिः हरिस्मरणादिना पवित्रः अहम्, इह सुखसङ्गिनं हरिस्मरणादिनैव पवित्रताशालिनं जनम्, अशुचिमिव अवैमि, चाण्डालाद्यशुचिजनो हि अन्याय्यकार्य्यस्य प्रतिवादं कर्त्तुं नार्हतीति कवेराशयः। प्रबुद्धो जागरितः अहम्, इह सुखसङ्गिनं जागरितत्वेनानुभूयमानसुखम्, जनम्, सुप्तं निद्रितमिव अवैमि; सुप्तो हि जनो न्याय्यान्याय्यं विवेक्तुं न शक्नोतीति कवेर्भावः। तथा स्वैरा स्वच्छन्दा स्वेच्छाप्रवृत्ता गतिर्यस्य स तादृशोऽहम्, इह सुखसङ्गिनं मुक्तभावेनावस्थानात् सुखासक्तमपि जनम्, बद्धमिव कुत्रचित् संयतमिव, अवैमि; गत्वा हस्तादिभिरपि दुष्कार्य्यस्य बाधाप्रदानस्याकरिष्यमाणत्वादिति कवेराशयः। एतेन श्लोकद्वयेन वक्ष्यमाणशकुन्तलावाक्येन च कविना दुष्मन्तेन करिष्यमाणं शकुन्तलाप्रत्याख्यानरूपममङ्गलं स्वनाटकपाठकवृन्देषु सूचितम्। तत्र चामी अभ्यक्तादिवत् सम्भाव्यमाना राजधानीस्था जना एव सूचकाः। अहमित्यस्य विशेषणतया स्नात इत्यादिपदोपादानन्तु अभ्यक्तादिजनैः सह वक्तुः सम्पूर्णवैपरीत्यसूचनार्थम्। तेन च व्याख्यान्तराणि चिन्तनीयानि, अस्य दुर्निमित्तसूचनप्रकरणत्वात् "दुर्निमित्तमभिनीय" इत्यनुपदमेव स्पष्टं तदभिधानात् तत्तद्व्याख्यान्तरेषु तु तत्सूचनासम्भवादिति सुधीभिर्विवेचनीयम्।

(क) শারদ্বত। শার্ঙ্গরব! রাজবাড়ীতে প্রবেশ করায় তোমার এরূপ উদ্বেগ হওয়া সঙ্গত বটে। আমি কিন্তু—



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरोधाः । अतएव भवद्विधा महान्तः (१) । (ख)

शकु । दुर्निमित्तमभिनीय । अम्मो ! किं मे वामेदरं णअणं विप्फुरदि (२) । (ग)

अत्र अशुचिमिवेति गुणोत्प्रेक्षा, अन्यास्तिस्रः क्रियोत्प्रेक्षाः, तथा पश्येत्येकया क्रियया अभ्यक्तमित्यादीनां चतुर्णां कर्म्मतयाभिसम्बन्धात्तुल्ययोगिता ; इत्थं तेषां मिथो निरपेक्षतया संसृष्टिः ।

अभ्यङ्गमाह मुग्धितत्त्वधृतमायुर्वेदवचनम्—

"मूर्द्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम् ।
स्रोतोभिस्तर्पयेद्देहं अभ्यङ्गः स उदाहृतः ॥"

"मन्दस्वच्छन्दयोः स्वैरम्" इत्यमरः । आर्य्या जातिः ॥१२॥

(ख) पुरोधा इति । अतएव ईदृशं भाविनं विषयं मन्तुं शक्तादेव, सर्वतो मुनयः, महान्तो मानवान्तरेभ्यः प्रधानाः ; अपरे स्तदशक्तत्वादिति भावः ।

(ग) शकु इति । दुर्निमित्तमशुभलक्षणम्, अभिनीय दक्षिणनयनस्पन्देन सूचयित्वा । वामेतरत् दक्षिणम् । विस्फुरति विशेषेण स्पन्दते । स्त्रीणां दक्षिणाक्षिस्पन्दनं बन्धुविच्छेदं सूचयति । यथा गर्गः—

"दक्षिणचक्षुःस्पन्दनं बन्धुदर्शनमर्थलाभं वा ; वामचक्षुःस्पन्दनं बन्धुविच्छेदं धनहानिं वा ।" सूचयतीति पूर्वेण सम्बन्धः । परश्चाह—

"स्त्रीणामेतत् फलमविकलं दक्षिणे वैपरीत्यम् ।"

अतएव शकुन्तलाया बन्धुना पत्या सह भावी दीर्घविच्छेदः ।

স্নাত হইয়া এই সুখী লোকগুলিকে যেন তৈলাভ্যক্তের ন্যায়, পবিত্র হইয়া এই লোকগুলিকে যেন অপবিত্রের ন্যায়, জাগরিত হইয়া এই লোকগুলিকে যেন নিদ্রিতের ন্যায় এবং স্বেচ্ছাগামী হইয়া এই লোকগুলিকে যেন বদ্ধের ন্যায় মনে করিতেছি ॥১২॥

(१) क्वचिदयं पाठो नास्ति । (२) निमित्तं सूचयित्वा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गौतमी। जादे! पड़िहदं अमङ्गलं, सुहाइं दे होन्तु (१)। (घ)

इति परिक्रामन्ति (२)। (ङ)

पुरोधाः (३)। राजानं निर्द्दिश्य। भो भोस्तपस्विनः! असावत्र-भवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयति वः, पश्यतैनम्। (च)

---

(ग) अहो! किं मे वामेतरत् नयनं विस्फुरति।

(घ) जाते! प्रतिहतममङ्गलम्, सुखानि ते भवन्तु।

---

(घ) गौतमीति। हे जाते! वत्से! अमङ्गलं दक्षिणाक्षिस्पन्दनसूचित-मशुभम्, प्रतिहतं निवृत्तम्, भवत्विति शेषः। प्रत्युत सुखानि मङ्गलरूपाणीत्याशयः भवन्त्वित्याशीर्वादः।

(ङ) इतीति। इति एतदुक्त्वाः परमित्यर्थः, परिक्रामन्ति राजान्तिकं गन्तुं सर्वे पादक्षेपं कुर्वन्ति।

(च) पुरोधा इति। निर्द्दिश्य अङ्गुल्या दर्शयित्वा। अत्रभवान् राजत्वेन सर्वमान्यः, वर्णा ब्राह्मणादयः आश्रमाश्च ब्रह्मचर्य्यादयस्तेषामुभयेषामपि, रक्षिता यथा-

---

(ঘ) পুরোহিত। এইজন্যই আপনারা প্রধান।

(গ) শকুন্তলা। (দুর্লক্ষণ অভিনয় করিয়া) ও মা! আমার দক্ষিণ নয়ন স্পন্দিত হইতেছে কেন?।

(ঘ) গৌতমী। বৎসে! তোমার অমঙ্গল বিনষ্ট এবং নানাবিধ সুখ উৎপন্ন হউক।

(ঙ) (ইহার পর সকলে পাদক্ষেপ করিতে লাগিলেন।)

---

(१) सुखानि ते भवन्तु कुलदेवतादयो वितरन्तु।

(२) परिक्रामति। (३) पुरोहितः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार्ङ्गरवः । भो महात्मन् ! काममेतदभिनन्दनीयम् ; तथापि वयमत्र मध्यस्थाः (१) । (छ)

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥१३॥

---

नियमं पालयिता राजा दुष्मन्त इत्यर्थः, प्रागेव भवतामुपस्थितेः पूर्वमेव, मुक्तं त्यक्तम् आसनं येन सः, वो युष्मान्, प्रतिपालयति प्रतीक्षते । एनं राजानम् ।

(छ) शार्ङ्गरवेति । एतत् राज्ञ आचरणम् अस्माकमुपस्थितेः प्रागेव गात्रोत्थानमित्यर्थः, कामं यथेष्टमेव, अभिनन्दनीयं प्रशंसनीयम् ; तथापि अभिनन्दनीयत्वेऽपि अत्राभिनन्दने, वयं मध्यस्था उदासीनाः प्रवृत्तिविहीना इत्यर्थः, राज्ञ एतदनौद्धत्यस्य स्वाभाविकत्वात् वह्नेरुष्णताया इव स्वाभाविकधर्म्मस्य प्रशंसानर्हत्वादिति भावः ।

राज्ञो दुष्मन्तस्यैतन्नम्रत्वमपि स्वाभाविकमेवेति प्रतिपादयितुमाह भवन्तीति । तरवो वृक्षाः, फलानामुद्गमैः उत्पत्तिभिः, नम्रास्तत्फलभरेण नमनशीला भवन्ति ; घना मेघाः, नवाम्बुभिर्नूतनजलसञ्चयैः दूरविलम्बिनः अत्यन्तलम्बिता उच्चाकाशादतीवावनता इत्यर्थः, भवन्ति ; तथा सत्पुरुषाः, समृद्धिभिर्धनादिसम्पद्भिः, अनुद्धता औद्धत्येन गर्वेण हीना नम्रा इति तात्पर्य्यम्, भवन्ति । तथा च परोपकारिणां जनानाम्, एष

---

(চ) পুরোহিত। (রাজাকে দেখিয়া) তপস্বিগণ! বর্ণ ও আশ্রমসমূহের রক্ষক মাননীয় মহারাজ, আপনাদের আসিবার পূর্ব্বেই আসন পরিত্যাগ করিয়া, আপনাদের প্রতীক্ষা করিতেছেন। ইঁহাকে দর্শন করুন।

(ছ) শাঙ্গরব। মহাত্মন্! রাজার এই ব্যবহারের যথেষ্ট প্রশংসা করা উচিত; তথাপি আমরা এবিষয়ে উদাসীন। (কারণ,)

---

(१) शार्ङ्गरवः । भो महाप्राज्ञ ! ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रती। देव! पसण्णमुहा इसीओ दीसन्ति (१)। (ज)
राजा। शकुन्तलां निर्वर्ण्य। अये! अत्र—(२) (झ)

(ज) देव! प्रसन्नमुखा ऋषयो दृश्यन्ते।

---

एव नम्रत्वरूप एव स्वभावः। अतएव तरुघनवत् सर्वथा परोपकारिणः सत्पुरुष-विशेषस्य राज्ञो दुष्मन्तस्य च एतन्नम्रत्वं स्वभाव एवेति भावः।

अतएवात्र अप्रस्तुतात् सत्पुरुषसामान्यात् प्रस्तुतस्य दुष्मन्तरूपसत्पुरुषविशेषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, विशेषपर्य्यवसितस्य च तस्य चतुर्थचरणार्थरूपेण सामान्येन समर्थनादर्थान्तरन्यासः; अनयोः प्रथममङ्गाङ्गिभावेन सङ्करः; परञ्च अप्रस्तुतानामेव तरु घन सत्पुरुषाणां भवन्तीतिक्रियारूपैकधर्म्माभिसम्बन्धात् तुल्ययोगिता, तथा नम्रत्वरूपैक-धर्म्मस्यैव नम्र-दूरविलम्बानुद्धतपदैः पृथक् निर्द्देशात् "विमल एव रविर्विशदः शशी" इत्यादिदर्पणोदाहरणवत् मालारूपा प्रतिवस्तूपमा; इति प्रागुक्तसङ्करेण सह समुदाये परस्परनिरपेक्षतया संसृष्टिः। संसृष्टिसङ्करयोरपि पुनः संसृष्टिसङ्करौ सम्भवत इति प्रदर्शितमस्माभिः साहित्यदर्पणटीकायां तत्प्रकरणे।

वंशस्थविलं वृत्तम् ॥१२॥

(ज) प्रतीति। प्रसन्नम् उद्वेगेनाकलुषितं मुखं येषां ते। अतएव "किं तावद्व्रतिनाम्" इत्यादिना भवता यद्वयत्तर्कितं तस्य न किञ्चिदपीति भावः।

(झ) राजेति। निर्वर्ण्य दृष्ट्वा। अयि इति सम्भ्रमे। अत्र स्थाने। "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः।

---

ফল জন্মিলে, বৃক্ষ অবনত হয় এবং নূতন জল সঞ্চিত হইলে, মেঘ অত্যন্ত ঝুলিয়া পড়ে; এইরূপ সৎপুরুষগণ সমৃদ্ধি হইলে নম্রই হইয়া থাকেন। কারণ, পরোপকারীদিগের স্বভাবই এই ॥১৩॥

(জ) প্রতীহারী। মহারাজ! মুনিগণকে প্রসন্নবদন দেখা যাইতেছে।

(ঝ) রাজা। (শকুন্তলাকে দেখিয়া) ওহে! এখানে—

---

(१) देव! पसण्णमुहवण्णा दीसन्ति। जाणामि वीसद्धकज्जाणो इसीणो।

(२) राजा। शकुन्तलां दृष्ट्वा। अथावभवती।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केयमवगुण्ठनवती (१) नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥१४॥

प्रती। भट्टा! कुदूहलगब्भो पड़िहदो ण मे तक्को पसरदि। दंसणीआ उण से आकिदी लक्खीअदि (२)। (ज)

केयमिति। पाण्डूनि पक्वतया पाण्डुवर्णानि यानि पत्राणि तेषां मध्ये। एतेन तपोधनानामपि परिणतवयस्कतया पाण्डुत्वं सूचितम्। किसलयं पल्लवमिव; तपोधनानां स्त्रीणां मध्ये, अवगुण्ठनवती वसनेन मस्तकाच्छादनशालिनी, नातिपरिस्फुटं वसनेन गात्रावरणादेव नातिस्पष्टीभूतं शरीरस्य लावण्यं यस्याः सा तादृशी, इयं नारी का?।

अत्र श्रौतोपमालङ्कारः।

"मुक्ताफलस्य च्छायायां तरलत्वमिवान्तरा।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युज्ज्वलनीलमणिः।

ये तु ब्रुवते "भारते यवनराजत्वप्रवृत्तेः पूर्वमवगुण्ठनरीतिर्नासीत्; परञ्च लम्पट-यवनपुरुषभयादार्यरमणीनामवरोधप्रथा अवगुण्ठनप्रथा च प्रवृत्ते"ति तेषामयमेव श्लोको मुखपिधाता। न च कालिदासकाल एवैषा रीतिरुत्पन्नेत्यपि वक्तव्यम्, तदानीमुत्पत्तौ कारणाभावात् ततो बहुपूर्वमपि स्मृतिशास्त्रे अवगुण्ठनप्रस्तावदर्शनात्। यथा तिथितत्त्वे चाङ्गिराः—

"श्वशुरस्याग्रतो यस्माच्छिरःप्रच्छादनक्रिया।
पुर्वदर्भेण सा कार्य्या मातुरभ्युदयार्थिभिः ॥"

अन्तःपुरिकादिशब्ददर्शनादेव अवरोधप्रथापि चिरन्तनीति मन्तव्यम्।

आर्य्या जातिः ॥१४॥

এই অবগুণ্ঠনবতী রমণী কে? ইহার শরীরের লাবণ্য অতি-পরিস্ফুট হইতেছে না; তপস্বিগণের মধ্যে ইহাকে, পাণ্ডুবর্ণ পত্রের মধ্যে নবপল্লবের ন্যায় দেখা যাইতেছে ॥১৪॥

(१) काखिदवगुण्ठनवती।

(२) प्रतीहारी। देव! प्रहितो।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। भवतु, अनिर्वर्ण्यं खलु परकलत्रम् (१)। (ट)

शकु। उरसि हस्तं दत्त्वा स्वगतम्। हिअअ! किं एव्वं वेवसि। अज्जउत्तस्स तादिसभावाणुबन्धं सुमरिअ धीरत्तणं दाव अवलम्बस्स (२)। (ठ)

(ञ) भर्त्तः! कुतूहलगर्भः प्रतिहतो न मे तर्कः प्रसरति। दर्शनीया पुनरस्या आकृतिर्लक्ष्यते।

(ठ) हृदय! किमेवं वेपसे? आर्य्यपुत्रस्य तादृशभावानुबन्धं स्मृत्वा धीरत्वं तावदवलम्बस्व।

(ञ) प्रतीति। भर्त्तः! स्वामिन्! कुतूहलमकस्मात् रमणीदर्शनजनितं कौतुकं गर्भे अभ्यन्तरे यस्य स तादृशः, मे मम तर्को विचारः इयं का भवितुमर्हतीत्यनुसन्धानम्, प्रतिहतः कुतूहलेनैव निवारितः सन्, न प्रसरति न प्रसारं लभते न निरूपयितुमर्हतीत्यर्थः। अतएव भवत उत्तरं दातुं न शक्नोमीति भावः। पुनः किन्तु। दर्शनीया सुदृश्येत्यर्थः, अतो नेयं सामान्येत्याशयः।

(ट) राजेति। भवतु इयं नारी या काचिद्भवत्वित्यर्थः। परकलत्रं परकीयस्त्री, अनिर्वर्ण्यं खलु अनवलोकनीयमेव; "परदारान् न वीक्षेत" इति विष्णुसूत्रादिति भावः।

(ठ) शकु इति। यो यस्मै सान्त्वनां ददाति, सति सम्भवे स तं स्पृष्ट्वैव ददातीति लोकव्यवहारादाह-उरसीत्यादि। उरसि वक्षसि। वेपसे कम्पसे। आर्य्यः पूज्यः

(ঞ) প্রতীহারী। মহারাজ! কৌতুকগর্ভ আমার বিচারশক্তি, প্রতিহত হইয়া কিছু নিরূপণ করিতে পারিতেছে না। কিন্তু ইহার আকৃতি মনোহর বলিয়া লক্ষ্য করিতেছি।

(ট) রাজা। হউক, পরস্ত্রী দেখা উচিত নহে।

(१) अनिर्वर्णनीयं परकलत्रम्।

(२) शकुन्तला। हस्तमुरसि कृत्वा आत्मगतम्। अज्जउत्तस्स भावं ओहारिअ धीरं दाव होहि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरोधाः। पुरो गत्वा। स्वस्ति देवाय। देव। एते खलु विधिवदर्च्चितास्तपस्विनः; कश्चिदेतेषु उपाध्यायसन्देशोऽस्ति, तं देवः श्रोतुमर्हति (१)। (ड)

राजा। अवहितोऽस्मि। (ढ)

---

श्वशुर इति तात्पर्य्यम्, तस्य पुत्री भर्त्ता, तस्य दुष्मन्तस्येत्यर्थः तादृशभावानुबन्धं पूर्वानुभूतमदनुरागप्रवाहम्। धीरत्वं धैर्य्यम्। तथा च तादृशाविच्छन्नानुरागकारी जनो विना विशेषहेतुं न कदाचिद्विस्मर्त्तुं विरक्तुं वार्हतीति न किञ्चित् सन्देहकारणमस्तीति भावः।

"भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु। क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु रत्यादौ" इति मेदिनी।

(ड) पुरोधा इति। पुरस्तपस्विनामग्रतः। यो यं किञ्चिद्वदति, स तदभिमुखः सन्नेव वदतीति लोकव्यवहारात् राजाभिमुखीभवनार्थं पुरो गत्वेत्युक्तम्। स्वस्ति मङ्गलम्, अस्त्विति शेषः। विधिवत् यथाशास्त्रम्, अर्च्चिताः पाद्यादिभिः सत्कृताः। अतएवैषां सत्कारावशेषो नास्तीत्याशयः। एतेषु तपस्विषु, कश्चित् उपाध्यायस्य एषामेवाध्यापकस्य कण्वस्य सन्देशो वाचिकम्।

"स्वस्त्याशीःक्षेमपुण्यादौ" इत्यमरः।

(ढ) राजेति। अवहितः तं सन्देशं श्रोतुं कृतमनोयोगः।

---

(ठ) শকুন্তলা। (বুকে হাত দিয়া স্বগত) হৃদয়! কেন তুমি এরূপ কাঁপিতেছ? আর্য্যপুত্রের সেইরূপ অবিচ্ছিন্ন অনুরাগ স্মরণ করিয়া ধৈর্য্য অবলম্বন কর।

(ড) পুরোহিত। (সম্মুখে যাইয়া) মহারাজের মঙ্গল হউক। মহারাজ! যথাবিধানে এই তপস্বিগণের পূজা করা হইয়াছে; ইঁহাদের অধ্যাপকের কোন খবর আছে; তাহা আপনি শুনিতে পারেন।

(ঢ) রাজা। মনোযোগী হইলাম।

---

(१) पुरोहितः। एते विधिवत्। कश्चिदेषामुपाध्यायसन्देशः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिष्यौ । हस्तमुद्यम्य । भो राजन् ! विजयतां भवान् (१) । (ण)

राजा । सर्वानभिवादये वः (२) । (त)

शिष्यौ । स्वस्ति देवाय (३) । (थ)

राजा । अपि निर्विघ्नं तपः ? (४) । (द)

शिष्यौ । कुतो धर्म्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्म्मांशौ कथमाविर्भविष्यति ॥१५॥

(ण) शिष्याविति । आशीर्वादे हस्तोत्तोलनव्यवहारादाह हस्तमुद्यम्येति । उद्यम्य उत्तोल्य ।

(त) राजेति । वो युष्मान्, अभिवादये नमस्करोमि ।

(थ) शिष्याविति । स्वस्ति मङ्गलम्, भवत्विति शेषः ।

(द) राजेति । अपिशब्दः प्रश्ने । युष्माकं तपो निर्विघ्नं सम्पद्यते किमित्यर्थः ।

कुत इति । त्वयि रक्षितरि परिपालयितरि सति, सतां सज्जनानाम्, धर्म्मक्रियाणां यज्ञादीनाम्, विघ्नो व्याघातः कुतो भवितुमर्हतीति शेषः कुतोऽपि नेति तात्पर्य्यम् । तथा च घर्म्मा उष्णा अंशवः किरणा यस्य तस्मिन् सूर्य्ये, तपति जगत् सन्तापयति सम्पूर्ण-मुदयमाने सति, तमः अन्धकारः, कथमाविर्भविष्यति, अपि तु कथमपि नेत्यर्थः । अतो निर्विघ्नमेवास्माकं तप इत्याशयः ।

अत्र यथा सूर्य्ये तपति सति नान्धकाराविर्भावः, तथा त्वयि रक्षितरि सत्यपि न

(ণ) শিষ্যদ্বয় । (হস্ত উত্তোলন করিয়া) মহারাজ! আপনার জয় হউক ।

(ত) রাজা । আপনাদের সকলকেই নমস্কার করি ।

(থ) শিষ্যদ্বয় । আপনার মঙ্গল হউক ।

(দ) রাজা । আপনাদের তপস্যার কোন বিঘ্ন নাই ত ? ।

(१) ऋषयः । विजयस्व राजन् ! । (२) अभिवादये ।

(३) ऋषयः । दृष्टेन युज्यस्व । (४) अपि निर्विघ्नतपसो मुनयः ! ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । आत्मगतम् । सर्वथा अर्थवान् खलु मे राजशब्दः । प्रकाशम् । तत्रभवान् कुशली कण्वः ? (१) । (ध)

शार्ङ्ग । राजन् ! स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वकमिदमाह । (न)

---

धर्मक्रियाविघ्न इति प्रतिबिम्बनात् दृष्टान्तोऽलङ्कारः, पूर्वार्द्धपरार्द्धयोरर्थापत्तिश्च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः । उदाहरणं नाम नाट्यलक्षणञ्च । यथा दर्पणे—

"यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम् ॥"

"उष्णेऽपि घर्म्मः" इत्यमरः ॥१५॥

(ध) राजेति । राजशब्दः राजेत्यानुपूर्व्वीको वर्णसमूहः, सर्व्वथा अर्थवान् सर्व्वेणैव प्रकारेण सार्थकः । तथा च रञ्जयति प्रजा इति राजा । अतएवोक्तं रघुवंशे—"राजा प्रकृतिरञ्जनात्" इति । एवञ्च मयैव परिपालनेन अनुरञ्जिताः खल्वेताः प्रजाः सन्तुष्यन्त्य एव एवं ब्रुवन्तीत्याशयः । तत्रभवान् महर्षित्वेन पूज्यः, कुशली मङ्गलवानिति काक्वा प्रश्नो व्यज्यते ।

(न) शार्ङ्गेति । सिद्धिमन्तो योगेनाणिमादिसिद्धाः पुरुषाः, स्वाधीनम् आत्मायत्तमेव कुशलं येषां ते तादृशाः । तथा च योगसिद्धाः पुरुषाः स्वेच्छयैव कुशलमकुशलं वा कर्त्तुमर्हन्ति । तेन च कुशलस्येष्टत्वात् योगसिद्धः कण्वः कुशली एवेति

---

শিষ্যদ্বয়। আপনি রক্ষক থাকিতে, সাধুজনের ধর্ম্মকার্য্যের বিঘ্ন হইবে কেন! সূর্য্য সম্পূর্ণ উদয় পাইলে অন্ধকার আবির্ভূত হইবে কিরূপে ? ॥১৫॥

(ধ) রাজা। (স্বগত) আমার রাজা-নাম, সর্ব্বপ্রকারেই সার্থক। (প্রকাশ্যে) পূজনীয় মহর্ষি কণ্বের মঙ্গল ত ?।

---

(१) राजा । अर्थवान् खलु मे राजशब्दः । अथ भगवान् लोकानुग्रहाय कुशली काश्यपः ? ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। किमाज्ञापयति भगवान्?। (प)

शार्ङ्ग। यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपयेमे (१); तन्मया प्रीतिमता युवयोरनुज्ञातम्। कुतः—(फ)

भावः। स कण्वः। अनामयप्रश्नपूर्वकं तव किमारोग्यं वर्त्तते इति जिज्ञासापूर्वकम्, इदं वक्ष्यमाणम्।

ब्राह्मणं प्रति कुशलप्रश्नः, क्षत्रियं प्रति चानामयप्रश्नः शास्त्रीयः। यथा मनुः—

"ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च॥"

अतएव हि पूर्वं कण्वं ब्राह्मणं प्रति कुशलीति राज्ञः प्रश्नः।

(प) राजेति। किमाह इति वक्तव्ये किमाज्ञापयतीत्यभिधानेन महागौरवं द्योतितम्।

(फ) शार्ङ्गेति। मिथः समयात् 'त्वं मे भार्य्या' 'त्वं मे भर्त्ता' इति परस्परं शपथं कृत्वेत्यर्थः, "गान्धर्वः समयान्मिथः" इति याज्ञवल्क्यवचनात्। उपयेमे परिणीतवान्। प्रीतिमता परस्परयोग्यत्वात् सन्तोषवता मया युवयोस्तत् उपयमनम्, अनुज्ञातम् अनुमोदितम्।

"समयः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः।

उपयेमे इति "उपाद्यमः स्वकरणे" इति रुचादित्वादात्मनेपदम्।

ननु भवदभिप्रायमपरिज्ञाय विवाहकरणात् अप्रीतिरस्तु कथं भवतः प्रीतिरित्याह कुत इति।

---

(न) শার্ঙ্গরব। মহারাজ! সিদ্ধপুরুষদিগের মঙ্গল, তাঁহাদের নিজেদের অধীন। তিনি আরোগ্য জিজ্ঞাসা করিয়া, আপনাকে এই কথা বলিয়াছেন।

(প) রাজা। ভগবান্ কণ্ব কি আদেশ করিয়াছেন?।

---

(१) उपायंस्त।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वमर्हतामग्रसरः स्मृतोऽसि नः (१)
शकुन्तला मूर्त्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥१६॥

त्वमिति । त्वम्, अर्हतां प्रशंसाभाजनानां जनानाम्, अग्रसरः अग्रवर्त्ती प्रधान इति यावत्, नः अस्माकं स्मृतः सम्मतः असि ; तथा शकुन्तला च, मूर्त्तिमती देहधारिणी, सत्क्रिया यागादिप्रशस्तक्रियेव नः स्मृतेत्यन्वयः । अत उभयोस्तुल्यगुणत्वमित्याशयः । तुल्या गुणाः शौचाचारादयो यस्य तत् तादृशम्, वधूर्नवोढा च वरो वोढा चेति वधूवरम्, समानयन् एकीकुर्वन् विवाहेन "अस्थिभिरस्थीनि" इत्यादिश्रुतेः एकशरीरीकुर्वन्, प्रजापतिर्विधाता, चिरस्य चिरकालागतम्, वाच्यं निन्दाम् 'अयोग्ययोजी विधाता' इति लोकापवादमित्यर्थः, न गतः अत न प्राप्तः, तुल्यगुणत्वेन परस्परयोग्यत्वादिति भावः ।

अत्र वरकन्ययोरानुरूप्येण श्लाघाप्रतीतेः समं नामालङ्कारः, वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा पदार्थहेतुकं काव्यलिङ्गञ्च, इत्येतेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः ।

अर्हतामिति "अर्हः प्रशंसायाम्" इत्यर्हतेः शतृङ् । स्मृत इति "मतिबुद्धिपूजार्थेभ्यः" इति मत्यर्थात् स्मरतेः कर्त्तरि क्तः । न इति "क्तस्य च वर्त्तमाने" ... "वर्त्तमानाधिकरणयोः सेवे" इति कर्त्तरि षष्ठी । समानं कुर्वन्निति समानयन् समानशब्दात् "इन् कारितं धात्वर्थे" इतीन् । ननु "अन्तर्निविष्टकर्म्मकधातोरकर्म्मकत्वम्" इत्युक्तेः समानयन्नित्यस्य अन्तर्निविष्टकर्म्मकतया वधूवरमित्यस्य कथं कर्म्मत्वमिति चेन्न तत्र शासने कर्म्मपदस्य प्राधान्येन विधेयकर्म्मपरत्वात् उद्देश्यकर्म्मस्थितौ बाधकाभावात् अत्र तु वधूवरमित्यस्य उद्देश्यकर्म्मत्वात् । अन्यत्राप्येवं प्रयोगो दृश्यते । यथा

(क) शार्ङ्गरव । परस्पर शपथ करिया, आपनि आमार एই कन्याके ये विवाह करियाछेन, आमि आपनादेर उपरे सन्तुष्ट हইया ताहाते अनुमोदन करियाछि । कारण—

(१) प्रागहरः स्मृतोऽसि न ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदिदानीमापन्नसत्त्वेयं गृह्यतां सहधर्म्मचरणायेति (१)। (ब)

गौतमी। भद्दमुह! किम्पि वत्तुकामह्मि, ण मे वअणावसरो अत्थि (२)। (भ)

(भ) भद्रमुख! किमपि वक्तुकामास्मि, न मे वचनावसरोऽस्ति।

---

नैषधे—"कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति।". वधूवरमिति समाहारद्वन्द्व एकवद्भावः।

"समानाः सत्समैके स्युः" इत्यमरः।

वंशस्थविलं वृत्तम् ॥१६॥

(ब) तदिति। तस्मात् विधात्रैव पतिपत्नीत्वेन युवयोरैक्यीकृतत्वादित्यर्थः। इदानीम्, आपन्नम् उदरे प्राप्तं सत्त्वं जन्तुर्यया सा आपन्नसत्त्वा गर्भवती, इयं शकुन्तला, सहधर्म्मचरणाय "सपत्नीको धर्म्ममाचरेत्" इति शास्त्रात् मिलित्वा धर्म्मकार्य्यकरणाय, गृह्यताम्, इति इत्यन्तम्, इदमाहेति पूर्वेणान्वयः।

"आपन्नसत्त्वा स्याद्गुर्व्विण्यन्तर्वत्नी च गर्भिणी।" इत्यमरः।

(भ) गौतमीति। भद्राणां श्रेष्ठानां जनानां मुखः प्रधान इति भद्रमुखस्तत्-सम्बोधनम्। वचनावसर उक्त्यवकाशः, नास्ति; युवाभ्यामेवाविरतालपनादिति भावः।

"मुखमाद्ये प्रधाने च" इत्यमरः।

---

আপনি প্রশংসনীয় লোকদের অগ্রগণ্য ইহা আমাদের অভিমত; আবার শকুন্তলাও মূর্ত্তিমতী সৎক্রিয়ার ন্যায়। অতএব প্রজাপতি, সমানগুণসম্পন্ন বধূ ও বরকে একত্র করিয়া, চিরকালের নিন্দা প্রাপ্ত হন নাই।১৬।

(ব) অতএব এখন এই গর্ভবতী পত্নীকে, মিলিত হইয়া ধর্ম্মকার্য্য করিবার জন্য গ্রহণ করুন।

(ভ) গৌতমী। হে ভদ্রপ্রধান! আমি কিছু বলিতে ইচ্ছা করি; কিন্তু আমার বাক্যের অবসর হইতেছে না।

---

(१) क्वचिदियमिति नास्ति। (२) गौतमी। अज्ज अत्थि। कहं त्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। आर्य्ये ! कथ्यताम् (१)। (म)

गौतमी।

णावेक्खिदो गुरुअणो इमिए ण तुए वि पुच्छिदो बन्धू।
एक्कक्कस्स अ चरिए भणादु किं एक्क एक्कस्सिं (२) ॥१७॥

शकु। आत्मगतम्। क्किस्सु, क्खु अज्जउत्तो भणिस्सदि (३)। (य)

नापेक्षितो गुरुजनः अनया, न त्वयापि पृष्टो बन्धुः।
एकैकस्य च चरिते भणतु किमेक एकस्मिन् ॥१७॥

(म) राजेति। आर्य्ये ! माननीये !।

नेति। अनया शकुन्तलया, गुरुजनः पित्रादिः, न अपेक्षितः दुष्मन्ताय आत्मानं प्रदातुमनुमतिग्रहणाय नान्विष्टः; त्वयापि दुष्मन्तेन, बन्धुः स्वजनः, न पृष्टः 'शकुन्तलां विवहामि न वा' इति न जिज्ञासितः। अतएव एकस्मिन् बन्धुजनानपेक्षणात्मके अविभिन्नरूपे, एकैकस्य युवयोरुभयोरेवेत्यर्थः, चरिते अभिन्नाचरणे, एकः अन्यो जनः, किं भणतु 'पतिः पत्नीं पत्नी पतिं त्यजतु' इत्यादि किं वदतु, अपि तु परस्परमिलनापेक्षत्वात् न किञ्चिदभणत्वित्यर्थः। तेन यथेयमनुरागवशादेवागता, तथा त्वमप्यनुरागवशादेवैनां गृह्णीष्यसीति न कस्यचिदप्यनुरोधापेक्षास्तीति भावः।

अत्र किं भणतु अपि तु किमपि नेत्यर्थान्तरस्यापतनादर्थापत्तिरलङ्कारः।

"एके मुख्यान्यकेवलाः" इत्यमरः। आर्य्या जातिः ॥१७॥

(म) राजा। आर्य्ये ! बलुन।

গৌতমী। এ ( শকুন্তলা ) গুরুজনের অপেক্ষা করে নাই; আপনিও বন্ধুজনকে জিজ্ঞাসা করেন নাই। অতএব আপনাদের দুই জনেরই এক রকম কার্য্যে অন্যে কি বলিবে ?॥১৭॥

(१) क्वचिदिदं पाठो न वर्त्तते।

(२) एक्कक्कमेव्व' चरिए भणामि किं एक्कमेक्कस्स। (३) भणइ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । साशङ्कमाकर्ण्य । अये ! किमिदमुपन्यस्तम् ? (१) । (र)

शकु । आत्मगतम् । हद्धी हद्धी ! सावलेवो से वअणाव-क्खेवो (२) । (ल)

---

(य) किन्नु खलु आर्य्यपुत्रो भणिष्यति ।

(ल) हा धिक् हा धिक् ! सावलेपः अस्य वचनावक्षेपः ।

---

(य) शकु इति । सोत्कण्ठा साशङ्का चोक्तिरियमिति बोध्यम् ।

(र) राजेति । परस्त्रिया ग्रहीतुमशक्यत्वात् तदग्रहणाय च महर्षेरेवानुरोधापातात् तत्प्रत्याख्याने च महाविपत्सम्भवादाशङ्का तया सहेति साशङ्कम् । अयी इति सम्भ्रमे । किमुपन्यस्तं भवद्भिः किमिदं वक्तुमारब्धम् । एतत्प्रस्तावगन्धमपि नाहं जानामीत्याशयः । केचित्तु किमिदमुपन्यस्तम् उपकथात्मकोपन्यासरूपेण किमिदमभिहितमित्यर्थमाचक्षते ।

"उपन्यासस्तु वाङ्मुखम्" इत्यमरः ।

(ल) शकु इति । हाधिगित्येकमेव विषादार्थकमव्ययम्, तस्यातिशये द्विरुक्तिः । अस्य राज्ञो दुष्मन्तस्य, वचनावक्षेप एतद्वाक्यप्रयोगः, सावलेपः सगर्वः । तथा च महामाननीयेन मुनिजनेन सह विनयेनैवालापे कर्त्तव्ये 'अयी ! किमिदमुपन्यस्तम्' इति वचनोच्चारणभङ्ग्या गर्व एव प्रतीयते । तेन च गर्वेण मुनिवाक्यप्रत्याख्यानमपि सम्भाव्यत इति भावः ।

"अवलेपस्तु गर्वे स्याल्लेपने भूषणेऽपि च ।" इति मेदिनी ।

---

(य) शकुन्तला । ( স্বগত ) আর্য্যপুত্র কি বলেন ! ।

(র) রাজা । ( আশঙ্কার সহিত শুনিয়া ) ওহে ! আপনারা এ-কি বলিতে আরম্ভ করিয়াছেন ।

(ল) শকুন্তলা । ( স্বগত ) হায় ! হায় ! ইঁহার বাক্যবিন্যাসে যে গর্ব্ব লক্ষ্য করিতেছি ।

---

(१) राजा । किमिदमुपन्यस्तम् । (२) यावन्ती वक्तु, वचनीवद्यासौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शाङ्ग°। किं नाम, किमिदमुपन्यस्तमिति। ननु भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः (१)। (व)

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्त्तृमतीं विशङ्कते।
अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया वा (२) प्रमदा स्वबन्धुभिः ॥१८॥

---

(व) शाङ्गेति। नामेति प्रकाश्ये। किं प्रकाश्योक्तमित्यर्थः। किमिदमुपन्यस्तम्, इति किम् उक्तमिति तात्पर्य्यम्। सत्यमियं मया परिणीता, तथापि सर्वप्रकाररागरहितानामूर्द्ध्वरेतसां मुनीनामाश्रमे अस्या अवस्थाने न काचिदाशङ्केति किमिदमुपन्यस्तं 'इयं गृह्यताम्' इत्यादिकं किं वक्तुमारब्धमिति राज्ञोऽभिप्रायं सम्भाव्याह नन्वित्यादि। नन्विति विशेषामन्त्रणे। सुतरामस्मदादिभ्योऽतिशयेन, लोकवृत्तान्तेषु निष्णाता अभिज्ञाः।

"प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः" इत्यमरः।

नन्वत्र तादृशः को नाम लोकवृत्तान्त इत्याह सतीमिति। जनो लोकः, ज्ञातिकुलं पितृगृहम् एकं केवलं संश्रयते अवस्थानायावलम्बत इति ताम्, भर्त्ता अस्या अस्तीति सा भर्त्तृमती तां सधवाम्, सतीमपि केवलपतिरतामपि प्रमदाम्, अन्यथा अन्यप्रकारेण व्यभिचारित्वेनेत्यर्थः, आशङ्कते अवश्याश्रयणीयभर्त्तृगृहानाश्रयादाशङ्कते। अतः कारणात्, स्वबन्धुभिः प्रमदाया एव पित्रादिबन्धुजनैः, प्रिया अप्रिया वा परिणेतुर्हृदि तात्पर्य्यम्, प्रमदा युवतिः, परिणेतुं पत्युः, समीपे स्थितेति शेषः, इष्यते। अतोऽस्मिन्

---

(व) शार्ङ्गरव। "এ কি বলিতে আরম্ভ করিয়াছেন" এ কথা বলিলেন কেন। আপনারাই যে আমাদের অপেক্ষা লোকের খবর বেশী জানেন।

---

(१) शार्ङ्गरवः। कथमिदं नाम। भवन्त एव सुतरां। (२) तदप्रियापि प्रमदा।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। किमत्रभवती मया परिणीतपूर्वा ? (१)। (ञ)

शकु। सविषादमात्मगतम्। हिअअ! संपदं संवुत्ता दे आसङ्का (२)। (ष)

---

तीकवचनाः, अत्र च भवन्त एव विशेषेणाभिज्ञाः। अतएव चेयं भवतः समीपमानीतेति भावः।

अत्र अप्रस्तुतात् प्रमदासामान्यात् प्रस्तुतस्य शकुन्तलारूपप्रमदाविशेषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, अवत्यां का कथा सतीमपीति अर्थान्तरापतनादर्थापत्तिश्च, अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः। स्थितेति पदानुक्तावपि तस्य सामर्थ्यादेवावगतेर्न न्यूनपदतादोषः, "क्वचिन्न दोषो न गुणः" इति साहित्यदर्पणात्।

तथा उक्तस्य विषयस्य उपालम्भरूपेण बहुधा उत्कीर्त्तनात् अर्थविशेषणं नाम नाट्यालङ्कारः। यथा तत्रैव—

"उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा।
उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम्॥"

"ज्ञातिः सगोत्रे पितरि।" "कुलं जनपदे गृहे। सजातीयगणे गोत्रे देहेऽपि कथितं कुलम्॥" इति च विश्वः। "प्रमदा चेति विज्ञेया युवतिश्च तथा स्तुता" इति भागुरिः। वंशस्थविलं वृत्तम्॥१८॥

(ञ) राजेति। अत्रभवती मुनिकन्यात्वेन माननीया शकुन्तला, परिणीतपूर्वा पूर्वं परिणीता किम्?। कथमन्यथा भवन्त एवं ब्रुवन्तीति भावः।

---

সধবা স্ত্রী সতী হইয়াও, যদি কেবলই পিতৃগৃহে থাকে, তবে লোকে তাহাকে অন্যরূপ আশঙ্কা করে; এই জন্য, সে প্রিয়াই হউক, বা অপ্রিয়াই হউক, তাহাকে স্বামীর নিকটে রাখাই, তাহার আত্মীয়েরা ইচ্ছা করেন॥১৮॥

(শ) রাজা। আমি কি ইহাকে পূর্ব্বে বিবাহ করিয়াছিলাম?।

---

(१) किमत्रभवती। (२) हिअअ! संपड़िआ दाणिं दे आसङ्का।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार्ङ्ग।

किं कृतकार्य्यद्वेषात् धर्म्मं प्रति विमुखतोचिता राज्ञः।

राजा। कुतोऽयमसत्कल्पनाप्रसङ्गः (१)। (स)

शार्ङ्ग। सक्रोधम्।

मूर्च्छन्त्यमी विकाराः, प्रायेणैश्वर्य्यमत्तानाम् (२) ॥१८॥

---

(ष) हृदय ! साम्प्रतं संवृत्ता ते आशङ्का।

---

(ष) शकु इति। आशङ्का प्रत्याख्यानभयम्, संवृत्ता उपस्थिता, सन्देहे एकतर-निश्चयस्यावश्यकत्वात् अपरिणीतत्वनिश्चये च प्रत्याख्यानस्यैव निश्चयादित्याशयः।

किमिति। एकस्य श्लोकस्य प्रथमार्द्धमिदम्, परार्द्धञ्च राजवाक्यानन्तरं वक्ष्यते। कृते स्वयमेव विहिते, कार्य्ये शकुन्तलायाः परिणयव्यापारे, द्वेषात् केनापि कारणेन 'नैतद्भद्रं कृतम्' इति विद्वेषोत्पत्तेर्हेतोः, धर्म्मं प्रति, राज्ञो धर्म्मनियन्तुर्विशेषतः किं विमुखता पराङ्मुखता, उचिता सङ्गता, कथमपि नेत्यर्थः। यः खलु राजा तस्य धर्म्मं प्रति सर्व्वदैवोन्मुखत्वमेवोचितम्। तेन दुष्टत्वेन कृतस्य शकुन्तलापरिणय-कार्य्यस्य कुतोऽपि कारणात् पुनर्द्विष्टत्वबुद्ध्या तदनङ्गीकारे शकुन्तलायाः सर्व्वथा गत्यन्तरा-भावात् धर्म्मं प्रति विमुखतैव स्यात् सा च राज्ञस्तव नितरामनुचितेति भावः।

अत्र राज्ञो दोषाभिधानात् अपवादो नाम विमर्शसन्धेरङ्गम्। यथा दर्पणे—

"दोषप्रख्यापवादः स्यात्।"

(स) राजेति। असती असाधुभूता या कल्पना मम धर्म्मं प्रति विमुखत्वोत्प्रेक्षा

---

(ষ) শকুন্তলা। (বিষাদের সহিত স্বগত) হৃদয়! এখন তোমার আশঙ্কা উপস্থিত হইল।

শার্ঙ্গরব। কৃতকার্য্যের প্রতি বিদ্বেষবশতঃ ধর্ম্মের প্রতি বিমুখ হওয়া কি রাজার উচিত ?।

(স) রাজা। এই অসৎ কল্পনার প্রসঙ্গ আসিল কোথা হইতে?।

---

(१) कल्पनादयः। (२) ऐश्वर्य्यमत्तेषु।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। विशेषेणाधिक्षिप्तोऽस्मि। (ह)

गौतमी। शकुन्तलां प्रति। जाते! मुहूर्त्तमात्रं मा लज्ज,

---

तस्याः प्रसङ्गः सम्भावना कुतः, अपि तु कुतोऽपि नेत्यर्थः, सर्व्वदैव धर्म्मं प्रति उन्मुखत्वा-दित्याशयः।

मूर्च्छन्तीति। ऐश्वर्य्यमत्तानां धनमदेन मत्तानां जनानाम्, प्रायेण बाहुल्येनैव, अमी इत्यम्भूताः, विकाराः स्वभावपरिवृत्तयः, मूर्च्छन्ति उच्छ्रयं प्राप्नुवन्ति वर्द्धन्त इत्यर्थः। तथा च यावत्कालं जना निर्धना अल्पधना वा तिष्ठन्ति, तावदेव ते कृतकार्य्यमङ्गीकुर्वन्ति सत्यञ्च पालयन्ति; यदैव धनं विवर्द्धते, तदैव तन्मदेन मत्ताः सन्तस्त एव जनाः विद्विषन्तः कृतकार्य्यं न स्वीकुर्वन्ति सत्यञ्च परिहरन्ति; प्रायेणैव इत्थं स्वभावपरिवृत्तयः परिदृश्यन्ते, भवतोऽप्येवमेव स्वभावपरिवृत्तिर्वृद्धिं प्राप्ता; कथमन्यथा शकुन्तलायाः परिणय एव सन्देहाविष्कार इति भावः।

अतएवात्र अप्रस्तुतादैश्वर्य्यमत्तसामान्यात् प्रस्तुतस्य ऐश्वर्य्यमत्तविशेषस्य दुष्मन्तस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः। रोषभाषणात् सम्फेटो नाम विमर्शसन्धेरङ्गञ्च—"सम्फेटो रोषभाषणम्" इति दर्पणलक्षणात्;

"स्वरूपादन्यथात्वं विकारः" इति श्रीपतिः। आर्य्या जातिः॥१९॥

(ह) राजेति। विशेषेण आधिक्येन, अधिक्षिप्तो भवता भर्त्सितः।

"अधिक्षिप्तौ निहितभर्त्सितौ" इति हेमचन्द्रः।

अत्र मुनिशिष्यप्रमानरक्षार्थं तत्कृततिरस्कारजनितापमानसहनात् छादनं नाम विमर्शसन्धेरङ्गम्। यथा दर्पणे—"तदाहुश्छादनं पुनः। कार्य्यार्थमपमानादेः सहनं खलु यद्भवेत्।"

---

शार्ङ्गरव। (ক্রোধের সহিত) ধনমদে মত্ত লোকদিগের প্রায়ই এই জাতীয় বিকার বৃদ্ধি পাইয়া থাকে॥১৯॥

(হ) রাজা। বিশেষভাবে তিরস্কৃত হইলাম।

(ক্ষ) গৌতমী। (শকুন্তলার প্রতি) বৎসে! একটুকাল লজ্জা

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवणइस्स दाव दे अवगुण्ठणं, तदो भट्टा तुमं अहिजाणिस्सदि । इति तथा करोति (१) । (घ)

राजा । शकुन्तलां निर्वर्ण्य स्वगतम् ।

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्नवेत्यध्यवस्यन् ।
भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं
न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम् (२) ॥२०॥

(घ) जाते ! मुहूर्तकं मा लज्जस्व, अपनेष्यामि तावत्ते अवगुण्ठनम्, ततो भर्त्ता त्वामभिज्ञास्यति ।

---

(घ) गौतमीति । मुहूर्त्तकं कियन्तं कालमित्यर्थः । अवगुण्ठनं मुखावरणम्, अपनेष्यामि अपसारयिष्यामि । भर्त्ता राजा, अभिज्ञास्यति ज्ञातामेव पुनर्ज्ञास्यति मुखदर्शनात् सैवेयमिति परिचेष्यतीत्यर्थः । तथा करोति अवगुण्ठनमपनयति ।

"अनुभूतस्य पुनरनुभवः प्रत्यभिज्ञा:" इति गुरवः ।

इदमिति । एवम् अनेन प्रकारेण आत्मेच्छयैवेत्यर्थः, उपनतं मम समीपे उपस्थितम्, अक्लिष्टा अमलिना कान्तिः शोभा यस्य तत्, इदं रूपम् इयं स्त्रीमूर्त्तिः प्रथमं परिगृहीतं मया परिणीतं स्यात् न वा इति विषये अध्यवस्यन् एकतरं निश्चिन्वन् अहम्, निशान्ते रात्रिशेषे, अन्तरभ्यन्तरे तुषारो हिमं यस्य तदन्तस्तुषारम् । एतेन रूपमपि अन्तःसत्त्वमिति सूचितम् । कुन्दं तदाख्यं पुष्पमिव, सपदि हठात्, भोक्तुमपि न खलु शक्नोमि, स्वकीयत्वपरकीयत्वयोः सन्देहस्यानिरासात् परकीयाभोगे प्रत्यवायसम्भवात्, भ्रमरपक्षे अन्तस्तुषारतया आकृतिवैषम्येण स्वरूपस्यानिर्णयादिति

---

করিস্ না; আমি তোর ঘোমটা সরাইয়া ফেলি; তার পর রাজা তোকে চিনিতে পারিবেন। (এই বলিয়া তাহাই করিলেন।)

---

(१) मा लज्जसु···। (२) स्यान्नवेति व्यवस्यन् । भ्रमर इव विभाते न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति विचारयन् स्थितः। (क)

प्रती। स्वगतम्। अम्मो! धम्मावेक्खिणो भट्टिणो। ईदिसं णाम सुहोवणदं इत्थीरअणं पेक्खिअ को अण्णो विआरेदि (१)। (ख)

(ख) अहो! धर्म्मापेक्षिणो भर्त्तारः। ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति।

भावः। सपदि भोक्तुं परित्यक्तुमपि न शक्नोमि, आत्मनैव परिगृहीताया निर्दोषाया: परित्यागे गुरुतरपापसम्भवात्, भ्रमरपक्षे पूर्वं दृष्टवदेव दर्शनेन उत्कटमधुलोभस्यैव जागरूकत्वादित्याशयः।

अत्र श्रौतीपमालङ्कारः। तथा भ्रमरः शक्नोति अहन्तु शक्नोमीति पुरुषभेदात् "लतेव राजसे तन्वि!" इति दर्पणोदाहरणवत् भग्नप्रक्रमतादोषः, स च 'नापि भोक्तुं समर्थः' इति पाठेन समाधेयः।

मालिनी वृत्तम् ॥२०॥

(क) इतीति। विचारयन् शकुन्तला परिणीता नवेति वितर्कयन्।

(ख) प्रतीति। अहोशब्दो विस्मये। भर्त्तारो राजानः, धर्म्मम् अवेक्षन्ते रक्षणीय-

রাজা। (শকুন্তলাকে দেখিয়া স্বগত) যাহার ভিতরে শিশিরবিন্দু পড়িয়া থাকে, সেইরূপ কুন্দপুষ্পকে রাত্রিশেষে ভ্রমর যেমন ভোগ করিতেও পারে না, পরিত্যাগ করিতেও পারে না; আমিও তেমন অক্ষতসৌন্দর্য্য এই রূপখানি আপনার ইচ্ছায় উপস্থিত হইয়াছে, কিন্তু ইহাকে প্রথম গ্রহণ করিয়াছিলাম কি না এই সন্দেহ করিয়া, হঠাৎ ভোগ করিতেও পারিতেছি না, হঠাৎ ত্যাগ করিতেও পারিতেছি না ॥২০॥

(ক) (মনে মনে এইরূপ তর্ক করতঃ নীরব রহিলেন।)

(१) प्रतीहारी। अहो! धर्म्मावेक्खिदा भत्तुणो। एरिसं णाम सुहोवणदं रूवं देक्खिअ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार्ङ्ग। भो राजन्! किमिति जोषमास्यते ?। (ग)

राजा। भोस्तपस्विनः! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि, तत् कथमिमामभिव्यक्तसत्त्वलक्षणामात्मानमक्षत्रियं मन्यमानः प्रतिपत्स्ये (१)। (घ)

त्वेन पश्यन्तीति धर्म्मावेक्षिणः धर्म्मरक्षिण इत्यर्थः। अत्र अन्यशेति पूरणीयम्। ईदृशं परमसुन्दरमित्याशयः, सुखेन अनायासेन उपनतमुपस्थितम्, आयासोपनामे कथञ्चिद्विचारः सम्भवतीति भावः। अन्यः भर्त्तृभिन्नः जनः, विचारयति गृह्णामि न वेति वितर्कयति, कोऽपि नेत्यर्थः।

प्रतीहार्य्या खल्विदमात्मनो जातिव्यक्त्यनुरूपमेवाभिहितमित्यालोचनीयम्।

(ग) शार्ङ्गेति। केवलमेवात्मनो विद्विष्टवचनस्याभिधीयमानत्वादनादरसम्बोधने भोःशब्दः। परत्राप्येवम्। जोषं तूष्णीं नीरवमिति यावत्, आस्यते उपविश्यते। इदमुपनतमित्यादिः स्वगतमालोचनादिदमुक्तम्।

"तूष्णीमर्थे सुखे जोषम्" इत्यमरः।

(घ) राजेति। अत्रभवत्याः मुनिकन्यात्वेन माननीयायाः शकुन्तलायाः, स्वीकरणं विवाहात् भार्य्यात्वेन ग्रहणम्, न खलु स्मरामि। अत्र अपरिणीता अपि राज्ञां भोग्याः स्त्रियः सन्तीति श्रूयते तद्रूपेयं गृह्यतामित्याह तदिति। आत्मानम्, अक्षत्रियं क्षत्रियजातीतरम्, मन्यमानः। तथा च क्षत्रियाः खलु धर्म्मरक्षकाः। एवञ्च अभिव्यक्तसत्त्वलक्षणत्वेन परदारत्वात् तद्ग्रहणे च धर्म्मध्वंसात् आत्मानः क्षत्रियेतरत्वमेव स्यादिति

(ख) প্রতীহারী। (স্বগত) হায়! রাজারা কি আশ্চর্য্য ধর্ম্মাপেক্ষী; না হইলে, অনায়াসে উপস্থিত এইরূপ স্ত্রীরত্ন দেখিয়া, অন্য কোন্ ব্যক্তি ইতস্ততঃ করে ?।

(গ) শার্ঙ্গরব। রাজা! আপনি নীরব হইয়া রহিলেন কেন ?।

(१) भोस्तपोधनाः! अभिव्यक्तसत्त्वलक्षणां प्रति आत्मानं क्षत्रियमात्रमन्यमानः प्रतिपत्स्ये।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। स्वगतम्। ह्द्धी ह्द्धी! कधं परिणए ज्जेव सन्देहो। भग्गा दाणिं दूरारोहिणी आसालदा (१)। (ङ)

शार्ङ्ग। मा तावत्—(च)

कृतावमर्शामनुमन्यमानः (२)
सुतां त्वया नाम मुनिर्विमान्यः।

---

(ङ) हा धिक् हा धिक्! कथं परिणय एव सन्देहः। भग्ना इदानीं दूरारोहिणी आशालता।

---

भावः। अभिव्यक्तं स्पष्टीभूतं सत्त्वलक्षणं गर्भचिह्नं यस्यास्ताम्। प्रतिपत्स्ये ग्रहीष्यामि, कथमपि नेत्यर्थः।

(ङ) शकु इति। हाधिगित्येकमेव महाविषादसूचकमव्ययं तस्यातिशये द्विरुक्तिः। परिणये एव अतिहृद्व्यापारे गान्धर्वविवाहे एव, सन्देहो विस्मृतिवशादिति भावः। दूरमत्युच्चम् आरोहतीति दूरारोहिणी बहुविस्तृतेत्यर्थः, आशैव लता सा, भग्ना छिन्ना, परिणय एव सन्देहेन प्रत्याख्यानस्यैवावश्यम्भावात् अन्यत्र च तादृशाशापूरणासम्भवादिति भावः।.

(च) शार्ङ्गेति। अवधारणे तावच्छब्दः। वारणे च माशब्दः, अन्वयश्चास्य मोकस्येन विमान्य इत्यनेन। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः।

---

(ঘ) রাজা। ওহে তপস্বিগণ! আমি চিন্তা করিয়াও, ইহার পাণিগ্রহণ স্মরণ করিতে পারিতেছি না; সুতরাং আপনাকে অকৃত্রিম স্বীকার করিয়া, এক ব্যক্তগর্ভলক্ষণা রমণীকে কি করিয়া গ্রহণ করি।

(ঙ) শকুন্তলা। (স্বগত) হায়! হায়! বিবাহেই সন্দেহ হইল। অতি দূরে উত্থিত আমার আশালতা এখন ছিন্ন হইল।

---

(१) शकुन्तला। अपवार्य्य। अज्जउत्तस्स परिणए एव्वं सन्देहो। कुदो दाणिं मे दूरारोहिणी…। (२) कृताभिमर्शाम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥२१॥

कृतेति । कृतस्त्वयैव विहितः अवमर्शः स्पर्शः स्पर्शात्मकं सुरतं यस्यास्ताम्, सुतां कन्यां शकुन्तलाम्, अनुमन्यमानः रोषम् असम्मतिं वा अकृत्वा प्रत्युत अनुमोदमानः, मुनिः कण्वः, त्वया मा तावत् विमान्यः तत्प्रत्याख्यानेन नैव अवमाननीयः। किञ्च येन मुनिना, मुष्टं चोरितम्, स्वं स्वकीयम्, अर्थं धनं पुनः प्राप्तमित्यर्थः, प्रतिग्राहयता स्वीकारयता सता, दस्युस्तस्कर इव, पात्रीकृतः सम्प्रदानीकृतः असि। तथा च त्वं मुनेरनुमतिमगृहीत्वैव तदीयकन्यां शकुन्तलां गान्धर्वविधानेन निर्जने परिणीतवान्, परन्तु मुनिस्तज्ज्ञात्वा आत्मानुमत्यभावेऽपि रोषमकृत्वा, प्रत्युत प्रीत्या तादृशपरिणयानुमोदनमेव कृतवान्, ईदृशावस्थायां तादृशसरलचेता मुनिस्तदनुरोधप्रत्याख्यानेन कथमपि नावमाननीयः। किञ्च चौरेण कस्यचित् किञ्चिद्धनं चोरितम्, धनस्वामिना तु पुनस्तद्धनं प्राप्य यथा तस्मै चौरायैव दीयते, तथा, त्वया रहसि गृहीतामात्मकन्यां पुनः प्राप्य यः खलु मुनिः पुनस्तुभ्यमेव दानार्थं प्रेरितवान्, ईदृशो महात्मा मुनिस्त्वया तद्दान-प्रत्याख्यानेन कुतोऽपि नावमाननीयः, प्रत्युत सादरमेव तद्ग्रहणेन सम्माननीय एव; अन्यथा कृतघ्नता स्यादिति सरलार्थो भावार्थश्च ।

अत्र श्रौतीपमालङ्कारः। तेन च दुष्मन्तस्य चौरवन्निकृष्टत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। तथा चौरः पात्रीकृतः अस्ति, त्वन्तु असीति पुरुषभेदाद्भग्नप्रक्रमतादोषः, स च 'येन प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिव प्रमृष्टम्' इति पाठेन परिहार्यः। एवञ्च प्रक्रमस्य आरम्भरूपत्वादारम्भस्य चोक्तेरेव विवक्षणात् प्रदर्शितपाठे च पश्चात्त्वस्यानुक्तत्वात् न तद्दोषावसर इति सुधीभिर्भाव्यम् ।

मुष्टमिति "मुष स्तेये" इत्यस्य क्तप्रत्यये प्रयोगः ।

हन्त ! "ते हि नो दिवसा गताः" भारतब्राह्मणानाम् ; यत्र हि तपस्वी ब्राह्मणः समक्षमेव सम्राजं भर्त्सयन् नावमानितः ।

उपजातिर्वृत्तम् ॥२१॥

(च) शार्ङ्गरव। आपनि कन्यार संस्पर्श करियाछेन, महर्षि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार । शार्ङ्गरव । विरम त्वमिदानीम् । शकुन्तले ! वक्तव्यमुक्तमस्माभिः, सोऽयमत्रभवानेवमाह, दीयतामस्मै प्रत्ययप्रतिवचनम् । (छ)

शकु । स्वगतम् । इमं अवत्थन्तरं गदे तादिसे अणुराए किंवा सुमराविदेण । अधवा अत्ता दाणिं मे सोधणीओ होदु त्ति किञ्चि वदिस्सं । प्रकाशम् । अज्जउत्त ! । इत्यर्द्धोक्ते ।

(ज) इदमवस्थान्तरं गते तादृशेऽनुरागे किंवा स्मारितेन । अथवा आत्मेदानीं शोधनीयो भवतु, इति किञ्चिद्वदिष्यामि । आर्य्यपुत्र ! । अथवा संशयित इदानीमेष

(छ) शारेति । यत् वक्तव्यं तदुक्तमित्यर्थः । अत्रभवान् राजत्वेन माननीयः सः अयं दुष्मन्तः, आह ब्रवीति । प्रत्ययाय प्रतिवचनं विश्वासकरमुत्तरमित्यर्थः । इदानीं त्वदुक्तिमात्रमेव आश्वासनमिति भावः ।

(ज) शकु इति । तादृशे पूर्व्वानुभूते सुमहतीत्यर्थः, अनुरागे मां प्रति राज्ञः प्रणये, इदम् अवस्थान्तरं लोपदशाम्, गते प्राप्ते सति, स्मारितेन आवयोर्गान्धर्व्वविवाहस्मरणजननेन, किंवा फलम्, न किञ्चिदपीत्यर्थः अनुरागाभावे केवलस्मृतेरकिञ्चित्करत्वादिति भावः । शोधनीयः निष्पापीकर्त्तव्यः, मत्कृतेन विश्वासजनकोत्तरेणापि

তাহাতে অনুমোদন করিয়াছেন ; এ অবস্থায় আপনি তাঁহাকে অপমানিত করিবেন না। নিজের ধন চুরি করিয়া নিয়াছিল, সেই ধন পাইয়া পুনরায় সেই চোরকেই যেমন সেই ধন গ্রহণ করান হয়, সেইরূপ আপনি নিজের কন্যাকে অসমক্ষে গ্রহণ করিয়াছেন, তাহাকে পাইয়া পুনরায় গ্রহণ করিবার জন্য যিনি আপনাকেই পাত্র করিয়াছেন।২১।

(ছ) শারদ্বতমিশ্র। শার্ঙ্গরব! তুমি এখন বিরত হও। শকুন্তলা! আমাদের যাহা বক্তব্য, তাহা বলা হইয়াছে ; তাহাতে মাননীয় এই রাজা এইরূপ বলিতেছেন ; অতএব তুমি ইহার বিশ্বাসজনক উত্তর দাও।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अधवा संसद्दो दाणिं एसो समुदाचारो। पोरव! जुत्तं णाम तुह पुरा अस्समपदे सवभावुत्ताणहिअअं इमं जणं तधा समअपुव्वअं सम्भाविअ सम्पदं ईदिसेहिं अक्खरेहिं पच्चाक्खादुं (१)। (ज)

समुदाचारः। पौरव! युक्तं नाम तव पुरा आश्रमपदे सद्भावोत्तानहृदयमिमं जनं तथा समयपूर्वकं सम्भाव्य साम्प्रतमीदृशैरक्षरैः प्रत्याख्यातुम्।

राज्ञा प्रत्याख्याने दारुणदुःखसम्भवात् तेनैव च पापक्षयस्य भावित्वात् "प्रारब्धकर्मणां भोगादेव क्षयः" इत्यभियुक्तोक्तत्वादित्याशयः। 'आर्य्यपुत्र! शृणु' इति पदद्वयात्मक-वाक्यस्य आर्य्यपुत्र इत्येकस्मिन् पदे उच्चारिते तद्वाक्यस्यार्द्धमेव उक्तं स्यादत उक्तम् इत्यर्द्धोक्ते इति। इदानीं परिणयस्यैव विस्मरणकाले, एष आर्य्यपुत्रपदप्रयोगः, समुदाचारो व्यवहारः संशयितः प्रत्याख्यानसम्भवेन तत्सम्बन्धध्वंससम्भवात् संशयापन्नः। अतएव निःसंशयपदेन सम्बोधयति पौरवेति। हे पौरव! पुरुवंशोत्पन्न! आश्रमपदे तपोवनस्थाने, सद्भावेन तव सद्व्यवहारेण उत्तानं बहुतरसुखाशाजननात् उच्चीभूतं हृदयं वचो यस्य तं तादृशम्, इमं जनं मामित्यर्थः, तथा पूर्वानुभूतरूपेण, समयपूर्वकं "परिग्रहबहुत्वेऽपि" इत्यादिशपथपूर्वकम्, सम्भाव्य आश्वास्य, साम्प्रतम् ईदृशैः "न खलु चिन्तयन्नपि स्वीकरणमत्रभवत्याः स्मरामि" इत्यादिरूपैः, अक्षरैर्वर्णैः, प्रत्याख्यातुं निराकर्त्तुम्, तव युक्तमुचितं नाम "उपकृतं बहु तव किमुच्यते" इत्यादिदर्पणोदाहरण-वत् विपरीतलक्षणया अतीवायुक्तमित्यर्थः; तव मिथ्यावादित्वप्रतारकत्वादिबहुतरदोषा-पातादिति भावः। नामशब्दः कुत्सायाम्।

(ज) শকুন্তলা। (স্বগত) সেইরূপ অনুরাগ এই অবস্থায় প্রাপ্ত হইয়াছে; ইহাতে স্মরণ করাইয়াই বা ফল কি। অথবা আমার আত্মা এখন সংশোধিত হউক, এই জন্য কিছু বলিব। (প্রকাশে)

(१) शकुन्तला। अपवार्य्य। अत्ता दाणिं मे सोअणीओ त्ति ववसिअं एदं। संसइए परिणए ण एसो समुदाआरो। सहावुत्ताणहिअअं पच्चारिअ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। कर्णौ पिधाय। शान्तं शान्तम् (१)। (ञ)

व्यपदेशमाविलयितुं समीहसे माञ्च नाम पातयितुम्।
कूलङ्कषेव सिन्धुः प्रसन्नमोघं तटतरुञ्च (२) ॥२२॥

(ञ) राजेति। पिधाय पाणिभ्यामावृत्य; मिथ्योक्तिं सम्भाव्य तच्छ्रवणे पापसम्भवादिति भावः। शान्तं शान्तम् ईदृशोक्तेर्निवर्त्तस्व निवर्त्तस्व। शान्तमिति वारणार्थमव्ययम्।

व्यपेति। कूलङ्कषा वेगेन तीरभङ्गकारिणी, त्वत्पक्षे कुलस्त्रीनियमभङ्गकारिणीति च गम्यते; सिन्धुर्नदी, प्रसन्नं निर्म्मलम्, ओघं जलप्रवाहम्, तटतरुञ्च तीरस्थितवृक्षञ्च इव, प्रसन्नम्, व्यपदिश्यते लोकसमाजे उल्लिख्यते अनेनेति व्यपदेशः कुलं तम्, आविलयितुं परस्त्रीरूपस्यात्मनः संसर्गेण कलुषीकर्त्तुं भज्यमानतीरमृत्तिकासंसर्गेण आविलीकर्त्तुं च, मां पातयितुञ्च परस्त्रीरूपस्यात्मनः संसर्गद्वारा पातित्यजनकपापाश्रयीकर्त्तुं च, समीहसे आत्मनो ग्राहणेन वेगेन च चेष्टसे; इदन्तु सहृदनुचितमसम्भवञ्चेति भावः।

अत्र श्रौती पूर्णोपमालङ्कारः, प्रसन्नं व्यपदेशमोघञ्च आविलयितुं माञ्च तटतरुञ्च पातयितुमिति उद्दिष्टानां क्रमेणान्वयेशात् यथासंख्यमलङ्कारश्च, अनयोर्मिथो निरपेक्षतया संसृष्टिः। तथा सिन्धुः समीहते त्वन्तु समीहसे इति पुरुषभेदात् पूर्ववदेव भग्नप्रक्रमतादोषः, सोऽपि च समीहत इति पाठेनैव समाधेयः। समीहसे इति पाठे त्वमितिवत् समीहत इति पाठेऽपि भवतीति कर्त्तृपदान्वयादुपपत्तिः।

"देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः।

আর্য্যপুত্র! (এই অর্দ্ধোক্তির পর) অথবা এই ব্যবহার এখন সংশয়াপন্ন হইয়াছে। পৌরব! পূর্ব্বে আশ্রমে আপনার অত্যন্ত সদ্ব্যবহারে উচ্চ আশাপূর্ণহৃদয় এই ব্যক্তিকে সেইরূপ শপথপূর্ব্বক আশ্বস্ত করিয়া, এখন এইরূপ বাক্যে প্রত্যাখ্যান করা আপনার উচিতই হইতেছে।

(ঝ) রাজা। (কর্ণদ্বয় আবৃত করিয়া) থাম থাম।

(१) शान्तं पापम्। (२) किमीहसे जनमिमञ्च। प्रसन्नमम्भः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। भोदु, जइ परमत्थदो परपरिग्गहसङ्किणा तुए एव्वं पउत्तं, ता अहिण्णाणेण केण वि तुह आसङ्कं अवणइस्सं (१)। (ञ)

राजा। प्रथमः कल्पः (२)। (ट)

(ञ) भवतु, यदि परमार्थतः परपरिग्रहशङ्किना त्वया एवं प्रवृत्तम्, तदभिज्ञानेन केनापि तव आशङ्कामपनेष्यामि।

"समानयंस्तुल्यगुणं वधूवरम्" इत्यत्रेवात्रापि व्यपदेशमित्यस्य उद्दिश्यत्वम् आविलयितुमिति क्रियाया एव कर्म्मत्वोपपत्तिः। युक्तिस्तु तत्रैवोक्ता। सिन्धो-रचेतनत्वेन समीहाया असम्भवात् तदन्वयपक्षे समीहते इत्यत्र व्यापारे लक्षणा रथो गच्छतीत्यादिवत्। कूलं कषतीति कूलङ्कषा "सर्वकूलाभ्रकरीषेषु कषः" इति खप्रत्ययः। आर्य्या जातिः ॥२२॥

(ञ) शकु इति। भवतु मद्वाक्यनिवृत्तिरिति शेषः। परमार्थतो यथार्थतः न तु छलत इत्याशयः, परपरिग्रहशङ्किना परस्त्रीसंशयिना। प्रवृत्तमुपक्रान्तम्, तत् तदा, अभिज्ञायते अनेनेति अभिज्ञानं चिह्नं तेन। आशङ्कां मत्परिणयसन्देहम् अपनेष्यामि दूरीकरिष्यामि।

"परिग्रहः कलत्रे च मूल्यस्वीकारयोरपि" इति मेदिनी।

তীরভঙ্গকারিণী নদী যেমন নির্ম্মল জলপ্রবাহকে পঙ্কিল করিতে এবং তীরস্থিত বৃক্ষকে নিপাতিত করিতে চেষ্টা করে, তুমিও সেইরূপ আমার বংশকে কলঙ্কিত করিতে এবং আমাকে পতিত করিতে চেষ্টা করিতেছ ॥২২॥

(ঞ) শকুন্তলা। হউক, যদি আপনি বস্তুতই পরস্ত্রী সংশয় করিয়া এইরূপ আরম্ভ করিয়া থাকেন, তবে কোন চিহ্নদ্বারা আপনার সংশয় দূর করিব।

(१) अहिण्णाणेण तुह आसङ्कं। (२) उदारः कल्पः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। मुद्रास्थानं परामृश्य। हद्दी हद्दी! अङ्गुलीअअसुस्सा मे अङ्गुली। इति सविषादं गौतमीमुखमीक्षते। (ठ)

गौतमी। णूणं दे सक्कावदारे सचीतीत्थोदअं वन्दमाणाए पव्भट्टं अङ्गुलीअअं (१)। (ड)

(ठ) हा धिक् हा धिक्! अङ्गुरीयकशून्या मे अङ्गुली।

(ड) नूनं शक्रावतारे शचीतीर्थोदकं वन्दमानायाः प्रभ्रष्टमङ्गुरीयकम्।

---

(ट) राजेति। प्रथमः कल्पः अभिज्ञानप्रदर्शनं ममाशङ्कापनयने मुख्यो हेतुरित्यर्थः।

(ठ) शकु इति। मुद्रास्थानं अङ्गुरीयकधारणस्थानम्, परामृश्य परामर्शेन ज्ञात्वा। गौतमीमुखदर्शनं ततोऽङ्गुरीयकापगमकारणज्ञानार्थम्।

(ड) गौतमीति। शक्रः अवतरत्यस्मिन्निति शक्रावतारः तदाख्यो गङ्गातीरवर्त्ती कश्चिद्ग्रामः तत्र, शचीतीर्थस्य शचीनिर्म्मितघट्टस्य उदकं गङ्गाजलं वन्दमानाया अवगाहनानन्तरमष्टाङ्गं प्रणमन्त्याः, ते तव अङ्गुरीयकं प्रभ्रष्टम् अङ्गुलीतो विच्युतम्, इति नूनं निश्चितम्। तथा च राज्ञः स्थूलाङ्गुलीपरिमाणेन निर्म्मितस्य अङ्गुरीयकस्य शकुन्तलायाः कृशाङ्गुल्यां स्वभावत एव शिथिलत्वात् अष्टाङ्गं प्रणम्य हठादुत्थानवेलायामधोमुखसरलाङ्गुलीकहस्ते सञ्चालनोपस्थितेश्च तत्पतनं सम्भवपरमेव।

---

(ট) রাজা। উত্তম কল্প।

(ঠ) শকুন্তলা। (অঙ্গুরীয়ক ধারণের স্থানে হস্তামর্শন করিয়া) হায় হায়! আমার অঙ্গুলী যে অঙ্গুরীশূন্য। (এই বলিয়া বিষাদের সহিত গৌতমীর মুখের প্রতি চাহিল।)

(ড) গৌতমী। নিশ্চয়ই শক্রাবতারগ্রামে শচীতীর্থের জলকে নমস্কার করিবার সময়ে তোমার অঙ্গুরী পড়িয়া গিয়াছে।

---

(१) सक्कावआरब्भन्तरे सचीतीत्थसलिलं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सस्मितम्। इदं तावत् प्रत्युत्पन्नमतित्वं स्त्रीणाम् (१)। (ढ)

शकु। एत्थ दाव विहिणा दंसिदं पहुत्तणं। अवरं दे कधइस्सं (२)। (ण)

राजा। श्रोतव्यमिदानीं संवृत्तम् (३)। (त)

शकु। णं एक्कदिअहे वेदसलदामण्डवे णलिणीवत्त-भाअणगदं उदअं तुह हत्थे सण्णिहिदं आसी (४)। (थ)

(ण) अत्र तावत् विधिना दर्शितं प्रभुत्वम्। अपरं ते कथयिष्यामि।

(ढ) राजेति। हठादेव युक्तियुक्तोत्तरप्रयोजकबुद्धिदर्शनेन आश्चर्यवशात् सस्मित-मिति बोध्यम्। इदम् अङ्गुरीयकपतनविषयकोत्तरप्रयोजकम्, प्रतिविषयमुत्पन्ना प्रत्युत्पन्ना मतिर्यासां तासां भावः प्रत्युत्पन्नमतित्वम्। प्रत्युत्पन्नमतिप्रयुक्तमेवेदमुत्तरं न तु वास्तवमिति भावः।

(ण) शकु इति। अत्र साक्षादभिज्ञानदर्शने, विधिना प्रतिकूलदैवेन, प्रभुत्वम् अभिज्ञानहरणात्मिका क्षमता। अपरमभिज्ञानम्।

(त) राजेति। आदावभिज्ञानं द्रष्टव्यमासीत्, इदानीमभिज्ञानं श्रोतव्यं संवृत्तम्, कथयिष्यामीत्यनेन वाक्यात्मकस्यैवाभिज्ञानस्य प्रकाशादिति भावः। द्रष्टव्यात् श्रोतव्यत्वं तत्तया सोल्लुण्ठनोक्तिरियम्।

(ढ) রাজা। (ঈষৎ হাস্যের সহিত) ইহা স্ত্রীলোকদিগের প্রত্যুৎপন্নমতিত্ব।

(ণ) শকুন্তলা। এ বিষয়ে বিধাতা প্রভুত্ব দেখাইলেন। অন্য কোন বিষয় আপনাকে বলিব।

(१) इदं तत् प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते। (२)…कथयिष्ये।

(३) श्रोतव्यमिदानीम्।

(४) शकुन्तला। ननु एकस्मिं दिवसे नवमालिकामण्डपे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । शृणुमस्तावत् । (द)

शकु । तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअ-पोदओ उवट्ठिदो । तदो तुए अअं दाव पढ़मं पिअदु त्ति अणुकम्पिणा उवच्छन्दिदो उदएण । ण उण सो अपरिचिदस्स दे हत्थादो उदअं उवगतो पादुं । पच्चा तस्सिं ज्जेव उदए मए गहिदे किदो तेण पणओ । एत्थन्तरे विहसिअ तुए भणिदं, सव्वो सगन्धे वीससदि, जदो दुवे वि तुम्हे आरस-ण्णओ त्ति (१) । (ध)

(थ) ननु एकदिवसे वेतसलतामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितमासीत् ।

(ध) तत्चणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । ततस्त्वया अयं तावत् प्रथमं पिबत्विति अनुकम्पिना उपच्छन्दित उदकेन । न पुनः सः अपरि-चितस्य ते हस्तादुदकमुपगतः पातुम् । ततस्तस्मिन्नेवोदके मया गृहीते कृतस्तेनाप्रणयः । अत्रान्तरे विहस्य त्वया भणितम्, सर्वः स्वगन्धे विश्वसिति, यतो द्वे एव युवामारण्यके इति ।

(थ) शकु इति । नलिनीपत्रं पद्मलतापत्रमेव भाजनं तत्र गतं स्थितम् । सन्निहितं सम्यक् स्थापितम् ।

(द) राजेति । तावत् सर्वमेव तव वाक्यं शृणुमः, न पुनरन्यत् किञ्चित् भावयाम इत्यर्थः । अतो विवक्षितं सर्वमेव ब्रूहीत्याशयः ।

(ত) রাজা । এখন শ্রোতব্য হইয়া দাঁড়াইল ।

(থ) শকুন্তলা । একদিন বেত্রলতামণ্ডপে আপনার হাতে পদ্ম-পাতার পাত্রে জল ছিল ।

(দ) রাজা । সমস্তই শুনিতেছি ।

(१) ण उणादे अपरिचआदो हत्थब्भासं उवगओ । पच्चा तस्सिं एव्व मए गहिए सलिले पेण किदो पणओ । तदा तुमं इत्थं पहसिओ सि, सव्वो सगन्धेसु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা । আভিস্তাবদাত্মকার্য্যপ্রবর্ত্তিনীভির্মধুরাভিরনৃতবাগ্‌ভিরাকৃষ্যন্তে বিষয়িণঃ (১) । (ন)

(ধ) অত্র ইতি । পুত্রকৃতকঃ কৃত্রিমপুত্রভূতঃ, দীর্ঘৌ অপাঙ্গৌ নেত্রপ্রান্তৌ যস্য সঃ মৃগপোতকো হরিণশিশুঃ । অনুকম্পিনা দয়াশালিনা ত্বয়া । অয়ং মৃগপোতকঃ উদকেন তেন জলেন, উপচ্ছন্দিতঃ পানায় অভ্যর্থিতঃ । উদকং পাতুং ন উপযন্নিত্যন্বয়ঃ । তেন মৃগপোতকেন । প্রণয়ঃ পানায় প্রার্থনা । স্বগন্ধে আত্মীয়বর্গে । যুবাং ত্বঞ্চ মৃগপোতকশ্চেত্যর্থঃ, আরণ্যকৌ বনবাসিন্যৌ ; উভয়োরেব কারণ্যবাসাৎ ত্বমস্যাত্মীয়েতি ভাবঃ । ইতি ভণিতমিত্যন্বয়ঃ ।

অত্র অতীতকার্য্যাণাং সংগৃহীতত্বাদাদানং নাম বিমর্শসন্ধ্যঙ্গম্—"কার্য্যসংগ্রহ আদানম্" ইতি দর্পণলক্ষণাৎ । উৎকীর্ত্তনং নাম নাট্যালঙ্কারঃ । তথা তত্রৈব—;

"ভূতকার্য্যাখ্যানমুৎকীর্ত্তনং মতম্ ।"

"প্রণয়ঃ প্রেম্ণি বিশ্রম্ভে যাচ্ঞাপ্রসরয়োরপি ।" ইতি মেদিনী ।

(ন) রাজেতি । আত্মকার্য্যে প্রবর্ত্তয়িতুং পুরুষান্ ব্যাপারয়িতুং শীলং যাসাং তাভিঃ, মধুরাভিঃ প্রীতিকরীভিঃ, আভিঃ ঈদৃশীভিরিত্যর্থঃ, অনৃতবাগ্‌ভির্মিথ্যাবাক্যৈঃ বিষয়িণ ইন্দ্রিয়ার্থাসক্তাঃ পুরুষাঃ, আকৃষ্যন্তে আকৃষ্য স্ববশং নীয়ন্তে ; অত ঈদৃশ্যো বাচ এব পুরুষাণাং সর্ব্বানর্থমূলানি ইতি ভাবঃ ।

---

(ধ) শকুন্তলা । সেই সময়ে আমার কৃত্রিমপুত্র দীর্ঘাপাঙ্গনামে সেই হরিণশিশুটী উপস্থিত হইল ; তাহার পর "এ প্রথম পান করুক" এই কথা বলিয়া আপনি দয়াবশতঃ জলপান করিবার জন্য তাহাকে অভ্যর্থনা করিলেন ; কিন্তু অপরিচিত বলিয়া আপনার হাত হইতে সে জল পান করিতে গেল না । তার পর, সেই জলই আমি গ্রহণ করিলে, সে তাহা পান করিবার জন্য প্রার্থনা করিল । এই সময়ে আপনি হাস্য করিয়া বলিলেন—"সকলেই আত্মীয়বর্গে বিশ্বাস করিয়া থাকে ; যে হেতু, তোমরা দুইজনই বনচর ।"

---

(১) এবমাদিভিরাত্মকার্য্যনিবর্ত্তনীনামনৃতময়বাঙ্মধুভিরাকৃষ্যন্তে বিষয়িণঃ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

গৌতমী। মহাভাঅ! ণারিহসি এব্বং মন্তিদুং। তবোবণসংবড্ডিদো ক্খু অঅং জণো অণভিণ্ণো কইতবস্স। (প)

রাজা। অয়ি তাপসবৃদ্ধে! (ফ)

স্ত্রীণামশিক্ষিতপটুত্বমমানুষীণাং
সংদৃশ্যতে, কিমুত যাঃ পরিবোধবত্যঃ।
প্রাগন্তরীক্ষগমনাৎ স্বমপত্যজাত-
মন্যৈর্দ্বিজৈঃ পরভৃতাঃ কিল পোষয়ন্তি (১) ॥২৩॥

---

(প) মহাভাগ! নার্হসি এবং মন্ত্রয়িতুম্। তপোবনসংবর্দ্ধিতঃ খল্বয়ং জনঃ অনভিজ্ঞঃ কৈতবস্য।

---

(প) গৌতমীতি। এবং মন্ত্রয়িতুম্ ইত্থং বক্তুম্। তত্র কারণমাহ—অয়ং জনঃ শকুন্তলা খলু, তপোবনে কৈতবাদিশূন্যে আশ্রমে সংবর্দ্ধিতঃ অতএব কৈতবস্য কপট-ব্যবহারস্য অনভিজ্ঞঃ। অতএবাস্য পূর্ব্বোক্তিজাতং ন মিথ্যেত্যাশয়ঃ।

(ফ) রাজেতি। তাপসী চাসৌ বৃদ্ধা চেতি তাপসবৃদ্ধা তৎসম্বোধনম্।

স্ত্রীণামিতি। অমানুষীণাং মানুষীভিন্নানামপি, স্ত্রীণাং স্ত্রীজাতেঃ, অশিক্ষিতপটুত্বম্ অনুপদিষ্টনৈপুণ্যং স্বাভাবিকচাতুর্য্যমিত্যর্থঃ, সংদৃশ্যতে যাঃ পরিবোধবত্যঃ সর্ব্বতো-

---

(ন) রাজা। স্ত্রীলোকেরা নিজের কার্য্যে প্রবৃত্ত করাইবার উপযোগী এই জাতীয় মিথ্যা মধুর বাক্যে বিষয়ী লোককে আকর্ষণ করিয়া থাকে।

(প) গৌতমী। মহাশয়! আপনি এরূপ বলিতে পারেন না। কারণ, এই ব্যক্তি তপোবনে বর্দ্ধিত হইয়াছে; সুতরাং কপটতা জানে না।

(ফ) রাজা। ওহে বৃদ্ধতাপসি!

---

(১) অমানুষীষু প্রতিবোধবত্যঃ অন্যৈর্দ্বিজৈঃ খলু।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। सरोषम्। अणज्ज! अत्तणो हिअआणुमाणेण किल सव्वं पेक्खसि। को णाम अस्सो धम्मकञ्चुअव्ववदेसिणो तिणच्छण्णकूवोवमस्स तुह अणुआरी भविस्सदि (१)। (व)

(व) अनार्य्य! आत्मनो हृदयानुमानेन किल सर्वं प्रेक्षसे। को नाम अन्यो धर्मकञ्चुकव्यपदेशिनस्तृणच्छन्नकूपोपमस्य तव अनुकारी भविष्यति।

भावेन ज्ञानशालिन्यः मानुष्य इत्यर्थः, अशिक्षितपटुत्वं ताः किमुत वक्तव्यं तात्पर्य्यम्। तथाहि परैः काकैः भृता बाल्यकाले पोषिता इति परभृताः कोकिलाः अन्तरीक्षगमनात् अपत्यजातस्यैव आकाशगमनशक्त्याविर्भावात्, प्राक् पूर्वं, स्वकीयम्, अपत्यजातं सन्तानसमूहम्, अन्यद्विजैरपरपक्षिभिः, पोषयन्ति वृद्धिं नयन्ति किलेति लोकवार्त्तायाम्। तेन पक्षिणीरूपायाः कोकिलाया ईदृशचातुर्यदर्शनात् मानुषीरूपायाः शकुन्तलायास्तपोवनवर्द्धितत्वेऽपि सङ्कुतानृतवादित्वरूपं पटुत्वं सम्भवतीत्यर्थे कः सन्देह इति भावः।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः पूर्वार्द्धे अर्थापत्तिश्च, अनयोः प्रधानभावेनाङ्गाङ्गिभावात् सङ्करः। तथा काकैरेव कोकिलशावकपोषणदर्शनात् अन्यैर्यादर्शनात् काकैरिति पक्षिविशेषे वक्तव्ये अन्यद्विजैरिति पक्षिसामान्याभिधाने विशेषे अविशेषाख्यदोषः, 'काकैः पिकाः किल रहः परिपोषयन्ति' इति पाठेन परिहरणीयः।

"दन्तविप्राण्डजा द्विजाः" "वनप्रियः परभृतः कोकिलः पिक इत्यपि" इति चामरः।

वसन्ततिलका वृत्तम् ॥२२॥

পশু-পক্ষিপ্রভৃতি মনুষ্যভিন্ন স্ত্রীজাতিরও স্বাভাবিক চাতুর্য্য দে যায়; সুতরাং সকল বিষয়ে বুদ্ধিশালিনী মনুষ্যজাতীয় স্ত্রীর কথা কি বলিব। কোকিলপক্ষিণীগণ, উড়িবার শক্তি জন্মিবার আপনাদের সন্তানগুলিকে, অন্য পক্ষীদ্বারা পরিপোষণ করিয়া থাকে।

(१) धम्मकञ्चअप्पवेसिणो अण्णकिदं पड़िवज्जिस्सइ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । आत्मगतम् । वनवासादविभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते । तथाहि—(१) (भ)

(ब) शकु इति । अनार्य्य ! अभद्र ! हे निकृष्ट ! इति यावत्, हृदयानुमानेन आत्मनो हृदयं यथा कपटतापूर्णम् अन्येषां हृदयमपि तथैव इत्यनुमानेनेत्यर्थः, सर्वं जनम्, प्रेक्षसे कपटतापूर्णहृदयं मन्यसे । अतएव स्त्रीणामित्यादिना, शुद्धहृदयां मामपि कैतविनीमुक्तवानिति भावः । अन्यो जनः, धर्म्म एव कञ्चुकी वहिरङ्गावरणं यस्य स चासौ व्यपदेशः अन्तश्छलमस्यास्तीति व्यपदेशी चेति तस्य वहिर्धर्मावरणेनावृतस्य अन्तस्तु परप्रतारणादिपापशालिन इत्यर्थः, अतएव तृणैश्छन्न आवृतमुखो यः कूपः स एवोपमा यस्य तस्य तव, अनुकारी सदृशकार्य्यविधायीभविष्यति अपि तु कोऽपि नेत्यर्थः । "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति न्यायात् सर्व एव राज्ञोऽनुकरणं कुर्वन्ति, तव तु परप्रतारकत्वान्न कोऽप्यनुकरणं करिष्यतीति भावः ।

अत्र क्रोधावेशेन महागुरोः पत्युर्मर्य्यादालङ्घनात् द्रवो नाम विमर्शसन्ध्यङ्गम्—"द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा" इति दर्पणलक्षणात् ।

(भ) राजेति । पुनः किन्तु अत्रभवत्याः शकुन्तलायाः, कोपः वनवासात् आबाल्या-द्वनवासेन अविदितनागररमणीस्वभावादित्यर्थः, अविभ्रमः कुटिलदृष्टिपातादिविलास-विहीनः । अतएव नागररमणीस्वभावमात्रवेदिना मया अपूर्व एवायं कोपो दृश्यत इति भावः । तदविभ्रमत्वं दर्शयितुमाह तथाहीति ।

---

(ব) শকুন্তলা । ( ক্রোধের সহিত ) অভদ্র ! তুমি আপনার চিত্তের অনুমানে সকল লোককে দেখ । তোমার বাহিরে ধর্ম্মের আবরণ, আর হৃদয় কপটতাপূর্ণ ; সুতরাং তুমি তৃণাচ্ছাদিত কূপের তুল্য ; অতএব অন্য কোন্ ব্যক্তি তোমার অনুকরণ করিবে ? ।

(ভ) রাজা । ( স্বগত ) বনবাসবশতঃ ইহার কিন্তু কোপে কোন বিলাসের চিহ্ন দেখা যাইতেছে না । যথা—

---

(१) सन्दिग्धबुद्धिं मां कुर्वन् अकैतव इवास्याः कोपो लक्ष्यते । तथाह्यनया ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तिर्य्यगवलोकितं भवति चक्षुरालोहितं
वचोऽतिपरुषाक्षरं न च पदेषु सङ्गच्छते ।
हिमार्त्त इव वेपते सकल एव विम्बाधरः
प्रकामविनते भ्रुवौ युगपदेव भेदं गते (१) ॥२४॥

नेति । अवभवत्या इति गद्यस्थं पदमत्रापि सम्बन्धनीयम् । तेन अवभवत्याः शकुन्तलायाः, अवलोकितं दृष्टिः, न तिर्य्यक् न तिर्य्यक् प्रसृतं भवति ; नागररमण्याः कोपे तु तद्दृष्टिः तिर्य्यक् प्रसृतैव स्यादिति भावः, चक्षुः, आलोहितं सम्पूर्णरक्तवर्णं भवति ; नागररमण्यास्तु न तथेत्याशयः ; वचः अनार्य्य इत्यादि वाक्यम्, अतिपरुषाणि नितान्तनिष्ठुराणि अक्षराणि वर्णा यस्य तत् तादृशम् ; च किन्तु, पदेषु लक्ष्येषु पक्षान्तु, न सङ्गच्छते मिथ्यात्वान्न युज्यते ; नागररमणीमुखात्तु ईदृशं परुषाक्षरं वच एव न निर्गच्छति, सत्यत्वाल्लक्ष्येषु च सङ्गच्छत इत्यभिप्रायः । हिमार्त्त इव तुषारेण पीड़ित इव सन्, सकल एव सम्पूर्णावयव एव न पुनर्नागररमणीवत् ओष्ठोपरिभागमात्रमिति एवशब्दस्यार्थो भावार्थश्च, विम्बाधरः विम्बफलवत् रक्तवर्णोष्ठः, वेपते कम्पते । तथा प्रकामविनते पर्य्याप्तावनते, भ्रुवौ भ्रूयुगलम्, युगपदेव एकदैव, भेदं भङ्गं वक्रतामिति यावत्, गते प्राप्ते ; नागररमण्याः कोपे तु तदीयभ्रूयुगलं क्रमिकमेव भेदं गच्छति, न तु युगपदिति भावः ।

अत्र कोपस्य अविभ्रमत्वप्रतिपादनकार्य्यं प्रति अतिर्य्यगवलोकनादिबहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः, हिमार्त्त इवेति क्रियोत्प्रेक्षा विम्बाधर इति च लुप्तोपमा, इत्येतेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः ; तेन च नागररमणीकोपसम्बन्धी व्यतिरेको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ।

"पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ।

पृथ्वी वृत्तम्—"जसौजसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥२४॥

---

চক্ষু আরক্তবর্ণ হইয়াছে, কিন্তু পার্শ্বের দিক্ দৃষ্টি চলিতেছে না;

---

(१) क्वचिदेष श्लोको नास्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि च सन्दिग्धबुद्धिं मामधिकृत्य अकैतव इवास्याः कोपः सम्भाव्यते । तथा ह्यनया—(म)

मय्येवमस्मरणदारुणचित्तवृत्तौ
वृत्तं रहःप्रणयमप्रतिपद्यमाने ।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य (१) ॥२५॥

---

(म) अपि चेति । सन्दिग्धा परिणये संशयापन्ना बुद्धिर्यस्य तम् । अधिकृत्य विषयीकृत्य विद्यमानाया इत्यध्याहारान्नैककर्त्तृकत्वहानिः, अस्याः शकुन्तलायाः, कोपः, अकैतव इव छलरहित इव । अनया शकुन्तलया श्लोकस्थाया भग्नमिति क्रियायाः कर्त्तृपदमेतत् ।

मय्येवमिति । एवम् अनेन प्रकारेण, अस्मरणेन भूतपूर्ववृत्तान्तानामस्मृत्या दारुणा चित्तवृत्तिर्यस्य तस्मिन् तथोक्ते मयि, रहसि निर्जनस्थाने, वृत्तं सञ्जातम्, प्रणयं प्रणय-घटितपरिणयादिकम्, अप्रतिपद्यमाने अस्वीकुर्वति सति, अतिरुषा नितान्तक्रोधेन, अतिलोहिते अत्यन्तरक्तवर्णे अक्षिणी नेत्रद्वयं यस्यास्तया, अनया शकुन्तलया, कुटिलयो-र्वक्रयोः, भ्रुवोः, भेदात् द्वैधीकरणात् स्मरस्य मामुद्दिश्य प्रहर्त्तुः कामदेवस्य, शरासनं धनुः, भग्नमिव, यथा पुनः प्रहारसम्भावना न स्यादिति भावः ।

एव भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः ।

रह इत्यव्ययम् "रहश्चोपांशु चालिङ्गे" इत्यमरकोषात् । वसन्ततिलका वृत्तम् ॥२५॥

---

বাক্যের অক্ষরগুলি অতিনিষ্ঠুর, তাহা কিন্তু আমার উপরে সঙ্গত হইতেছে না ; সম্পূর্ণ অধরবিম্বই হিমপীড়িত হইয়াই যেন কাঁপিতেছে এবং অত্যন্ত অবনত ভ্রূযুগল, এক সময়েই বক্রতা প্রাপ্ত হইয়াছে ॥২৪॥

(ম) আরও, আমার বুদ্ধি সংশয়াপন্ন হওয়ায় আমাকে লক্ষ্য করিয়া ইহার ক্রোধ যেন কপটতাবিহীন বলিয়া মনে করিতেছি। যথা:—

---

(१) मय्येव विस्मरणदारुणचित्तवृत्तौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रकाशम्। भद्रे! प्रथितं दुष्मन्तस्य चरितम्, प्रजास्वपीदं न दृश्यते (१)। (य)

शकु।

तुम्हे ज्जेव पमाणं जाणध धम्मत्थिदिञ्च लोअस्स।
लज्जाविणिज्जिदाओ जाणन्ति ण किम्पि महिलाओ (२) ॥२६॥

युयमेव प्रमाणं जानीथ धर्म्मस्थितिञ्च लोकस्य।
लज्जाविनिर्जिता जानन्ति न किमपि महिलाः ॥२६॥

(य) प्रकाशमिति। प्रथितं साधुतया प्रसिद्धम्; अतो लोकनियन्ता राज्ञा दुष्मन्तेन परस्त्री संग्रहीतुं न शक्यत इत्याशयः। किञ्च, इदं परस्त्रीग्रहणम्, प्रजास्वपि न दृश्यते; अतस्तत्प्रजानियन्तुः राज्ञो मम इदं कुतोऽपि न सम्भवतीति भावः।

युयमिति। यूयं लोकनियन्तारो राजान एव, प्रमाणं पुण्यपापज्ञापकं शास्त्रम्, लोकस्य धर्म्मस्थितिं धर्म्ममर्य्यादाञ्च जानीथ। किन्तु लज्जया विनिर्जिताः पराभूताः, महिलाः स्त्रियः, किमपि न जानन्ति जानन्त्योऽपि लज्जाभिभवादेव किमपि वक्तुं न शक्नुवन्तीत्यर्थः। तथा च अहमपि प्रमाणं धर्म्मस्थितिञ्च जानामि; एवञ्च यथा

স্মরণ না হওয়ায় আমার মনোবৃত্তি, উহার পক্ষে দারুণ হইয়া দাঁড়াইয়াছে এবং নির্জনে যে প্রণয় জন্মিয়াছিল, তাহা আমি স্বীকার করিতেছি না; সুতরাং আমার প্রতি ক্রোধবশতঃ আরক্তনয়না এই রমণী, বক্র ভ্রূযুগলের দ্বৈধবশতঃ, কামদেবের ধনু যেন ভাঙ্গিয়া ফেলিয়াছে ॥২৫॥

(য) (প্রকাশ্যে) ভদ্রে! দুষ্মন্তের চরিত্র, লোকে প্রসিদ্ধই আছে; কিন্তু এ কার্য্য, প্রজাদের মধ্যেও দেখা যায় না।

(१) पुरोहितः। भद्रे! चरितम्, तथापीदं न लक्ष्यते।

(२) क्वचित् पद्यमिदं नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुट्ठु दाव अत्तच्छन्दाणुचारिणी गणिआ समुव-ट्ठिदा (१)। (र)

गौतमी। जादे! इमस्स पुरुवंसपच्चएण मुहमहुणो हिअअविसस्स हत्थं समुवगदासि (२)। (ल)

शकु। पटान्तेन मुखमाच्छाद्य रोदिति (३)। (व)

(र) सुष्ठु तावदात्मच्छन्दानुचारिणी गणिका समुपस्थिता।

(ल) जाते! अस्य पुरुषंशप्रत्ययेन मुखमधोः हृदयविषस्य हस्तं समुपगतासि।

परस्त्रीग्रहणे गुरुतरं पापम्, तथा आत्मस्त्रीपरित्यागेऽपीति जानत्यपि लज्जावशादेव तद्वक्तुं न शक्नोमीति भावः।

अत्र जानन्तीत्येकया क्रियया प्रमाणधर्म्मस्थित्योः कर्म्मतयाभिसम्बन्धात् तुल्ययोगिता, अप्रस्तुतात् महिलासामान्यात् प्रस्तुतस्य शकुन्तलारूपमहिलाविशेषस्य प्रतीतेरप्रस्तुतप्रशंसा च, अनयोः परस्परनिरपेक्षतया संसृष्टिः।

आर्य्या जातिः॥२६॥

(र) सुट्ठु इति। सुष्ठु भद्रं तव मननमित्यर्थः। आत्मनश्छन्देन अभिप्रायेण अनुचरतीति सा स्वेच्छाचारिणीति तात्पर्य्यम्, गणिका वेश्या। अहमिति शेषः। साक्षेपोक्तिरियम्। तेन च "उपकृतं बहु तत्र किमुच्यते" इत्यादिदर्पणोदाहरणवत् विपरीतलक्षणया नियतगुरुजनमतानुचारिणी परमपतिव्रतैवाहं तथापि तदन्यथा मननात् त्वमतीव निर्बोधः प्रतारको वेति भावः।

শকুন্তলা। আপনারাই শাস্ত্র এবং লোকের ধর্ম্মের মর্য্যাদা জানেন; কিন্তু লজ্জাভিভূত স্ত্রীলোকেরা কিছুই জানে না।২৬।

(র) ভাল, স্বেচ্ছাচারিণী বেশ্যা উপস্থিত হইয়াছে!।

(१) शकुन्तला। सुट्ठु दाव अत्तसच्छन्दचारिणी किद म्हि, जा अहं इमस्स पुरुवंसप्पहवएण मुहमहुणो हिअअट्ठिदविसस्स हत्थभासं उवगदा। पटान्तेन मुखमावृत्य रोदिति। (२—३) क्वचिदिमौ पाठौ न स्तः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार्ङ्ग। इत्थमप्रतिहतं चापल्यं दहति (१)। (श)

अतः परीक्ष्य कर्त्तव्यं विशेषात् सङ्गतं रहः।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥२७॥

(ल) गौतमीति। पुरुवंशप्रत्ययेन पुरुवंशोत्पन्नत्वविश्वासेन, मुखे मधु मधुवत् मधुरं वचनं यस्य तस्य, हृदये विषं विषवत् परघातिकरो भावो यस्य तस्य महाप्रतारकस्येत्यर्थः, अस्य दुष्मन्तस्य, हस्तं समुपगतासि परिणयादधीनतां प्राप्तासि। सानुतापोक्तिरियम्।

(व) शकु इति। पटान्तेन वस्त्राञ्चलेन।

(श) शार्ङ्गेति। इत्थमीदृशम्, न प्रतिहतं गुरुजनभयादिना न व्याहतमिति अप्रतिहतम्, चापल्यं चञ्चलता चापल्यप्रयुक्तम् एवमज्ञातकुलशीलेषु कन्याया आत्मदानमित्यर्थः, दहति आत्मीयजनमनुतप्तं करोति।

अत इति। अतः कारणात् उक्तचापल्यस्य दाहकत्वादित्यर्थः, विशेषात् कुलशीलादिविशेषविशेषभावमाश्रित्य, परीक्ष्य साधुतया अवधार्य, रहो निर्जनस्थाने, सङ्गतं पुरुषेण सह गान्धर्वविधिना सम्मेलनम्, कर्त्तव्यं कन्ययेति शेषः। कुत इत्याह अज्ञातं सदसत्तया नावगतं हृदयं मनो येषां तेषु तादृशेषु पुरुषेषु, सौहृदं प्रणय, एवम् एतद्वृत्तान्त इव, वैरीभवति वैरस्वरूपं जायते।

---

(ল) গৌতমী। বৎসে! ইহার মুখে মধু, আর হৃদয়ে বিষ; তুমি কিন্তু পুরুবংশীয় বিশ্বাসে ইহার হস্তগত হইয়াছ।

(ব) শকুন্তলা। (বস্ত্রাঞ্চলদ্বারা মুখ আবৃত করিয়া রোদন করিতে লাগিল।)

(শ) শার্ঙ্গরব। এইরূপ অনিবারিত চপলতা আত্মীয়জনকে দগ্ধ করে।

অতএব বিশেষরূপে পরীক্ষা করিয়া, নির্জন-সম্মিলন করা উচিত।

---

(१) शार्ङ्गरवः। इत्थमात्मकृतं परिहृतं चापल्यं दहति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। अयि भोः! किमत्रभवतीप्रत्ययादेवास्मानसंयुतदोषैरधिक्षिपन्ति भवन्तः (१)। (ख)

शार्ङ्ग। सासूयम्। श्रुतं भवद्भिरधरोत्तरम्?। (ग)

आजन्मनः शाठ्यमशिक्षितो यः
तस्याप्रमाणं वचनं जनस्य।
पराभिसन्धानमधीयते यैः
विद्येति ते सन्तु किलाप्तवाचः ॥२८॥

अत्र पूर्वार्द्धार्थं प्रति पराङ्गगतवाक्यार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। अवैरं वैरं भवतीति वैरीभवति अभूततद्भावे च्विप्रत्ययः ॥२७॥

(ख) राजेति। अयीत्यनुनयसूचकमव्ययम्। अत्रभवत्या मान्यायाः शकुन्तलायाः, प्रत्ययादेव विश्वासादेव, न पुनःप्रमाणान्तरस्याप्यपेक्षणादित्येवकारार्थः, असंयुतदोषैरकृतदोषैः, अस्मान् "वाऽस्मदय" इति बहुवचनात् मामित्यर्थः, अधिक्षिपन्ति प्रतारकत्वेन निन्दन्ति। वस्तुतः अन्यद्वारा गर्भमुत्पाद्य मयि तदुत्पादकत्वारोपणादियं शकुन्तलैव प्रतारिकेति भावः।

(ग) शार्ङ्गेति। भवद्भिः पुरोहितादिसभ्यगणैः अधरोत्तरं निकृष्टं प्रतिवचनम्, श्रुतं किमिति काकुः।

"अधरस्तु पुमानोष्ठे हीनेऽनूर्द्ध्वे च वाच्यवत्" इति मेदिनी।

कारण, অজ্ঞাতহৃদয় ব্যক্তির সহিত সৌহার্দ্দ করিলে, তাহা এইরূপ শত্রুতাতেই পরিণত হয় ॥২৭॥

(খ) রাজা। মহাশয়! আমি কোন দোষ করি নাই, তথাপি আপনারা ইঁহার বিশ্বাসেই আমাকে নিন্দা করিতেছেন কেন?।

(গ) শার্ঙ্গরব। (অসূয়ার সহিত) আপনারা নিকৃষ্ট উত্তর শুনিলেন?।

(১) অস্মান্ সংযুতদোষাক্ষরৈঃ ক্ষিপথ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । अहो सत्यवादिनः ! अभ्युपगतं तावदस्माभिः एवंविधा एव वयम्, किं पुनरिमामभिसन्धाय लभ्यते (१) । (ह)

अथवेतरत्वं प्रतिपादयितुमाह आजन्मन इति । यो जनः, आजन्मनो जन्मावधि, शाठ्यं शठतां परप्रतारणामिति यावत्, अशिक्षितः केनापि नाध्यापितः, तस्य जनस्य शकुन्तलाया इत्यर्थः, वचनं वाक्यम्, अप्रमाणं प्रमाज्ञानजनकं न निश्चयकारणं नेत्यर्थः। किन्तु यैर्जनैः, विद्या इति कृत्वा विद्यात्वेन विभाव्येति तात्पर्य्यम्, परेषां जनानाम्, अभिसन्धानं प्रतारणा, अधीयते शिक्ष्यते, ते जनाः, किल आप्ताः प्रत्ययिता विश्वासयोग्या वाचो वाक्यानि येषां ते तादृशाः सन्तु भवन्तु । सोल्लुण्ठनोक्तिरियम् । तथा च आजन्मवनवासिन्यै शकुन्तलायै प्रतारणाशिक्षा केनापि न दत्ता ; अतएव तस्या वचनमेव प्रमाणम् । किन्तु भवन्तो विद्यारूपेण प्रतारणां शिक्षन्ते, तेन च भवतां वचनं कुतोऽपि न प्रमाणम् । अतएव शकुन्तलैव सत्यं वदति न पुनर्भवानिति भावः ।

अत्र तस्य जनस्य वचनमप्रमाणम्, अपि तु कथमपि न इति, तथा ते आप्तवाचः सन्तु, अपि तु कुतोऽपि न इति चार्थान्तरद्वयापतनादर्थापत्तिद्वयं तयोश्च मिथो निरपेक्षतया संसृष्टिः । तथा अशिक्षितं इत्यत्र प्रधानस्य नञर्थस्य समासे गुणीभावात् विधेयाविमर्श-दोषः, स च 'शाठ्यं न जन्मावधि शिक्षितो यः' इति पाठेन समाधेयः ।

"वञ्चनञ्चाभिसन्धानं व्यलीकञ्च प्रतारणम्" इति हेमचन्द्रः । "आप्तः प्रत्ययितस्त्रिषु" इत्यमरः ।

उपजातिर्वृत्तम् ॥२८॥

(ह) राजेति । अहो सत्यवादिन इत्यपि सोल्लुण्ठनं सम्बोधनमिति बोध्यम्। वयम्, एवंविधा एव भवदुक्तप्रकारा एव परप्रतारणापरायणा एवेत्यर्थः, इति तावदस्माभिः अभ्युपगतं स्वीकृतम् । पुनः किन्तु, इमां तपस्विनीं शकुन्तलाम्, अभिसन्धाय प्रतार्य,

যাহাকে জন্ম হইতেই কেহ শঠতা শিখায় নাই, সেই ব্যক্তির বাক্য হইল অপ্রমাণ, আর যাঁহারা বিদ্যা মনে করিয়া, পরপ্রতারণা শিখিয়াছেন, তাঁহারা হউন সত্যবাদী ! ॥২৮॥

(१) भोः ! सत्यवादिन् ! अभ्युपागतं तावदस्माभिरेवं । किं पुनः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार्ङ्ग°। विनिपातः। (च)

राजा। विनिपातः पौरवैर्लभ्यत इत्यश्रद्धेयमेतत् (१)। (क)

किं फलम्, लभ्यते, अपि तु किमपि नेत्यर्थः। तथा च ये परान् प्रतारयन्ति, ते किञ्चित् फलमुद्दिश्यैव प्रतारयन्ति; एवञ्च निरीहायाः शकुन्तलायाः प्रतारणे कस्यापि फलस्य लाभासम्भवात् प्रतारणाया अप्यसम्भव एवेति भावः।

(च) शार्ङ्गेति। विनिपातो निपातः विध्वंस इति यावत्, इमामभिसन्धाय लभ्यत इत्यन्वयः। तथा च निरीहायाः शकुन्तलायाः प्रतारणात् तत्पापेनात्मनो निपात एव भविष्यतीति भावः।

"विनिपातो निपाते स्यात् दैवादिव्यसने पुमान्" इति मेदिनी।

पूर्ववाक्यमारभ्य एतदन्तसन्दर्भे अक्षमा नाम नाट्यालङ्कारः। यथा दर्पणे—

"अक्षमा सा परिभवः स्वल्पोऽपि नाभिसह्यते।"

(क) राजेति। पौरवैः महापुण्येनैव पुरुवंशोत्पन्नैः विनिपातो लभ्यते इत्येतत् अश्रद्धेयम् अविश्वास्यम्। तथा च महापुण्येनैव पुरुवंशे जन्म लभ्यते। एवञ्च निरीहजनं प्रतारयतापि पुरुवंशजातेन जनेन विनिपातो न लभ्यत एव तत्-प्रतारणाजनितपापापेक्षया स्वीत्पत्तिप्रयोजकपुण्यस्यैव बलवत्त्वात् तस्यैव च विनिपात-निवर्त्तकत्वादित्याशयः।

अत्र गुरुभूतस्य पूर्वपुरुषस्य पुरोः कीर्त्तनात् प्रसङ्गो नाम विमर्शसन्ध्यङ्गम्—"प्रसङ्गो गुरुकीर्त्तनम्" इति दर्पणलक्षणात्।

---

(ছ) রাজা। ওহে সত্যবাদিগণ! আমি না হয় স্বীকার করিলাম যে, আমরা এইরূপই (পরপ্রতারক); কিন্তু এই অবলাকে প্রতারিত করিয়া কি ফল লাভ করা যাইতে পারে?।

(চ) শার্ঙ্গরব। নিপাত।

(ক) রাজা। পুরুবংশীয়েরা নিপাত পাইবে একথা বিশ্বাস করা যায় না।

---

(१) राजा। विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयमेतत्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

শার্ঙ্গ। ভো রাজন্! কিমত্রোত্তরৈঃ। অনুষ্ঠিতো গুরু-
নিয়োগঃ, সম্প্রতি প্রতিনিবর্ত্তামহে বয়ম্ (১)। (খ)

তদেষা ভবতঃ পত্নী ত্যজ বৈনাং গৃহাণ বা।
উপযন্তুর্হি দারেষু প্রভুতা সর্ব্বতোমুখী (২) ॥২৯॥

গৌতমি! গচ্ছাগ্রতঃ। ইতি সর্ব্বে প্রস্থিতাঃ (৩)। (গ)

---

(খ) শার্ঙ্গেতি। অত্র ভবদ্বচনবিষয়ে, উত্তরৈঃ অস্মাকং প্রতিবচনৈঃ, কিং ফলম্, অপি তু কিমপি নেত্যর্থঃ। অতস্তস্মাদ্বিরম্যত ইতি ভাবঃ। গুরোঃ কণ্বস্য নিয়োগ আদেশঃ, অনুষ্ঠিতঃ অস্মাভিঃ সম্পাদিতঃ। প্রতিনিবর্ত্তামহে আশ্রমং প্রতিগচ্ছামঃ।

তদিতি। এষা শকুন্তলা, ভবতঃ পত্নী, গান্ধর্ব্বেণ বিবাহবিধিনা পরিণীতত্বাদিতি ভাবঃ। তত্তস্মাৎ, এনাং শকুন্তলাম্, ত্যজ বা গৃহাণ বা। হি যস্মাৎ, উপযন্তুঃ পরিণেতুঃ, দারেষু ভার্য্যায়াম্, সর্ব্বতোমুখী সর্ব্বপ্রকারা, প্রভুতা ক্ষমতা বর্ত্তত ইতি শেষঃ। অত্র সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসোঽলঙ্কারঃ ॥২৯॥

(গ) গৌতমীতি। অগ্রতঃ সর্ব্বপুরতঃ। প্রস্থিতাঃ প্রস্থানমারভন্ত।

---

(খ) শার্ঙ্গরব। রাজা! এবিষয়ে উত্তর দিয়া কি হইবে। আমরা গুরুর আদেশ পালন করিয়াছি, এখন ফিরিয়া যাইতেছি।

অতএব এই আপনার পত্নী; আপনি ইহাকে ত্যাগ করিতেও পারেন, গ্রহণ করিতেও পারেন। কারণ, ভার্য্যার প্রতি ভর্ত্তার সর্বপ্রকার প্রভুত্ব রহিয়াছে ॥২৯॥

(গ) গৌতমি! আগে চলুন। (এই বলিয়া প্রস্থান করিতে লাগিলেন।)

---

(১) শারদ্বতঃ। শার্ঙ্গরব! কিমুত্তরেণ। অনুষ্ঠিতো গুরোঃ সন্দেশঃ প্রতিনিবর্ত্তামহে বয়ম্। রাজানং প্রতি।

(২) ভবতঃ কান্তা। উপপন্না হি দারেষু।

(৩) অগ্রতঃ। প্রস্থিতাঃ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शकु। अहं दाणिं इमिणा किदवेण विप्पलद्धा, तुम्हे वि मं परिच्चअध। इत्यनुप्रस्थिता (१)। (घ)

गौतमी। स्थित्वा परिवृत्यावलोक्य च। वच्छ! सङ्गरव! अणुगच्छदि णो करुणपरिदेविणी सउन्तला, पच्चादेसपरुसे भत्तरि किं करेदु तवस्सिणी (२)। (ङ)

(घ) अहमिदानीमनेन कितवेन विप्रलब्धा, यूयमपि मां परित्यजथ।

(ङ) वत्स! शार्ङ्गरव! अनुगच्छति नः करुणपरिदेविनी शकुन्तला, प्रत्यादेशपरुषे भर्त्तरि किं करोतु तपस्विनी।

(घ) शकु इति। कितवेन धूर्त्तेन राज्ञा, विप्रलब्धा प्रतारिता; नानाविधप्रलोभनेन मां गान्धर्वविधिना परिणीय इदानीं प्रत्याख्यानत्वादिंत्याशयः। परित्यजथ एवञ्च सत्यहं जगत्यां निराश्रयैव भवेयमिति भावः। महाविषादोक्तिरियम्। अनुप्रस्थिता शार्ङ्गरवादीनां पश्चात् पश्चात् गच्छति।

अत्र खेदो नाम विमर्शसन्धेरङ्गम्। यथा दर्पणे—

"मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः।"

(ङ) गौतमीति। करुणं शोकोद्दीपकं यथा स्यात् तथा परिदेव्यति विलपतीति सा, नः अस्मान्। प्रत्यादेशेन प्रत्याख्यानेन परुषे निष्ठुरे विषये। तपस्विनी दीना, किम् अस्माकमनुगमनाद्भिन्नं किमित्यर्थः। एतेन स्वानुगमनानुमोदनप्रार्थना सूचिता।

(ঘ) শকুন্তলা। এই কপটী আমাকে এখন প্রতারিত করিল এবং আপনারাও আমাকে পরিত্যাগ করুন। (এই বলিয়া পিছনে যাইতে লাগিল।)

(ঙ) গৌতমী। (দাঁড়াইয়া ফিরিয়া দেখিয়া) বৎস! শার্ঙ্গরব! শকুন্তলা করুণ বিলাপ করতঃ আমাদের পিছনে আসিতেছে; এই

(१) शकुन्तला। कहं विप्पलद्ध म्हि। अनुप्रतिष्ठते। (२) गौतमी। स्थित्वा। अणुगच्छइ इमं क्खु णो। भत्तुणि किं वा मे पुत्तिआ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शाङ्र्ग। सरोषं प्रतिनिवृत्य। आः पुरोभागिनि। किमिदं स्वातन्त्र्यमवलम्बसे (१)। (च)

शकु। भीता वेपते। (छ)

शाङ्र्ग। शकुन्तले! शृणोतु भवती (२)।

यदि यथा वदति क्षितिपस्तथा
त्वमसि, किं पुनरुत्कुलया त्वया (३)।

---

(च) शाङ्र्गेति। आः इति कोपसूचकमव्ययम्। पुरो दोषिणामग्रं भजत इति पुरोभागिनी "युजभज—" इत्यादिना घिणिन्, केवलदोषग्राहिणीत्यर्थः तत्सम्बोधनम्। अस्मिन् व्यापारे तव केवलं दोष एव वर्त्तते, न पुनः कश्चिदपि गुण इत्याशयः। स्वातन्त्र्यं स्वाधीनताम्। अस्माकमनुमतिमन्तरेणानुगमनारम्भादिति भावः। "दोषैकदृक् पुरोभागी" इत्यमरः। स्त्रीणां चिरमस्वातन्त्र्यमाह स्मृतिः—

"पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
पुत्रश्च स्थविरे रक्षेन्न स्त्री स्वातन्त्र्यमर्हति॥"

अत्र द्युतिर्नाम विमर्शसन्धेरङ्गम्। तथा च दर्पणे—

"तर्जनोद्वेजने प्रोक्ता द्युतिः।"

(छ) शकु इति। वेपते कम्पते।

---

অনাথা, প্রত্যাখ্যাননিবন্ধন নিষ্ঠুর ভর্ত্তার নিকট আর কি করিতে পারে?।

(চ) শাঙ্গ´রব। (ক্রোধের সহিত ফিরিয়া) আঃ কেবল দোষকারিণি! তুমি এই স্বতন্ত্রতা অবলম্বন করিতেছ না কি?।

(ছ) শকুন্তলা। (ভীত হইয়া কাঁপিতে লাগিল।)

শাঙ্গ´রব। শকুন্তলা! তুমি শোন।

---

(१) शाङ्र्गरवः। सन्निवृत्य। किं पुरोभागी स्वातन्त्र्यम्।
(२) शाङ्र्गरवः। शकुन्तले!। (३) पितुरुत्कुलया।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ तु वेत्सि शुचि व्रतमात्मनः
पतिगृहे तव दास्यमपि क्षमम् ॥३०॥

तिष्ठ, साधयामो वयम् । (ज)

---

यदीति । क्षितिपो राजा प्रकरणात् दुष्मन्तः, यथा वदति न खल्वियं मया परिणीतेति यत् ब्रवीति, यदि त्वं तथा असि अनेनापरिणीतैवासि, अथ च गर्भवती जातेत्याशयः । तदा उत्सृष्टं कुलं कौलिकधर्म्मो यया तया त्वया किं प्रयोजनम्, अपि तु किमपि नेत्यर्थः । दुष्मन्तो न ते परिणेता, अन्योऽपि न श्रूयते, अथ च त्वं गर्भवती जाता ; एवञ्च त्वं व्यभिचारिण्येवासि ; अतएव च त्वया पापीयस्या न किञ्चिदस्माकं प्रयोजनमिति त्वं यथेष्टमेव यत्र तत्र गन्तुमर्हसि, न पुनरस्माननुगच्छेति भावः । अथ तु पक्षान्तरे । आत्मनो व्रतं नियममाचरणमित्यर्थः, शुचि पवित्रं पुरुषान्तरसंसर्गाभावात् निर्दोषमिति तात्पर्य्यम्, वेत्सि जानासि, तदा पतिगृहे अस्मिन् दुष्मन्तभवने, दास्यमपि परिणयसन्देहेन पत्नीत्वेनाग्रहणात् दासीभावोऽपि, तव क्षमं युक्तम्, लोकापवादाभावादिति भावः ।

अत्र प्रथमार्द्धे यकाराणामसकृत्साम्यात् वृत्त्यनुप्रासोऽलङ्कारः । तथा 'यदि तथा त्वमसि' इति वाक्यमध्ये 'यथा वदति क्षितिपः' इति वाक्यान्तरस्य प्रवेशाद्गर्भितत्वादोषः, स तु 'वदति यत्पतिर्नु चेत्तथा' इति प्रथमचरणपाठेन समाधेयः । प्रथमार्द्धे परार्द्धे च तदाशब्दद्वयस्यानुपादानेऽपि सामर्थ्यादेव तदवगतेर्न्यूनपदतादोषद्वयम्, "क्वचिन्न दोषो न गुणः" इति साहित्यदर्पणात् ।

"क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु" इत्यनेकार्थः ।

द्रुतविलम्बितं वृत्तम्—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥३०॥

(ज) अतएवाह तिष्ठेति । दास्यकरणार्थमपि त्वमत्रैव वर्त्तस्वेत्यर्थः, वयं

---

রাজা যেরূপ বলিতেছেন, তুমি যদি সেইরূপই হও ; তবে তুমি কুলনাশিনী ; তোমাদ্বারা কি হইবে ; আর যদি তুমি আপনার ব্যবহারকে পবিত্র বলিয়া মনে কর, তবে পতিগৃহে দাস্যবৃত্তি করাও তোমার উচিত ॥৩০॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। भोस्तपस्विन्! किमत्रभवतीं विप्रलभसे?। कुतः—(ञ)

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥२१॥

---

साधयाम आश्रमं गच्छामः, अस्माकमत्र स्थितौ प्रयोजनभावादिति भावः। "प्रादेव स्वन्तकः साधिगेमिः स्थाने प्रयुज्यते" इति साहित्यदर्पणात् साधयाम इति गमेः स्थाने प्रयोगः।

अत्र स्वव्यापारोपसंहारप्रदर्शनात् प्ररोचना नाम विमर्शसन्धेरङ्गम्—"प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी" इति दर्पणलक्षणात्।

(ञ) राजेति। अत्रभवतीं मुनिकन्यात्वेन माननीयां शकुन्तलाम्, किं कथम्, विप्रलभसे विरहयसि परित्यज्य गच्छसि, कथमपि नाहमेनां ग्रहीष्यामीति भावः। अत्र शकुन्तलामवस्थाप्य गमने अवश्यमेव राजा ग्रहीष्यतीति विभाव्य मुनिभिरेवमाचर्यते इति मत्वा राज्ञ उक्तिरियमिति बोध्यम्।

कुमुदानीति। शशाङ्कश्चन्द्रः, कुमुदानि कैरवाण्येव बोधयति प्रकाशयति, न पुनः पङ्कजानीति एवशब्दार्थः, तथा सविता सूर्यः, पङ्कजानि पद्मान्येव बोधयति, न पुनः कुमुदानीति एवशब्दार्थः। हि यस्मात्, वशिनाम् इन्द्रियदमनशीलानां जनानाम्, वृत्तिः प्रवृत्तिः, परपरिग्रहस्य परकलत्रस्य संश्लेषे संस्पर्शे पराङ्मुखी विमुखी अत्यन्तं भवतीति शेषः, अतएव ममापि प्रवृत्तिः शकुन्तलासंश्लेषे पराङ्मुखीति भावः।

अत्र एवशब्दद्वयस्य इतरयोगव्यवच्छेद एव मुख्योऽर्थः। तेन अप्रस्तुतात् शशाङ्ककर्तृकपङ्कजाबोधनात् सवितृकर्तृककुमुदाबोधनाच्च समात् प्रस्तुतस्य दुष्मन्तकर्तृकशकुन्तलाया अस्पर्शनस्य समस्य प्रतीतिरप्रस्तुतप्रशंसालङ्कारः, बोधयतीत्येकया क्रियया

---

(ঞ) অতএব তুমি থাক, আমরা যাই।

(ঝ) রাজা। ওহে তপস্বী! আপনি ইহাকে ত্যাগ করিয়া যাইতেছেন কেন?। কারণ,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार्ङ्ग॰। राजन्! अथ पूर्ववृत्तं व्यासङ्गाद्विस्मृतं भवेत्, तदा कथमधर्म्मभीरोर्दारपरित्यागः? (१)। (ञ)

राजा। भवन्तमेवात्र गुरुलाघवं पृच्छामि। (ट)

मूढ़ः स्यामहमेषा वा वदेन्मिथ्येति संशये।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांशुलः॥३२॥

---

प्रस्तुतयोरेव शशाङ्कसवित्रोः कर्त्तृतयाभिसम्बन्धात् तुल्ययोगिता, सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासश्च, इत्येतेषामङ्गाङ्गिभावेन सङ्करः।

"परिग्रहः कलत्रे च मूल्यस्वीकारयोरपि" इति मेदिनी। आर्य्या जातिः॥३१॥

(ञ) शार्ङ्गेति। अथेति प्रश्ने। व्यासङ्गात् बहुतरकार्य्येषु विशेषेणासक्तत्वात् पूर्ववृत्तम् अतीतघटना शकुन्तलायाः परिणयनमित्यर्थः, विस्मृतं भवेदिति सम्भावनायां विधिलिङ्। अधर्म्मभीरोर्भवत इति तात्पर्य्यम्। "पतिताऽत्याग्यपतितत्यागिनश्च पतिताः" इति गौतमवचनेन अपतितदारत्यागेन महानधर्म्म एवेति भावः।

अत्र उत्प्रासनं नाम नाट्यालङ्कारः—"उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि" इति दर्पणलक्षणात्।

(ट) राजेति। अत्र विषये। गुरुलघ्वोर्भाव इति गुरुलाघवम्, सुपाद्याल-मित्यादिवदुत्तरपदस्य वृद्धिः। पृच्छतेर्द्विकर्म्मकत्वात् भवन्तमित्यस्यापि कर्म्मत्वम्।

---

চন্দ্র কুমুদকেই প্রস্ফুটিত করেন, আবার সূর্য্য পদ্মকেই প্রকাশিত করিয়া থাকেন। কারণ, ইন্দ্রিয়দমনশীল ব্যক্তিদিগের প্রবৃত্তি, পরস্ত্রী-সংস্পর্শে পরাঙ্মুখীই হইয়া থাকে॥৩১॥

(ঞ) শার্ঙ্গরব। রাজা! নানা কার্য্যে মনোনিবেশ করিতে হয় বলিয়া যদি আপনি পূর্ব্বের ঘটনা বিস্মৃত হইয়া থাকেন, তবে পাপ-ভীরুর পত্নীপরিত্যাগ হইতেছে কেন?।

(ট) রাজা। আপনাকেই এবিষয়ে গুরু-লাঘব জিজ্ঞাসা করিতেছি।

---

(१) शार्ङ्गरवः। यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृती भवान्, तदा कथमधर्म्मभीरुः।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

পুরোধাঃ (১)। বিচার্য্য। যদি তাবদেবং ক্রিয়তাম্। (ঠ)

রাজা। অনুশাস্তু মাং গুরুঃ (২)। (ড)

পুরোধাঃ। অত্রভবতী তাবদাপ্রসবাদস্মদ্গৃহে তিষ্ঠতু। (ঢ)

প্রশ্নং বিবক্ষন্নাহ মূঢ় ইতি। অহং মূঢ়ো বিচিত্ততাপন্নঃ কার্য্যান্তরব্যাসঙ্গ... বিস্মৃতপরিণয়বৃত্তান্ত ইত্যর্থঃ, স্যাং ভবেয়ম্; বা অথবা এষা শকুন্তলা মিথ্যা বদে... ইতি সংশয়ে বিষয়ে, অহং দারত্যাগী মূঢ়ত্বে সতি পত্নীপরিত্যাগী ভবামি; আহো স্বিৎ শকুন্তলাবাক্যস্য মিথ্যাত্বে পরস্ত্রীস্পর্শেন পাংশুলঃ কলঙ্কিতো ভবামি, পত্নীপরিত্যাগ... পরস্ত্রীগ্রহণপাপয়োর্মধ্যে কতরদ্গুরুতরমিতি ভবন্তমেব পৃচ্ছামীত্যর্থঃ। লোকাপবাদ... কলহাধিক্যাৎ পরস্ত্রীগ্রহণাপেক্ষয়া দারত্যাগ এব শ্রেয়ানিতি তু মম মতমিত্যাশয়ঃ।

"আহো উতাহো কিমুত বিকল্পে কিং কিমূত চ" ইত্যমরঃ। "পাংশুলঃ পুংসি হরে খট্বাঙ্গে স্যাদসতীভুবোঃ" ইতি মেদিনী ॥৩২॥

(ঠ) পুরোধা ইতি। যদি তাবৎ তথা সংশয়াপন্নোঽসীত্যর্থঃ, তদা এবম্ বক্ষ্য... মুচ্যমানম্, ক্রিয়তাম্।

(ড) রাজেতি। গুরুঃ গুরুভূতঃ পুরোহিতো ভবান্, অনুশাস্তু উপদিশতু, কর্ত্তব্য... মিতি শেষঃ।

(ঢ) পুরোধা ইতি। অত্রভবতী মুনিকন্যাত্বেন মান্যা শকুন্তলা, আপ্রসবাৎ... প্রসবপর্য্যন্তম্।

---

আমিও বিস্মৃত হইতে পারি, অথবা ইনিও মিথ্যা বলিতে পারেন; এইরূপ সংশয়স্থলে আমি কি দারত্যাগী হই, কিংবা পরস্ত্রীস্পর্শদোষে কলঙ্কিত হই? ॥৩২॥

(ঠ) পুরোহিত। (বিবেচনা করিয়া) যদি সংশয়াপন্নই হইয়া থাকেন তবে এইরূপ করুন।

(ড) রাজা। গুরুজন আমাকে উপদেশ দিন।

(ঢ) পুরোহিত। প্রসব হওয়া পর্য্যন্ত ইনি আমার বাড়ীতে থাকুন...

---

(১) পুরোহিতঃ। (২) রাজা। মাং ভবান্।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । कुत इदम् (१) । (ण)

पुरोधाः । त्वं साधुनैमित्तिकैरुपदिष्टपूर्वः प्रथममेव चक्रवर्त्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, ततोऽभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्य्यये त्वस्याः पितुः समीपगमनं स्थितमेव (२) । (त)

(ण) राजेति । इदम् आप्रसवात् मद्गृहे अवस्थानम् ।

(त) पुरोधा इति । निमित्तं शुभाशुभचिह्नं जानन्तीति नैमित्तिकाः सामुद्रिकाभिज्ञाः, साधवः अप्रतारकाश्च ते नैमित्तिकाश्चेति ते तथोक्तास्तैः । चक्रवर्त्तिनं सार्व्वभौमलक्षणोपेतम् । इति उपदिष्टपूर्व इत्यन्वयः । मुनिदौहित्रत्वांशे सन्देहाभावात् मुनिदौहित्रपदम् । तल्लक्षणोपपन्नः चरणतलादौ पद्मचक्रादिचक्रवर्त्तिचिह्नविशिष्टः । ततस्तदा, एनां शकुन्तलाम्, अभिनन्द्य प्रशस्य, शुद्धान्तमन्तःपुरम् । साधुनैमित्तिकोपदिष्टप्रकारेण चक्रवर्त्तिलक्षणोपपन्नस्य तत्पुत्रस्य आत्मजातत्वनिश्चयात्, तथा च सति शकुन्तलाया अपि स्वपरिणीतत्वनिश्चयादिति भावः । विपर्य्यये अन्यथाभावे तत्पुत्रस्य चक्रवर्त्तिलक्षणाभावे इत्यर्थः, अस्याः शकुन्तलायाः ।

चक्रवर्त्तिचिह्नमाह सामुद्रिकम्—

"यस्य पादतले पद्मं चक्रं वाप्यथ तोरणम् ।
अङ्कुशं कुलिशं वापि स राजा भवति ध्रुवम् ॥"

---

(ण) রাজা। ইহা কিসের জন্য ?।

(ত) পুরোহিত। সৎপ্রকৃতি সামুদ্রিকগণ আপনাকে পূর্ব্বেই বলিয়াছেন যে, আপনি প্রথমেই চক্রবর্ত্তী পুত্র জন্মাইবেন; সেই মুনিদৌহিত্র যদি চক্রবর্ত্তি-লক্ষণাক্রান্ত হয়, তবে ইহাকে আদর করিয়া

---

(१) क्वचिदयं पाठः पृथक् नास्ति ।

(२) पुरोहितः । अत्रभवती तावत् तिष्ठतु । कुत इदमुच्यते इति चेत् त्वं साधुभिरुद्दिष्टः प्रथममेव । विपर्य्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। যথা গুরুভ্যো রোচতে। (থ)

পুরোধাঃ। উত্থায়। বৎসে! ইত ইতোঽনুগচ্ছ মাম্ (১)। (দ)

শকু। ভঅবদি! বসুন্ধরে! দেহি মে অন্তরং।

ইতি সহ পুরোধসা গৌতমীতপস্বিভিশ্চ রুদতী নিষ্ক্রান্তা (২)। (ধ)

রাজা। শাপব্যবহিতস্মৃতিঃ শকুন্তলাগতমেব চিন্তয়তি। (ন)

---

(ধ) ভগবতি! বসুন্ধরে! দেহি মে অন্তরম্।

---

(থ) রাজেতি। যথা রোচতে তথা করোত্বিতি শেষঃ।

(দ) পুরোধা ইতি। ইত ইতঃ অনেনানেন পথা।

(ধ) শকু ইতি। অন্তরম্ অবস্থানায় অবকাশম্।

অত্র প্রথমমীপ্সিতস্য রাজকর্ত্তৃকাত্মগ্রহণস্য পরশ্চেপ্সিতস্য কণ্বশিষ্যানুগমনস্য উভয়োরপি প্রতীঘাতাৎ প্রতিষেধো নাম বিমর্শসন্ধেরঙ্গম্—"ঈপ্সিতার্থপ্রতীঘাতঃ প্রতিষেধ ইতীষ্যতে" ইতি দর্পণলক্ষণাৎ।

(ন) রাজেতি। শাপেন প্রাগুক্তেন দুর্বাসসোঽভিসম্পাতেন ব্যবহিতা অন্তরিতা স্মৃতির্যস্য সঃ, শকুন্তলাগতমেব শকুন্তলাবিষয়মেব, চিন্তয়তি নয়নোন্মীলনাদিনা চিন্তামভিনয়তি।

---

অন্তঃপুরে প্রবেশ করাইবেন; আর তাহা না হইলে, ইহার পিতার নিকটে যাওয়া ত আছেই।

(থ) রাজা। গুরুজনের যাহা অভিরুচি।

(দ) পুরোহিত। (উঠিয়া) বৎসে! এই এই পথে আমার পিছনে পিছনে আইস।

(ধ) শকুন্তলা। মাহাত্ম্যবতি! বসুন্ধরে! আমাকে স্থান দাও। (এই বলিয়া কাঁদিতে কাঁদিতে পুরোহিত, গৌতমী ও তপস্বিগণের সহিত চলিয়া গেল।)

---

(১) পুরোহিতঃ। বৎসে! অনুগচ্ছ মাম্। (২) শকুন্তলা। ভঅবদি! বসুহে! দেহি মে বিবরং। রুদতী প্রস্থিতা। নিষ্ক্রান্তা সহ পুরোধসা তপস্বিভিঃ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेपथ्ये । आश्चर्य्यमाश्चर्य्यम् । (प)

राजा । कर्णं दत्त्वा । किन्नु खलु स्यात् ? । (फ)

पुरोधाः । प्रविश्य सविस्मयम् । देव ! अद्भुतं खलु संवृत्तम् । (ब)

राजा । किमिव ? ।

पुरोधाः । देव ! परावृत्तेषु कण्वशिष्येषु—(भ)

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता ।

---

(प) नेपथ्य इति । पुरोहितादेरुक्तिरियम् ।

(फ) राजेति । कर्णं दत्त्वा श्रवणेन्द्रियमवहितीकृत्य । स्यादिति सम्भावनायां विधिलिङ् ।

(ब) पुरोधा इति । संवृत्तं सञ्जातम् ।

(भ) पुरोधा इति । कण्वशिष्येषु शार्ङ्गरवादिषु, परावृत्तेषु राजभवनाभिमुख्यान्निवृत्तेषु प्रस्थितेषु सत्स्वित्यर्थः । श्लोकस्थक्रियया वाक्यसमापनम् ।

सेति । सा बाला शकुन्तला, स्वानि स्वकीयानि, भाग्यानि अदृष्टानि निन्दन्ती सती, बाहू भुजद्वयम् उत्क्षिप्य उत्तोल्य इति बाहूत्क्षेपम्, रोदितुं प्रवृत्ता आरब्धवती । राजवाक्यानन्तरं पराद्धं द्रष्टव्यम् ।

---

(न) রাজা। (দুর্ব্বাসার শাপে লুপ্তস্মৃতি অবস্থায় শকুন্তলার বিষয়ই চিন্তা করিতে লাগিলেন।)

(প) নেপথ্যে। আশ্চর্য্য! আশ্চর্য্য!।

(ফ) রাজা। (কাণ দিয়া) কি হইয়াছে ?।

(ব) পুরোহিত। (প্রবেশ করিয়া বিস্ময়ের সহিত) রাজা! আশ্চর্য্য ঘটনা ঘটিয়াছে।

রাজা। কি রকম ?।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । ततः किम् ? (१) । (म)

पुरोधाः । स्त्रीसंस्थानञ्चाप्सरस्तीर्थमारात्
उत्क्षिप्याङ्के ज्योतिरेनां तिरोऽभूत् (२) ॥३३॥

सर्वे । विस्मयं रूपयन्ति । (य)

बाहूत्क्षेपमिति बाहूपपदात् उत्क्षिपतेः "स्वाङ्गेऽध्रुवे" इति णमुल् । बाहुद्वयोत्तोलनं शोकाकुलरोदनस्वभावः ।

(म) राजेति । ततः किं जातमिति प्रश्नः ।

स्त्रीति । स्त्रियाः संस्थानमिव संस्थानमाकृतिर्यस्य तत्. अप्सरोवत् तीर्थं दर्शनं यस्य तत्, ज्योतिः कश्चित् तेजःपुञ्जः, एनां शकुन्तलाम्. अङ्के क्रोड़े, उत्क्षिप्य उत्तोल्य, आरात् अस्माकं समीप एव, तिरोऽभूत् अन्तर्हितमभूत् ; इदमेवाद्भुतं संवृत्तमिति भावः। अत्र पूर्वार्द्धपरार्द्धयोश्चकारद्वयेन प्रवृत्तितिरोभवनरूपयोः क्रिययोर्यौगपद्यं सूच्यत इति क्रियासमुच्चयोऽलङ्कारः ।

"संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे" इति मेदिनी । "तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः । ऋषिजुष्टे जले सत्रिण्युपाये स्त्रीरजस्यपि ॥ योनौ पात्रे दर्शने च" इति हेमचन्द्रः । "आराद्दूरसमीपयोः" इत्यमरः ।

शालिनी वृत्तम्—"मात्तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात् ॥३३॥

---

(ভ) পুরোহিত। রাজা! কণ্বের শিষ্যগণ ফিরিয়া গেলে—সেই বালিকা, নিজের ভাগ্যের নিন্দা করতঃ, বাহু উত্তোলন করিয়া কাঁদিতে লাগিল।

(ম) রাজা। তার পর কি হইল ?।

পুরোহিত। তার পর, স্ত্রীলোকের ন্যায় আকৃতি এবং অপ্সরার ন্যায় সুন্দর একটী তেজঃপুঞ্জ আসিয়া আমাদের নিকট হইতেই বালিকাকে কোলে তুলিয়া অন্তর্হিত হইল ॥৩৩॥

---

(१) किञ्च । (२) उत्क्षिप्यैनां ज्योतिरेकं जगाम ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। भगवन्! प्रागेवास्माभिरेषोऽर्थः प्रत्यादिष्टः, किं मृषा तर्केणान्विष्यते, विश्राम्यतु भवान्। (र)

पुरोधाः। विजयस्व। इति निष्क्रान्तः। (ल)

राजा। वेत्रवति! पर्य्याकुलोऽस्मि, शयनीयगृहमार्ग-मादेशय। (व)

प्रती। इदो इदो देवो। (श)

---

(श) इत इतः देवः।

---

(य) सर्वं इति। रूपयन्ति नयनविस्फारादिना अभिनयन्ति।

(र) राजेति। अर्थः शकुन्तलात्मकं वस्तु, प्रत्यादिष्टः प्रत्याख्यातः। तर्केण का इति विचारेण, मृषा मिथ्या, किमन्विष्यते अनुसन्धीयते, प्रत्याख्यातवस्तुनिरूपणस्य निष्फलत्वादिति भावः।

(ल) पुरोधा इति। विजयस्व उत्कर्षेण वर्त्तस्व "विपराभ्यां जिः" इत्यात्मनेपदम्।

(व) राजेति। वेत्रवतीति नाम्ना प्रतीहार्य्याः सम्बोधनम्। पर्य्याकुलः एतावत्तर्कवितर्ककरणात् परिश्रमेण विह्वलः। शय्यते अस्मिन्निति शयनीयं यद्गृहं तस्य मार्गं पन्थानम्, आदेशय दर्शय। इदानीं विश्रमितुमिच्छामीति भावः।

(श) प्रतीति। इत इतः अनेनानेन पथा, देव आगच्छत्विति शेषः।

---

(য) সকলে। ( বিস্ময় অভিনয় করিতে লাগিল। )

(র) রাজা। ভগবন্! এ বিষয় আমি পূর্ব্বেই প্রত্যাখ্যান করিয়াছি; সুতরাং তর্ক-বিতর্ক করিয়া মিথ্যা অনুসন্ধান করায় ফল কি? আপনি বিশ্রাম করুন।

(ল) পুরোহিত। আপনার জয় হউক। (এই বলিয়া চলিয়া গেলেন।)

(ব) রাজা। বেত্রবতি! বড়ই আকুল হইয়াছি; সুতরাং শয়নগৃহের পথ দেখাও।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । परिक्रम्य स्वगतम् (१) ।

काम' प्रत्यादिष्टां स्मरामि न परिग्रह' मुनेस्तनयाम् ।
बलवत्तु दूयमान' प्रत्याययतीव मां हृदयम् (२) ॥३४॥

इति निष्क्रान्ता: सर्वे' । (ष)

## पञ्चमोऽङ्कः ॥०॥

काममिति । प्रत्यादिष्टाम् इदानीमेव प्रत्याख्याताम्, मुने: कण्वस्य तनयां शकुन्तलाम्, परिग्रह' कलत्रम्, काम' पर्य्याप्तम्, न स्मरामि पत्नीत्वेन दृढ़' न स्मरामीत्यर्थ:। किन्तु, बलवत् अत्यन्तमेव, दूयमानम् उपतप्यमानम्, हृदय' मम मन: कर्त्तृ, प्रत्याययतीव परिग्रहतया विश्वासयतीव ।

अत्र कारणाभावेऽपि दूयमानत्वरूपकार्य्योत्पत्ते र्विभावनालङ्कार: ।

"काम' प्रकाम' पर्य्याप्त' निकामेष्ट' यथेप्सितम्" "बलवत् सुष्ठु किमुत स्वस्त्यति च निर्भरे" इति चामर: । "परिग्रह: कलत्रे च मूलस्वीकारयोरपि" इति मेदिनी।

दूयमानमिति "टुदु उपतापे" इत्यस्य प्रयोग: । आर्य्या जाति: ॥३४॥

(ष) इतीति । सभासद्भि: सह राज्ञो बहुत्वात् बहुवचन' सर्वशब्दस्य उपपद्यते।

इति महामहोपाध्याय-भारताचार्य्य श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायाम्
अभिज्ञानशकुन्तलटीकायामभिज्ञानकौमुद्यां पञ्चमाङ्कविवरण' समाप्तम् ॥०॥

(শ) প্রতীহারী। মহারাজ এই এই পথে আসুন।

রাজা। (পাদক্ষেপ করিয়া স্বগত)

প্রত্যাখ্যাত মুনিকন্যাকে কিছুতেই ভার্য্যা বলিয়া স্মরণ করিতে পারিতেছি না; অথ চ অত্যন্ত সন্তপ্ত হৃদয়, তাহাকে যেন আমার ভার্য্যা বলিয়াই আমাকে বিশ্বাস করাইতেছে।৩৪॥

(ষ) (ইহার পর সকলেই চলিয়া গেল।)

পঞ্চম অঙ্ক ॥০॥

(१) क्वचिदयं पाठो न दृश्यते । (२) मे हृदयम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# পঞ্চমাঙ্কাংশোঽঙ্কাবতারঃ।

—০:*:০—

ততঃ প্রবিশতি নাগরকশ্যালঃ পশ্চাদ্বাহুবদ্ধং পুরুষমাদায় রক্ষিণৌ চ (১)। (ক)

রক্ষিণৌ। পুরুষং তাড়য়িত্বা। অলে কুম্ভিলআ! কধেহি কহিং তুএ এশে মহামণিভাশুলে উক্কিণ্ণণামক্খলে লাঅকীএ অঙ্গুলীঅএ শমাশাদিদে (২)। (খ)

(খ) অরে কুম্ভিলক! কথয় কুত্র ত্বয়া এতন্মহামণিভাসুরমুৎকীর্ণনামাক্ষরং রাজকীয়মঙ্গুরীয়কং সমাসাদিতম্।

(ক) তত ইতি। নগরং রাজধানীং রক্ষতীতি নাগরঃ, ততঃ স্বার্থে কপ্রত্যয় ইতি নাগরকঃ নগরস্য প্রধানরক্ষকঃ স চাসৌ শ্যালঃ প্রকরণাৎ রাজশ্যালকশ্চেতি নাগরকশ্যালঃ। রাজশ্যালকস্যোপস্থাপনম্ অন্তরাধেনান্তঃপুরপ্রবেশপ্রতিপাদনার্থম্, তচ্চ পশ্চাৎ স্ফুটীভবিষ্যতি। রক্ষিণৌ সামান্যপ্রহরিণৌ।

(খ) রক্ষিণাবিতি। কুম্ভিলশ্চৌরঃ কুৎসায়াং কপ্রত্যয়ঃ, তৎসম্বোধনম্। মহামণিনা মহামূল্যরত্নেন ভাসুরমুজ্জ্বলম্, উৎকীর্ণানি অস্ত্রেণ ক্ষুণ্ণানি নামাক্ষরাণি রাজ্ঞ এব নামবর্ণা যস্মিন্ তৎ। সমাসাদিতং প্রাপ্তম্।

"কুম্ভিলঃ শ্যালকে চৌরে শ্লোকচ্ছায়াহরে ঋষে" ইতি বিশ্বঃ।

(ক) তদনন্তর রাজার শ্যালকের এবং পশ্চাদ্বাহুবদ্ধ একটা পুরুষকে নিয়া দুইজন রক্ষীর প্রবেশ।

(খ) রক্ষিদ্বয়। (পুরুষটাকে প্রহার করিয়া) ওরে চোর! বল দেখি মহারত্ন-সমুজ্জ্বল এবং খোদিত রাজার নামযুক্ত এই রাজকীয় অঙ্গুরী তুই কোথায় পাইলি।

(১) ততঃ নাগরিকঃ শ্যালঃ পশ্চাদ্বদ্ধপুরুষমাদায়।

(২) এশে মণিবন্ধণুক্কিণ্ণণামহেএ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरुषः । भीतिनाटितकेन । पशीदन्तु पशीदन्तु मे भावमिश्शे । ण हग्गे ईदिशश्श अकज्जश्श कालके (१) । (ग)

एकः । किस्सु क्खु शोहणे वम्हणेत्ति कदुअ लञ्ञा दे परिग्गहे दिण्णे ? । (घ)

पुरुषः । शुणुध दाव, हग्गे क्खु शक्कावदालवाशी धीवले (२) । (ङ)

(ग) प्रसीदन्तु प्रसीदन्तु मे भावमिश्राः । नाहमीदृशस्य अकार्यस्य कारकः ।

(घ) किन्नु खलु शोभनो ब्राह्मणोऽसीति कृत्वा राज्ञा ते परिग्रहो दत्तः ? ।

(ङ) शृणुत तावत्, अहं खलु शक्रावतारवासी धीवरः ।

(ग) पुरुष इति । भीतेर्भयस्य नाटितकेन नाटनेन, दयार्थे कप्रत्ययः विह्वलत्वादिना भयाभिनयेनेत्यर्थः । भावेषु विद्वत्सु मिश्रा गौरविताः ।

"भावो विद्वान्" इत्यमरः । "गौरविताख्ये मिश्राः श्लाघ्याख्ये भवन्मुखाः" इति विकाण्डशेषः ।

(घ) एक इति । रक्षिणोर्मध्ये एकः कश्चिदित्यर्थः । शोभनो विद्यासदाचारादिना उत्कृष्टः । इति कृत्वा मनसि कृत्वा । परिगृह्यत इति परिग्रहः प्रतिग्राह्यमूल्यः अङ्गुरीयकपदार्थः ।

(ङ) पुरुष इति । शक्रावतारे तदाख्ये ग्रामे वसतीति सः ।

(গ) পুরুষ। (ভয় অভিনয় করিয়া) মহাশয়রা আমার প্রতি প্রসন্ন হউন প্রসন্ন হউন। আমি এরূপ অকার্য্যের কর্ত্তা নহি।

(ঘ) এক জন রক্ষী। তবে কি তুই উৎকৃষ্ট ব্রাহ্মণ বলিয়া, রাজা তোকে দান করিয়াছেন ? ।

(ঙ) পুরুষ। শুনুন, আমি শক্রাবতারগ্রামবাসী ধীবর।

(१) पशीदन्तो भावमिश्शो । अहके ण एदिशकम्मकाली ।

(२) शुणह दाणिं अहके शक्कावदालब्भन्तलवाशी धीवले ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वितीयः। अलि पाअच्चलि! किं तुमं अह्मेहिं वसदिं जादिं च पुच्छीअसि (१)। (च)

नाग। सूअअ! कधेदु सव्वं अणुक्कमेण, मा अन्तरा पडिवन्धेअ (२)। (छ)

उभौ। जं आवुत्ते आणवेदि। लवेहि ले! (३)। (ज)

(च) अरे पाटच्चर! किं त्वमस्माभिर्वसतिं जातिञ्च पृच्छ्यसे?।

(छ) सूचक! कथयतु सर्वमनुक्रमेण, मा अन्तरा प्रतिबधान।

(ज) यदावुत्त आज्ञापयति। लप रे।

(च) द्वितीय इति। प्रहरिणोर्मध्ये अपर इत्यर्थः। पाटयं चरतीति पाटच्चर-श्चौरः, तत्सम्बोधनम्। वसतिं वासस्थानम्। किं पृच्छ्यसे, येन तदुल्लिखसीति भावः।

"चौरैकागारिकस्तेनदस्युतस्करमोषकाः। प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः॥" इत्यमरः।

"कर्म्मण्यप्रधाने दुहादिभ्यः" इति त्वमित्यस्य उक्तता।

(छ) नागेति। सूचयति ज्ञापयति चौरादीनिति सूचकः, तत्सम्बोधनम्। अनुक्रमेण क्रमशः। अन्तरा वाक्यमध्ये, मा प्रतिबधान न वाधां कुरु।

(ज) उभाविति। रक्षिणौ द्वावेवेत्यर्थः। आवुत्तो भगिनीपतिः। एतेन रक्षिणौ परस्परं भ्रातरौ, नागरिकश्च तयोर्भगिनीपतिरिति सूचितम्। लप ब्रूहि।

(চ) দ্বিতীয় রক্ষী। ওরে চোর! আমরা কি তোকে বাসস্থানের ও জাতির কথা জিজ্ঞাসা করিয়াছি?।

(ছ) রাজশ্যালক। সূচক! ক্রমে সকল বলুক, মধ্যে বাধা দিও না।

(জ) রক্ষিদ্বয়। ভগিনীপতি যাহা আদেশ করেন। বল রে!।

(१)...पाटच्चाला! किं अम्हेहिं जादी पुच्छिदे।
(२)...मा णं...। (३)...कहेहि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धीवरः । शो हग्गे जाल-वलिश-प्पहुदिहिं मच्छवन्धणो वाएहिं कुड़ुम्बभलणं कलेमि (१) । (झ)

नाग । विहस्य । विसुद्धो दाणिं से आजीवो (२) । (ञ)

धीवरः । भट्टके ! मा एव्वं भण (३) । (ट)

शहजे किल जे विणिन्दिदे णहु शे कम्म विवज्जणीअए ।
पशुमालणकम्मदालुणे अणुकम्पामिदुकेवि शोत्तिए ॥१॥

(झ) सोऽहं जाल वड़िशप्रभृतिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

(ञ) विशुद्ध इदानीमस्य आजीवः ।

(ट) भर्त्तः ! मा एवं भण ।

सहजं किल यद्विनिन्दितं न तु तत् कर्म्म विवर्जनीयकम् ।
पशुमारणकर्म्मदारुणः अनुकम्पामृदुकोऽपि श्रोत्रियः ॥१॥

(झ) धीवर इति । जालवड़िशौ स्वनामख्याते मत्स्यबन्धनोपायौ । मत्स्यबन्धनोपायैः मत्स्यधारणसाधनैः, कुटुम्बभरणं पोष्यवर्गपोषणम् ।

(ञ) नागेति । आजीवो जीविकानिर्वाहोपायः, विशुद्धो निर्द्दोषः । सोल्लुण्ठनोक्तिरियम् । तेन विपरीतलक्षणया घृणितहिंसात्मकत्वात् कदर्थ्यः परित्याज्यश्चायमिति भावः ।

(ट) धीवर इति । मैवं भण नेत्थं ब्रूहि ।
कथमेवं न भणामीत्याह सहजमिति । विनिन्दितं लोकगर्हितमपि, यत् कर्म

(ঝ) ধীবর। সেই আমি, জাল ও বড়িশপ্রভৃতি মৎস্য ধরিবার উপকরণদ্বারা পোষ্যবর্গের পোষণ করিয়া থাকি।

(ঞ) রাজশ্যালক। (হাস্য করিয়া) ইহার জীবিকার উপায় ত ভাল!।

(ট) ধীবর। হুজুর! এরূপ বলিবেন না। কারণ—

(१)···भट्टके जालुग्गालादीहिं···। (२)···दाणिं आजीवः। (३)···भट्ठा!।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाग। तदो तदो। (ठ)

धीवरः। एक्कश्शिं दिअशे मए लोहिदमच्छके पाविदे, तदो खण्डशो कप्पिदे। जाव तश्श उदलब्भन्तले पेक्खामि,

(ठ) ततस्ततः ?।

सहजं स्वाभाविकं कुलक्रमागतमित्यर्थः, तत् किल कर्म्म, न तु विवर्जनीयकं न खलु परित्याज्यम्। तथा च अनुकम्पया सर्वभूतेषु दयया मृदुकोऽपि कोमलोऽपि श्रोत्रियो वेदज्ञो ब्राह्मणः, पशुमारणकर्म्मणा यज्ञे पशुहत्याकार्य्येण दारुणो निष्ठुरो भवति। एवञ्च यथा दयार्द्रचित्तेन श्रोत्रियेण हिंसात्मकतया निन्दितमपि पशुहत्याकर्म्म कुलक्रमागततया यज्ञादावनुष्ठीयते; तथा मयापि लोकनिन्दितमपि मत्स्यधारणं कर्म्म कुलक्रमागततया अनुष्ठीयते; अत उल्लुण्ठनविषयत्वाभावात् मैवं भणेति भावः।

अतएवात्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, मृदोः श्रोत्रियात् दारुणत्व-रूप विरुद्धगुणोत्पत्त्या विषमालङ्कारश्च; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः।

एतन्मूलीभूतं प्रमाणं यथा शुद्धितत्त्वधृतम्—

"देशानुशिष्टं कुलधर्म्ममग्र्यं स्वगोत्रधर्म्मं नहि संत्यजेच्च।"

गीतायाञ्च—"सहजं कर्म्म कौन्तेय! सदोषमपि न त्यजेत्।

सर्व्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥"

श्रोत्रियमाह देवलः—"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा।

षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित्॥"

यज्ञादौ पशुहिंसामाह श्रुतिः—"अग्निषोमीयं पशुमालभेत॥"

सुन्दरी वृत्तम्॥१॥

নিন্দিত হইলেও যে কার্য্য যাহার কুলক্রমাগত, তাহা তাহার পরিত্যাজ্য নহে। দয়াবশতঃ কোমল হইলেও, বেদজ্ঞ ব্রাহ্মণ যজ্ঞে পশুহত্যাকার্য্যে নিষ্ঠুর হইয়া থাকেন॥১॥

(ঠ) রাজশ্যালক। তার পর? তার পর?।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

দাব এশ্শি মহালঅণভাসুলে অঙ্গুলীঅএ পেক্খিদে, পচ্চা ইধ বিক্কঅত্থং দংশঅন্তে জ্জেব গহিদে ভাবমিশ্শেহিং। এত্তিকে দাব এদশ্শ আগমে। অধ মং মালেধ কুট্টেধ বা (১)। (ঙ)

নাগ। অঙ্গুরীয়কমাঘ্রায়। জালুঅ! মচ্ছোদলব্ভন্তর-গদোত্তি ণত্থি সন্দেহো, জদো অঅং আমিসগন্ধো বাঅদি। আগমো দাণিং এদস্স এসো বিমরিসিদব্বো, তা এধ লাঅউলং জ্জেব গচ্ছম্ম (২)। (ঢ)

---

(ঙ) একস্মিন্ দিবসে ময়া রোহিতমৎস্যকঃ প্রাপ্তঃ, ততঃ খণ্ডশঃ কল্পিতঃ। যাবৎ তস্য উদরাভ্যন্তরে প্রেক্ষে, তাবদেতন্মহারত্নভাসুরম্ অঙ্গুরীয়কং প্রেক্ষিতম্, পশ্চাদিহ বিক্রয়ার্থং দর্শয়ন্নেব গৃহীতো ভাবমিশ্রৈঃ। এতাবান্ তাবদেতস্য আগমঃ। অথ মাং মারয়ত কুট্টয়ত বা।

---

(ঢ) ধীবর ইতি। খণ্ডশঃ কল্পিতঃ অল্পকে ত্বথ্যা বিক্রয়ার্থং খণ্ডখণ্ডঃ কৃতঃ। প্রেক্ষে দৃষ্টিপাতং করোমি। ভাবমিশ্রৈর্বিদ্বৎপ্রধানৈর্ভবদ্ভিঃ। এতস্য অঙ্গুরীয়কস্য আগমো মদন্তিকাগমনবৃত্তান্তঃ। অথ এতচ্ছ্রবণানন্তরম্, মারয়ত তাড়য়ত, কুট্টয়ত কর্ত্তয়ত।

---

(ঙ) ধীবর। তার পর, এক দিন আমি রোহিত মাছ পাইলাম, তার পর খণ্ড খণ্ড করিলাম; তার পর যেই পেটের ভিতরে চাহিয়াছি, সেই দেখি এই মহারত্ন-সমুজ্জ্বল আংটী। তার পর বিক্রয়ের জন্য এইখানে

---

(১) পুরুষঃ। একস্মিং দিঅশে খণ্ডশো লোহিঅমচ্ছে মএ কপ্পিদে জাব তস্স উদলব্ভন্তলে এদং লদণভাসুলং অঙ্গুলীঅঅং দেক্খিঅং। পচ্ছা অহকে শে বিক্কঅ দংশঅন্তে গহিদে ভাবমিশ্শেহিং। মালেহ বা মুঞ্চেহ বা অঅং শে আঅমবুত্তন্তে।

(২) জাণুঅ! বিস্সগন্ধি গোহাদী মচ্ছবন্ধো এব্ব ণিস্সংসঅং। অঙ্গুলীঅদংসণং সে বিমরিসিদব্বং। রাঅউলং এব্ব গচ্ছামো।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रक्षिणौ। धीवरं प्रति। गच्छ ले गण्ठिच्छेदअ! गच्छ।
इति परिक्रामन्ति (१)। (ण)

नाग। सूअअ! इध गोउरदुआले अप्पमत्ता पड़िपालेध मं, जाव लाअउलं पविसिअ णिक्कमामि (२)। (त)

---

(ङ) जालुक! मत्स्योदराभ्यन्तरगतमिति नास्ति सन्देहः, यतः अयमामिषगन्धो वाति। आगम इदानीमेतस्यैव विमर्ष्टव्यः, तदेव राजकुलमेव गच्छामः।

(ण) गच्छ रे ग्रन्थिच्छेदक! गच्छ।

---

(ढ) नागेति। अङ्गुरीयकाघ्राणं मत्स्यगन्ध आगच्छति न वेति परीक्षार्थम्। इति विषये। आमिषगन्धः मत्स्यमांसगन्धः, वाति घ्राणविषयीभवति। एतस्य अङ्गुरीयकस्य, एष एतत्पुरुषोक्तः, आगमः प्राप्तिवृत्तान्तः, विमर्ष्टव्यः विवेक्तव्यः विचार्य्य द्रष्टव्य इत्यर्थः, तत् तस्मात्, एत आगच्छत।

(ण) रक्षिणाविति। ग्रन्थिं वस्त्रादिग्रन्थिं छिनत्ति तद्गतद्रव्यापहरणाय कृन्ततीति ग्रन्थिच्छेदकश्चौरः। तत्सम्बोधनम्। गच्छ चल अस्माभिः सह राजकुलमिति शेषः। परिक्रामन्ति सर्वे राजकुलं गन्तुं पादक्षेपं कुर्वन्ति।

---

দেখাইবামাত্রই মহাশয়রা আমাকে ধরিয়াছেন। ইহার আসিবার বৃত্তান্ত এই পর্য্যন্ত। এখন আমাকে প্রহারই করুন বা কাটিয়াই ফেলুন।

(চ) রাজশ্যালক। (অঙ্গুরীয় ঘ্রাণ লইয়া) জালুক! মৎস্যের উদরের ভিতরে যে গিয়াছিল, এবিষয়ে সন্দেহ নাই; যে হেতু এই আমিষের গন্ধ আসিতেছে। অতএব এখন ইহার এই প্রাপ্তিবৃত্তান্তের বিবেচনা করিতে হইবে। অতএব আইস, রাজবাড়ীই যাই।

(ছ) রক্ষিদ্বয়। (ধীবরের প্রতি) চল্ রে গাঁইটকাটা চল্। (ইহার পর সকলে পদক্ষেপ করিতে লাগিল)

---

(१) रक्षिणौ। तह।

(२) श्यालः। गच्छ अले गण्ठिभेदअ!। सर्वे परिक्रामन्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभौ । पविशदु आवुत्ते शामिप्पशादत्थं (१) । (थ)

नाग । परिक्रम्य निष्क्रान्तः (२) । (द)

सूचकः । जालुअ ! चिलाअदि क्खु आवुत्ते । (ध)

(त) सूचक ! इह गोपुरद्वारे अप्रमत्तौ प्रतिपालयतं माम्, यावत् राजकुलं प्रविश्य निष्क्रामामि ।

(थ) प्रविशतु आवुत्तः स्वामिप्रसादार्थम् ।

(ध) जालुक ! चिरयति खल्वावुत्तः ।

(त) नागेति । गोपुरद्वारे पुरद्वारे, अप्रमत्तौ सावधानौ सन्तौ, अन्यथा ग्रयं धीवरः पलायेतेति भावः । प्रतिपालयतं युवां प्रतीक्षेथाम् ।

"पुरद्वारे ऽपि गोपुरम्" इति रत्नकोषः ।

(थ) उभाविति । आवुत्तो भगिनीपतिः, स्वामिनो राज्ञः प्रसादार्थं प्रसन्नता-लाभार्थम् । चौरधारणे स्वामी सन्तुष्यत्वेवेति भावः ।

(द) नागेति । परिक्रम्य राजपुरप्रवेशाय पादक्षेपं कृत्वा ।

(ध) सूचक इति । चिरयति विलम्बते । सविरागोक्तिरियम् ।

(त) রাজশ্যালক। সূচক! এই বাড়ীর দ্বারে সাবধান হইয়া আমার প্রতীক্ষা কর, যাবৎ আমি রাজবাড়ীর ভিতরে যাইয়া, ফিরিয়া আসি।

(থ) রক্ষিদ্বয়। রাজার সন্তোষ জন্মাইবার জন্য ভগিনীপতি প্রবেশ করুন।

(দ) রাজশ্যালক। ( পাদক্ষেপ করিয়া চলিয়া গেলেন। )

(ধ) সূচক। জালুক ! ভগিনীপতি বড় বিলম্ব করিতেছেন।

(१) श्यालः । सूअअ ! इमं पुरदुआरे अप्पमत्ता पड़िवालेह, जाव इदं अङ्गुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पड़िच्छिअ णिक्कमामि ।

(२) उभौ । पविसदु आवुत्ते शामिप्पशादस्स । निष्क्रान्तः श्यालः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जालुकः । णं अवशलीवशप्पणीआ लाआणो होन्ति । (न)

सूचकः । फुल्लन्ति मे अग्गहत्था इमं गण्ठिच्छेदअं वावादिदुं (१) । (प)

धीवरः । णालिहदि भावे अआलणमालके भविदुं (२) । (फ)

जालुकः । विलोक्य । एशे अह्माणं इश्शले पत्ते गेह्निअ लाअशाशणं आअच्छदि । शम्पदं एशे शउलाणं मुहं पेक्खदु, अहवा गिद्धशिआलाणं वली होदु (३) । (ब)

(न) ननु अवसरोपसर्पणीया राजानो भवन्ति ।

(प) स्फुरतो मे अग्रहस्तौ इमं ग्रन्थिच्छेदकं व्यापादयितुम् ।

(फ) नार्हति भावः अकारणमारको भवितुम् ।

---

(न) जालुक इति । अवसरेण राज्ञामिवावकाशेन उपसर्पणीया उपगम्याः । तथा च प्रायेणैव राजानः कार्य्यव्यासक्तास्तिष्ठन्ति, तदा च तैः सहालापो न सम्भवति, तेन चावसरः प्रतीक्षणीयस्ततश्चायं विलम्ब इति भावः ।

(प) सूचक इति । अग्रहस्तौ हस्तयोरग्रभागौ, स्फुरतः सञ्चलतः ।

(फ) धीवर इति । भावो विद्वान् भवान्, अकारणमारको विना कारणं हन्ता । तस्यान्याय्यत्वात् भावत्वव्याघातकत्वाच्चेति भावः ।

---

(न) জালুক। ওরে! অবসরক্রমে রাজাদের নিকট যাইতে হয়।

(প) সূচক। এই গাঁইটকাটাকে হত্যা করিবার জন্য আমার হাতের আগা লাফাইতেছে।

(ফ) ধীবর। মহাশয় অকারণ-হত্যাকারী হইতে পারেন না।

---

(१) प्रथमः । जालुअ ! फुलन्ति मे हत्था इमस्स वहस्स सुमणो पिणद्धुं । पुरुषं निर्दिशति । (२) पुरुषः ।···अआलये मालये···।

(३)···अह्माणं शामी पत्तहत्थे लाअशाशणं परिच्छिअ इदोमुहे देक्खीअइ । गिद्धवली हुविश्शशि शुणो मुहं वा देक्खिश्शशि ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाग। प्रविश्य। सिग्घं सिग्घं एदं। इत्यर्द्धोक्ते (१)। (भ)

धीवरः। हा हदोह्मि। इति विषादं नाटयति। (२)। (म)

---

(ब) एषः अस्माकमीश्वरः। पत्रं गृहीत्वा राजशासनमागच्छति साम्प्रतमेष स्वकुल्यानां मुखं प्रेक्षताम्, अथवा गृध्रशृगालानां बलिर्भवतु।

(भ) शीघ्रं शीघ्रमेतम्।

(म) हा हतोऽस्मि।

---

(ब) जालुक इति। ईश्वरः प्रभुर्नागरिकश्यालः, राजशासनं राजादेशम्, पत्रं गृहीत्वा लेखयित्वा पत्रलिखितं राजशासनमादायेत्यर्थः। एष धीवरः, स्वकुल्यानां ज्ञात्यादीनाम्, मुखं प्रेक्षताम्, मोचनेन स्वगृहगमनात्, बलिरुपहारः खाद्य इति यावत् भवतु व्यापादनादिति भावः।

(भ) नागेति। शीघ्रं शीघ्रमेतं मुञ्चत जालोपजीविनम् इति वाक्यस्य शीघ्रं शीघ्रमेतमित्यंशः अर्द्धमेव स्यादत उक्तम् इत्यर्द्धोक्ते इति।

(म) धीवर इति। एतं व्यापादयतमिति वक्ष्यतीति मत्वा धीवरस्योक्तिरियं विषादनाटनञ्चेति बोध्यम्।

---

(ব) জালুক। (দেখিয়া) এই আমাদের প্রভু, পত্রে রাজার আদেশ লইয়া আসিতেছেন। এখন এ, স্ববংশীয়দের মুখই দেখুক কিংবা শিয়াল-শকুনের খাদ্যই হউক।

(ভ) রাজশ্যালক। (প্রবেশ করিয়া) সত্বর সত্বর ইহাকে—(এই অর্দ্ধোক্তির পর)

(ম) ধীবর। হায়! মরিয়াছি। (এই বলিয়া বিষাদের অভিনয় করিল।)

---

(१) पुस्तकान्तरे एष पाठो नास्ति।

(२) अयं पाठोऽपि न दृश्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

নাগ। মুঞ্চধ জালোবজীবিণং। উববণ্ণো সে অঙ্গুলি-অস্স আগমো, অহ্মসামিণা জাব কধিদং (১)। (য)

সূচকঃ। জহা আণবেদি আবুত্তো (২)। জমবসদিং গদুঅ পড়িণিউত্তো ক্খু এসো। ইতি ধীবরং বন্ধনান্মোচয়তি (৩)। (র)

ধীবরঃ। ভট্টকে! অম্মদং তুহ কেলকে মে জীবিদে। ইতি পাদয়োঃ পততি (৪)। (ল)

---

(য) মুঞ্চত জালোপজীবিনম্। উপপন্নঃ অস্য অঙ্গুলীয়কস্য আগমঃ, অস্মৎ-স্বামিনা যাবৎ কথিতম্।

(র) যথা আজ্ঞাপয়তি আবুত্তঃ। যমবসতিং গত্বা প্রতিনিবৃত্তঃ খল্বেষঃ।

---

(য) নাগেতি। জালোপজীবিনং ধীবরম্। যাবৎ যস্মাৎ আগমঃ প্রাপ্তিবৃত্তান্তঃ, উপপন্নঃ সঙ্গতঃ, ইতি অস্মৎস্বামিনা রাজ্ঞা দুষ্মন্তেন কথিতমতো মুঞ্চতমিত্যর্থঃ।

(র) সূচক ইতি। যমবসতিং যমালয়ম্। যমবসতিং গত্বা পুনঃ প্রতিনিবৃত্তস্য যথা সৌভাগ্যং মন্যতে, তথা অস্যাপি প্রাণদণ্ডসম্ভবে মুক্তিলাভাৎ সৌভাগ্যং মন্তব্যমিত্যাশয়ঃ।

---

(য) রাজশ্যালক। জালোপজীবিকে ছাড়িয়া দাও। এই অঙ্গুরীয় প্রাপ্তিবৃত্তান্ত খাটিয়াছে, ইহা আমাদের প্রভু বলিয়াছেন।

(র) সূচক। ভগিনীপতি যাহা আদেশ করেন। এ বেটা যমের বাড়ী যাইয়া, ফিরিয়া আসিল। (এই বলিয়া ধীবরকে বন্ধন হইতে মুক্ত করিল।)

---

(১) প্রবিশ্য শ্যালঃ। সূঅঅ! মুঞ্চীঅদু এসো জালোবজীবী। উববণ্ণো কিল সে অঙ্গুলীঅঅস্স আঅমো।

(২) সূচকঃ। জহ আবুত্তো ভণাদি।

(৩) দ্বিতীয়ঃ। এসো জমসদণং পবিসিঅ পড়িণিউত্তো। ইতি পুরুষং বিমুক্তবন্ধনং করোতি। (৪) পুরুষঃ। শ্যালং প্রণম্য। ভট্টা! অহ কেরিসো মে আজীবো।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

নাগ। উত্তেহি, এসে ভট্টিণা অঙ্গুলীঅ-মুল্ল-সম্মিদে পারিদোষিএ দে পসাদীকিদে, তা গেহ্ন এদং। ইতি ধীবরায় কটকং দদাতি (১)। (ব)

ধীবরঃ। সহর্ষং সপ্রণামঞ্চ প্রতিগৃহ্য। অণুগ্গহীদোহ্মি (২)। (শ)

---

(ল) ভর্ত্তঃ! সাম্প্রতং তব ক্রীতকং মে জীবিতম্।

(ব) উত্তিষ্ঠ, এতৎ ভর্ত্রা অঙ্গুরীয়মূল্যসম্মিতং পারিতোষিকম্ প্রসাদীকৃতম্, তৎ গৃহাণ ইদম্।

(শ) অনুগৃহীতোঽস্মি।

---

(ল) ধীবর ইতি। ভর্ত্তরিতি নাগরিকসম্বোধনম্। ক্রীতকং ক্রীতস্বরূপম্।

(ব) নাগেতি। ভর্ত্রা রাজা। অঙ্গুরীয়কমূল্যেন সম্মিতং পরিমিতম্ অঙ্গুরীয়কমূল্যতুল্যমূল্যকমিত্যর্থঃ, মৎস্যোদরগতে অঙ্গুরীয়কে নিধিবৎ উপাদাতুরেব স্বত্বোদয়াৎ তদ্গ্রহণেন তত্তুল্যমূল্যকদ্রব্যান্তরদানস্যৌচিত্যাদিত্যাশয়ঃ। প্রসাদীকৃতং প্রসন্নেন দত্তম্। কটকং বলয়ম্।

(শ) ধীবর ইতি। অনুগৃহীতোঽস্মি, এতল্লাভাদিতি ভাবঃ।

---

(ল) ধীবর। হুজুর! আমার জীবন এখন আপনার কেনা হইল। (এই বলিয়া পায়ের উপর পড়িল।)

(ব) রাজশ্যালক। উঠ, মহারাজ অনুগ্রহ করিয়া অঙ্গুরীর মূল্যের সমান এই পারিতোষিক তোমাকে দিয়াছেন; অতএব ইহা গ্রহণ কর। (এই বলিয়া, ধীবরকে বলয় দান করিলেন।)

(শ) ধীবর। (আনন্দ ও প্রণামের সহিত গ্রহণ করিয়া) অনুগৃহীত হইলাম।

---

(১) শ্যালঃ। এসো ভট্টিণা···সম্মিদো পসাদো বি দাবিদো। পুরুষায়াং দদাতি।

(২) পুরুষঃ। সপ্রণামং পরিগৃহ্য। ভট্টকেণ অণুগহিদহ্মি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जालुकः। एशे क्खु रस्रा तधा अणुग्गहीदे, जधा शूलादो ओदालिअ हत्थिक्खन्धे समालोविदे (१)। (ष)

सूचकः। आवुत्ते! पालितोशिएण जाणामि महालिहल-दणेण अङ्गुलीअएण शामिणो बहुमदेण होदव्वं (२)। (स)

नाग। ण तस्सिं भट्टिणो महालिहलदणं त्ति कदुअ परिदोसो। एत्ति उण तक्केमि (३)। (ह)

---

(ष) एष खलु राज्ञा तथा अनुगृहीतः, यथा शूलादवतार्य्य हस्तिस्कन्धे समारोपितः।

(स) आवुत्त! पारितोषिकेण जानामि महार्हरत्नेन अङ्गुरीयकेण स्वामिनो बहुमतेन भवितव्यम्।

(ह) न तस्मिन् भर्त्तुर्महार्हरत्नमिति कृत्वा परितोषः। एतत् पुनस्तर्कयामि।

---

(ष) जालुक इति। एष धीवरः। समारोपित उत्थापितः।

(स) सूचक इति। पारितोषिकेण धीवराय पारितोषिकदानेन, जानामि मन्ये; महार्हरत्नेन महामूल्यमणिसत्त्वेन हेतुना, स्वामिनो राज्ञः, बहुमतेन अत्यादृतेन।

---

(ষ) জালুক। মহারাজ ইহার প্রতি সেইরূপ অনুগ্রহ করিয়াছেন, যেরূপ শূল হইতে নামাইয়া হাতীর ঘাড়ে চড়ান হয়।

(স) সূচক। ভগিনীপতি! পারিতোষিকে বুঝিতেছি যে, মহামূল্য-রত্নসমন্বিত অঙ্গুরীটী মহারাজের বিশেষ আদরের বস্তু হইবে।

---

(१) सूचकः। एशे याम अणुग्गाहे जे शूलादो अवदालिय हत्थिक्खन्धे पडिट्ठाविदे।

(२) जालुकः। आवुत्त! पलिदोशे कहेइ तेण अङ्गुलीअएण भट्टिणो शम्मदेण होदव्वं।

(३) श्यालः। ण तस्सिं महारुहं रदणं भट्टिणो बहुमदं त्ति तक्केमि। तस्स दंसणेण भट्टिणो अहिमदो जणो सुमराविदो। मुहुत्तअं पकिदिगम्भीरोऽवि पज्जुस्सुअ-णअणो आसि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

উভৌ। কিং উণ (১)। (ঘ)

নাগ। তস্স দংসণেণ ভট্টিণো কোবি অহিমদো জণো সুমরিদোত্তি, জদো মুহুত্তঅং পদূদিগম্ভীরোবি পজ্জুস্সুঅমণো আসী। (ক)

সূচকঃ। তোসিদে খোভূহে অ দাণিং ভট্টা আবুত্তেণ (২)। (খ)

(ঘ) কিং পুনঃ ?।

(ক) তস্য দর্শনেন ভর্ত্তা কোঽপ্যভিমতো জনঃ স্মৃত ইতি, যতো মুহূর্তং প্রকৃতিগম্ভীরোঽপি পর্য্যুৎসুকমনা আসীত্।

(হ) নাগেতি। তস্মিন্ অঙ্গুরীয়কে, মহার্হং রত্নং মহামূল্যমণিরস্তি ইতি হেতোর্ন পরিতোষঃ। তর্হি কিমিত্যাহ এতদিতি।

(ঘ) উভাবিতি। কিং পুনস্তর্কয়সীতি শেষঃ।

(ক) নাগেতি। তস্য অঙ্গুরীয়কস্য, ভর্ত্তা রাজ্ঞা। প্রকৃতিগম্ভীরোঽপি স্বভাবগম্ভীরোঽপি, মুহূর্তং কিয়ৎক্ষণং যাবৎ, পর্য্যুৎসুকমনা উৎকণ্ঠিতচিত্তঃ।

(খ) সূচক ইতি। আবুত্তেন ভগিনীপতিনা ভবতা, ইদানীং ভর্ত্তা রাজা, তোষিতঃ বিঘটিতাঙ্গুরীয়কদানেন সন্তোষং নীতঃ, খেদিতশ্চ অভিমতজনস্মারণেন শোকং প্রাপিতশ্চ।

(হ) রাজশ্যালক। সেই আংটীতে মহামূল্য রত্ন আছে বলিয়া মহারাজের সন্তোষ হয় নাই; কিন্তু আমি ইহা মনে করি।

(ক্ষ) রক্ষিদ্বয়। কি ?।

(ক) রাজশ্যালক। সেই অঙ্গুরীদর্শনে মহারাজের কোন অভিমত লোক মনে পড়িয়াছে; যে হেতু তিনি স্বভাবগম্ভীর হইয়াও কিছুকালের জন্য উৎকণ্ঠিতচিত্ত হইয়াছিলেন।

(খ) সূচক। ভগিনীপতি বর্ত্তমানে রাজাকে সন্তুষ্ট ও দুঃখিত দুই রকমই করিয়াছেন।

(১) ক্বচিদিয়মুক্তির্নাস্তি। (২) সূচকঃ। খেবিদং ণাম আবুত্তে।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जालुकः। णं भणामि इमस्स मच्छअत्तुणो किदे। इति धीवर-मसूयया पश्यति (१)। (ग)

धीवरः। भट्टालके! इदो अद्धं तुह्माणम्पि सुलामुल्लं होदु (२)। (घ)

जालुकः। धीवल! महत्तले शम्पदं अह्माणं पिअवअ-

(ख) तोषितः शोचितश्चेदानीं भर्त्ता आवुत्तेन।

(ग) ननु भणामि अस्य मत्स्यशत्रोः कृते।

(घ) भट्टारक! इतः अर्द्धं युष्माकमपि सुरामूल्यं भवतु।

(ग) जालुक इति। नन्विति सूचकसम्बोधने। मत्स्यशत्रोर्धीवरस्य, कृते निमित्ते धीवरनिमित्तकमेवेत्यर्थः, भर्त्ता शोचित इत्यन्वयः। तथा च धीवरो यदि अङ्गुरीयकं न प्राप्नुयात् प्राप्य वा न दर्शयेत् न दद्याद्वा, तदा आवुत्तो राज्ञे तद्दर्शयितुं न शक्नुयात्, तथा च सति राजा अभिमतजनं न स्मरेत् ततश्च तस्य शोको न स्यादिति भावः। असूयया भ्रुकुटीभङ्ग्या दोषारोपणेन इयमुक्तिः इयञ्च सासूयदृष्टिः आक्रोशज्ञापनेन धीवर-लब्धपारितोषिकस्य किञ्चिदंशमादातुमिति बोध्यम्।

"अर्थे कृतेऽव्ययं तावत् तादर्थ्ये वर्त्तते द्वयम्" इति कोषसारः।

(घ) धीवर इति। जालुकाभिप्रायं बुद्ध्वाह भट्टेति। हे भट्टारक! प्रभो! इतः अस्य पारितोषिकस्य। सुरामूल्यं मद्यक्रयणमूल्यम् अस्य अर्द्धं युष्मभ्यमपि दातु-मिच्छामीत्यर्थः।

(গ) জালুক। ওহে! আমি বলি—এই মৎস্য-শক্রর জন্য। (এই বলিয়া অসূয়ার ভাবে ধীবরের প্রতি চাহিল।)

(ঘ) ধীবর। হুজুর! ইহার অর্দ্ধ, তোমাদেরও মদের মূল্য হউক।

(१) जालुकः। णं भणाहि, इमस्स कए मच्छिआभत्तुणोत्ति। पुरुषमसूयया पश्यति।

(२) पुरुषः।…तुह्माणं सुमणोमुल्लं होउ। जालुकः। एत्तकी जुज्जइ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्के शंवुत्ते सि, कादम्बलीशक्खिके क्खु पढ़मं शोहिदे इच्छी-अदि। ता एहि, शुण्डिआलअं ज्जेव गच्छम्ह (१)। (ङ)

इति निष्क्रान्ताः सर्वे।

## अङ्कावतारः (२)। (च)

(ङ) धीवर! महत्तरः साम्प्रतमस्माकं प्रियवयस्यः संवृत्तोऽसि, कादम्बरीसाक्षिकं खलु प्रथमसौहृदमिष्यते, तदेहि शौण्डिकालयमेव गच्छामः।

---

(ङ) जालुक इति। उत्कोचदानाङ्गीकारमाकर्ण्य सन्तोषादाह महेति। साम्प्रतमुत्कोचदानाङ्गीकारात् परम्। महत्तरः अतीवप्रधानः। कादम्बरी मदिरा साक्षिणी यस्य तत्तादृशम् इष्यते। शौण्डिकालयं मद्यविक्रयिणो गृहम्।

(च) अङ्केति। अङ्कः अङ्कान्तरमवतरत्यस्मिन् अङ्कमङ्कान्तरमवतारयतीति वा अङ्कावतारः अर्थोपक्षेपकविशेषः। तथा च दर्पणे—

"अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ।
चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि॥
अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः।
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः॥"

तद्वृत्तिश्च—"यथा अभिज्ञाने पञ्चमाङ्के पात्रैः सूचितः। षष्ठाङ्कस्तदङ्कस्याविशेष इवावतीर्णः।" एतदङ्कवृत्तान्तोपजीवित्वात् षष्ठाङ्कस्येति भावः।

---

(ঙ) জালুক। ধীবর! তুমি এখন আমাদের প্রধান প্রিয়সুহৃৎ হইলে; লোকে মদ্যকে প্রথমসৌহার্দ্দের সাক্ষী বলিয়া ইচ্ছা করিয়া থাকে। সুতরাং আইস শুঁড়ির বাড়ীই যাই।

(ইহার পর সকলে চলিয়া গেল।)

(চ) অঙ্কাবতার সমাপ্ত ॥০॥

---

(१) श्यालः। धीवर! महत्तरो तुमं पिअवअस्सो दाणिं मे संवुत्तो।" सोण्डिआपणं...। (२) प्रवेशकः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षष्ठोऽङ्कः।

—०:*:०—

ततः प्रविशत्याकाशयानेन मिश्रकेशी (१)। (क)

मिश्र। णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसन्दिट्टं, ता जाव साहुजणस्स अहिसेअकालो भवे दाव सम्पदं इमस्स राएसिणो वुत्तन्तं पच्चक्खीकरिस्सं। णं मेणआ-

(ख) निर्वर्त्तितं मया पर्य्यायनिवर्त्तनीयमप्सरस्तीर्थसन्दिष्टम्, तद्यावत् साधुजनस्याभिषेककालो भवेत्, तावत् साम्प्रतमस्य राजर्षेर्वृत्तान्तं प्रत्यक्षीकरिष्यामि। ननु

(क) तत इति। मिश्राः सम्मिलिता अतीवघनाः केशा यस्याः सा मिश्रकेशी तदाख्या काचिदप्सराः। आकाशयानेन विमानेन।

(ख) मिश्रेति। अप्सरस्तीर्थैः रम्भादिभिरप्सरोयोनिभिः सन्दिष्टमभिहितम्, पर्य्यायेण क्रमेण निर्वर्त्तनीयम् अस्माभिरप्सरोगणैरेव सम्पादनीयं कुवेरस्य परिचर्य्यात्मकं कर्मेत्यर्थः, मया निर्वर्त्तितं सम्पादितम्। तीर्थमित्युपक्रम्य "योनौ पात्रे दर्शने च" इति हेमचन्द्रः। साधुजनस्य देवलोके वार्द्धुषिकरूपस्य कुवेरस्य, अभिषेककालः स्नानसमयो भवेत्। राजर्षेर्दुष्मन्तस्य। कुवेरस्य स्नानसमयोपस्थितौ तु मयापि तत्रैव गन्तव्यमिति भावः।

"साधुर्जिने मुनौ वार्द्धुषिके सज्जनरम्ययोः" इत्यपि हेमचन्द्रः।

(ক) তদনন্তর বিমানে মিশ্রকেশীর প্রবেশ।

(খ) মিশ্রকেশী। ক্রমশঃ সম্পাদন করিবার জন্য, অপ্সরাদিগের প্রতি যে সংবাদ ছিল, তাহা আমি সম্পাদন করিয়াছি। অতএব যে পর্য্যন্ত কুবেরের স্নানের সময় উপস্থিত হয়, তাহার মধ্যে এই রাজর্ষির বৃত্তান্ত প্রত্যক্ষ করিব। মেনকার সম্বন্ধে শকুন্তলা এখন আমার

(१) ततः···सानुमती नामाप्सराः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्बन्धेण सरीरभूदा दाणिं मे सउन्तला, तए अ दुहिदु-णिमित्तं सन्दिट्ठपूव्वह्मि। समन्तादवलोक्य। किस्सु क्खु उवत्थि-दुच्छवेवि दिअहे णिरुच्छवारम्भं विअ एदं राअउलं दीसदि। अत्थि मे विहवो सव्वं पणिधाणेण जाणिदुं, किन्तु सहीए मए आदरो माणइदव्वो। भोदु, इमाणं ज्जेव उज्जाण-वालआणं पास्सपरिवत्तिणी भविअ तिरक्करिणीए विज्जाए पच्छण्णा उवलहिस्सं। इति नाट्येनावतीर्य्य स्थिता (१)। (ख)

मेनकासम्बन्धेन शरीरभूतेदानीं मे शकुन्तला, तया च दुहितृनिमित्तं सन्दिष्टपूर्वास्मि। किन्नु खलु उपस्थितोत्सवेऽपि दिवसे निरुत्सवारम्भमिव इदं राजकुलं दृश्यते। अस्ति

मेनकायाः सम्बन्धेन कन्यात्वसम्बन्धेन हेतुना, शकुन्तला मे मम शरीरभूता देह-स्वरूपा, मेनकाया मातृष्वसृत्वात् तत्कन्यायाः शकुन्तलायाश्च मम भगिनीरूपत्वात् प्रिय-सखित्वाच्चेति भावः। तया च मेनकया, दुहितृनिमित्तं कन्याशकुन्तलार्थम्, पूर्वं सन्दिष्टेति सन्दिष्टपूर्वा 'शकुन्तलानिमित्तं दुष्मन्तः किं करोतीति तत्त्वविषये यथा त्वया ज्ञातव्यम्' इत्युक्तपूर्वेत्यर्थः।

समन्तात् सर्वासु दिक्षु। उपस्थित उत्सव उत्सवनियमो यत्र तस्मिन्। निर्विद्यते उत्सवारम्भो यस्मिन् तत् तादृशम्। राजकुलं राजभवनम्। सर्वं वृत्तान्तम्,

শরীরস্বরূপ হইয়াছে; অথ চ কন্যার নিমিত্ত পূর্ব্বে মেনকা আমাকে সংবাদ দিয়াছেন। (সকল দিক্ দৃষ্টিপাত করিয়া) যে দিন উৎসবের নিয়ম ছিল, সে দিনও এই রাজভবন নিরুৎসব দেখিতেছি কেন?

(१) सानुमती। णिव्वत्तिअं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसण्णिज्झं जाव साहुजणस्स अहिसेअकालो त्ति। संपदं इमस्स राएसिणो उदन्तं पच्चक्खी-करिस्सं।...णिमित्तं आदिट्ठपुव्वह्मि।...किण्णु क्खु उस्सवे वि निरुस्सवारम्भं। अत्थं परिहादुं।...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः प्रविशति चूताङ्कुरमालोकयन्ती चेटी तत्पृष्ठेऽपरा च (१)। (ग)

प्रथमा। कधं उवत्थिदो महुमासो। (घ)

मे विभवः सर्वं प्रणिधानेन ज्ञातुम्। किन्तु सख्या मया आदरो मानयितव्यः। भवतु, एतामेवोद्यानपालकानां पार्श्वपरिवर्त्तिनी भूत्वा तिरस्करिण्या विद्यया प्रच्छन्ना उपलप्स्ये।

(घ) कथमुपस्थितो मधुमासः।

प्रणिधानेन ध्यानेन, ज्ञातुम्, मे मम विभवः शक्तिरस्ति। तर्हि कथमेतावानागमनपरिश्रम इत्याह किन्त्विति। सख्याः शकुन्तलायाः, आदरः प्रत्यक्षतो राजवृत्तान्तदर्शनाय आदरेण कृतोऽनुरोधः, मया मानयितव्यः सम्मानेन रक्षणीयः। तथा च यत्र कुत्रापि स्थिता ध्यानेन सर्वमवगन्तुं शक्तापि शकुन्तलायाः सादरानुरोधादेव एतावन्तमागमनपरिश्रममहमङ्गीकृतवतीति सरलार्थः। तिरस्करिण्या अदृश्यताजनिकया, विद्यया मन्त्रेण, प्रच्छन्ना अदृश्यदेहा, सती, उपलप्स्ये राजवृत्तान्तं ज्ञास्यामि। नाट्येन अभिनयेन।

(ग) तत इति। चूताङ्कुरमाम्रमुकुलम्। चेटी काचित् दासी, तस्याः पृष्ठे पश्चाद्भागे, अपरा चेटी च, प्रविशतीत्यन्वयः।

(घ) प्रथमेति। कथमिति हर्षे। मधुमासो वसन्तमासश्चैत्र इति यावत्। "कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्च" इति मेदिनी।

ধ্যানে সমস্ত জানিবার ক্ষমতাই আমার আছে; কিন্তু সখীর সাদর অনুরোধ রাখিতে হইবে। হউক, এই উদ্যানপালকদিগের পার্শ্ববর্ত্তিনী হইয়া, তিরস্করিণী বিদ্যাদ্বারা গুপ্ত থাকিয়া, রাজার বৃত্তান্ত জানিব। (এই বলিয়া অভিনয়ের ধরণে নামিয়া থাকিল।)

(গ) তাহার পর আমের মুকুল দেখিতে দেখিতে একটী দাসী এবং তাহার পিছনে আর একটী দাসীর প্রবেশ।

(ঘ) প্রথমা দাসী। আঁ্যা! চৈত্রমাস উপস্থিত হইয়াছে।

(१) चेटी अपरा च पृष्ठतस्तस्याः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आतम्महरिअवेण्टं उस्ससिअं विअ वसन्तमासस्स ।
दिट्टं चूअङ्कुरअं खणमङ्गल्लं णिअच्छामि (१) ॥१॥

द्वितीया । परहुदिए ! किं एदं एआइणी मन्तेसि । (ङ)

---

आताम्रहरितवृन्तं उच्छ्वसितमिव वसन्तमासस्य ।
दृष्टं चूताङ्कुरकं क्षणमङ्गल्यं नियच्छामि ॥१॥

(ङ) परभृतिके ! किमेतदेकाकिनी मन्त्रयसे ।

---

आताम्रेति । आताम्राणि ईषत्ताम्रवर्णानि हरितानि पालाशवर्णानि च वृन्तानि यस्य तत्, क्षणमङ्गलाय उत्सवरूपमङ्गलकार्य्याय हितमिति क्षणमङ्गल्यम्, वसन्तमासज्ञापकत्वात् तदुत्सवसम्पादकत्वाच्चेति भावः, दृष्टमवलोकितमिमम्, चूताङ्कुरकम् आम्रमुकुलम्, वसन्तमासस्य चैत्रमासस्य, उच्छ्वसितं जीवितमिव, नियच्छामि निश्चिनोमि सम्भावयामीत्यर्थः, वसन्तमाससत्तासूचकत्वादित्याशयः ।

अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः ।

"निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः । "नियमः स्यात् प्रतिज्ञायां निश्चये यन्त्रणे व्रते" इति हेमचन्द्रः । आर्य्या जातिः ॥१॥

(ङ) द्वितीयेति । परैरन्यैर्भ्रियत इति परभृतिः ततः संज्ञायां कप्रत्ययात् परभृतिकेति प्रथमदास्या नाम, तेन च सम्बोधनम् । तन्नाम्ना कोकिला च गम्यते । मन्त्रयसे गुप्तं भाषसे ।

---

যাহার বৃন্ত ঈষৎ তাম্র ও হরিতবর্ণ এবং যে উৎসবরূপ মঙ্গলকার্য্য সম্পাদন করিয়া থাকে, দৃশ্যমান সেই আম্রমুকুলকে চৈত্রমাসের জীবনের ন্যায় মনে করিতেছি ॥১॥

(ঙ) দ্বিতীয়া দাসী। পরভৃতিকা! তুই একাকিনী এই কি বলিতেছিস ? ।

---

(१) प्रथमा । आतम्बहरिअपण्डुर ! वसन्तमासस्स जीअसव्वस्स ! ।
दिट्ठो सि चूअकोरअ ! उदुमङ्गल ! तुमं पसाएमि ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रथमा। महुअरिए! चूअकलिअं पेक्खिअ उम्मत्तिआ क्खु परहुदिआ होदि। (च)

द्वितीया। सहर्षं त्वरया उपगम्य। कधं उवत्थिदो महुमासो!। (छ)

प्रथमा। महुअरिए! तवावि एसो कालो मदविब्भमुग्गीदाणं (१)। (ज)

(च) मधुकरिके! चूतकलिकां प्रेक्ष्य उन्मत्ता खलु परभृतिका भवति।

(छ) कथमुपस्थितो मधुमासः।

(ज) मधुकरिके! तवापि एष कालो मदविभ्रमोद्गीतानाम्।

(च) प्रथमेति। मधु मधुवत् मधुरं वचनं पुष्परसञ्च करोति वदति सञ्चिनोति चेति मधुकरी, ततोऽपि च संज्ञायां कप्रत्ययात् मधुकरिकेति द्वितीयदास्या नाम, तेनापि च सम्बोधनम्। तन्नाम्ना भ्रमरी च गम्यते। चूतकलिकाम् आम्रमुकुलम्। परभृतिका तदाख्या दासी, अहमित्याशयः, कोकिला च उन्मत्ता वसन्तकालाविर्भावेन कामाविर्भावात् वसन्तकालाविर्भावाच्चेति भावः।

"वनप्रियः परभृतः कोकिलः पिक इत्यपि" इत्यमरः।

(छ) द्वितीयेति। अत्रापि कथंशब्दो हर्षे।

(ज) प्रथमेति। हे मधुकरिके! तदाख्यदासि! भ्रमरि! च। कालो वसन्ताख्यः, मदविभ्रमेण मत्तताविलासेन उद्गीतानामुच्चैःस्वरेण गानानाम्। एतेन मधुकरिकाया वासन्ती गीतिः प्रचलितेति निर्द्धार्थ्यानयेदमुक्तमिति बोध्यम्।

(চ) প্রথমা দাসী। মধুকরিকা! পরভৃতিকা আমের কলিকা দেখিয়া উন্মত্ত হইয়া থাকে।

(ছ) দ্বিতীয়া দাসী। (আনন্দের সহিত তাড়াতাড়ি নিকটে যাইয়া) ও! চৈত্রমাস উপস্থিত হইয়াছে।

(१)···तव दासि···मदविब्भमगीदाणं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वितीया। सहि! अवलम्बस्स मं, जाव अग्गपदे परिट्ठिदा भविअ चूअप्पसवं गेह्णिअ सम्पादेमि कामदेवस्स अच्चणं (१)। (झ)

प्रथमा। जइ एव्वं, ता ममावि अद्धं अच्चणफलस्स। (ञ)

द्वितीया। सहि! अकहिदे वि एदं सम्पज्जइ एव्व। जदो एक्कं ज्जेव णो एदं सरीरं द्विधा भिण्णं पजावइणा। सखीमवलम्ब्य चूतप्रसवं गृहीत्वा। अम्महे! अप्पवुद्धोवि चूअप्पसवो

---

(झ) सखि! अवलम्बस्व माम्, यावदग्रपदे परिस्थिता भूत्वा चूतप्रसवं गृहीत्वा सम्पादयामि कामदेवस्य अर्चनम्।

(ञ) यदि एवम्, तन्ममाप्यर्द्धमर्च्चनफलस्य।

(ट) सखि! अकथितेऽपि एतत् सम्पद्यत एव। यत एकमेव नौ एतत् शरीरं

---

(झ) द्वितीयेति। अवलम्बस्व यथा न पतामि तथा धारय। अग्रपदे पदाग्रस्थाङ्गुष्ठे मात्रे। चूतप्रसवमाम्रपुष्पम्।

"स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः।

(ञ) प्रथमेति। यदि एवं मम धारणेन त्वया चूतप्रसवग्रहणं कर्त्तव्यं तत् तदा, अर्च्चनफलस्य तच्चूतप्रसवद्वारा पूजनफलस्य अर्द्धं ममापि भवेत्। यदि तदनुमन्यसे, तदा त्वामहमवलम्बे इति भावः।

---

(झ) প্রথমা দাসী। মধুকরিকা! মত্ততাবশতঃ তোরও উচ্চৈঃস্বরে গান করিবার এই সময়।

(ঝ) দ্বিতীয়া দাসী। সখি! আমাকে ধর, যাবৎ আমি পায়ের আগায় দাঁড়াইয়া, আমের কলিকা লইয়া, কামদেবের পূজা সম্পন্ন করি।

(ঞ) প্রথমা দাসী। যদি এইরূপ হয়, তবে আমারও পূজাফলের অর্দ্ধ হইবে ত?।

---

(१)···अग्गपाअट्ठिआ···कामदेअच्चणं करेमि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बन्धणभङ्गसुरही राअदि। कपीतहस्तं कृत्वा। णमो भअवदे मअरद्धजाअ (१)। (ट)

अरिहसि मे चुअङ्कुर! दिण्णो कामस्स गहिदचावस्स।
पहिअजणजुअइलक्खो पञ्चन्तरिओ सरो होदुं (२) ॥२॥

---

द्विधा भिन्नं प्रजापतिना। अहो! अप्रबुद्धोऽपि चूतप्रसवो बन्धनभङ्गसुरभी राजते। नमो भगवते मकरध्वजाय।

---

(ट) द्वितीयेति। अभणितेति मया अननुमतेऽपीत्यर्थः; एतत् अर्चनफलस्य तवार्धम्, सम्पद्यत एव जायत एव, नौ आवयोः। प्रजापतिना विधात्रा। भिन्नं विभक्तम्। तथा च आवयोरुभयोरेव हृदयस्याभिन्नवृत्तिकतया आत्मनोऽप्यभिन्नत्वमेव सम्भाव्यते, केवलं शरीरमात्रतो भेदः। तेन मत्कृतस्यापि त्वत्कृतत्वेन अर्चनफलस्यार्द्धं तवापि स्यादेवेति भावः। अप्रबुद्धोऽपि अविकसितोऽपि। बन्धनभङ्गेन वृन्तखण्डनेन सुरभिः सुगन्धिः। कपोतहस्तं हस्तयोः कपोताकारमञ्जलिम्। कपोतहस्तलक्षणमुक्तं सङ्गीतरत्नाकरे—

"कपोतोऽसौ करौ यत्र श्लिष्टमूलाग्रपार्श्वकौ।"

मकरो मीनविशेषः ध्वजो यस्य तस्मै कामदेवाय।

---

(ট) দ্বিতীয়া দাসী। সখি! না বলিলেও ইহা হইবেই। যেহেতু বিধাতা আমাদের একই শরীরকে দুইভাগে বিভক্ত করিয়াছেন। (সখীকে ধরিয়া, আমের কলিকা লইয়া) ওহে! বিকসিত না হইলেও আমের কলিকা, বোঁটা ভাঙ্গামাত্র সুগন্ধি হইয়াছে। (অঞ্জলি বন্ধন করিয়া) ভগবান্ কামদেবকে নমস্কার করি।

---

(१)...अकहिए वि एदं सम्पज्जइ, जदो एक्कं एव्व णो जीविदं दुहाट्ठिदं सरीरं। सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णती।...सुरही राअदि।

(२) तुमं सि मए चूअङ्कुर! दिण्णो कामस्स गहिअधणुणो।...पञ्चव्भहिओ सरो होहि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कञ्चुकी। प्रविश्य सक्रोधम्। मा तावदनात्मज्ञे। देवेन प्रतिषिद्धेऽपि मधूत्सवे चूतकलिकाभङ्गमारभसे (१)। (ठ)

अर्हसि मे चूताङ्कुर! दत्तः कामस्य गृहीतचापस्य।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भवितुम्॥२॥

अर्हसीति। हे चूताङ्कुर! आम्रमुकुल! दत्तो मया कामदेवाय उत्सृष्टस्त्वम्, पथिकजनानां विरहिलोकानां युवतय एव लक्ष्याणि शरव्याणि यस्य स तथोक्तः विरहियुवतिताड़यितेत्यर्थः, पञ्चानां सम्मोहनादीनां पञ्चसंख्यकानां शराणाम् अन्तर्गतः, गृहीतचापस्य धृतधनुषः कामस्य शरो भवितुमर्हसि, तथापि चूताङ्कुरादित्याशयः। तथा चोक्तममरकोषटीकायां रघुनाथेन—

"सम्मोहनोन्मादनौ च शोषणस्तापनस्तथा।
स्तम्भनश्चेति कामस्य पञ्च बाणाः प्रकीर्त्तिताः॥"
"अरविन्दमशोकञ्च चूतञ्च नवमल्लिका।
नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः॥"

आर्य्या जातिः॥२॥

(ठ) कञ्चुकीति। मा तावदेवं कुरुष्वेत्यर्थः। आत्मानं न जानासीति अनात्मज्ञा तत्सम्बोधनम्। तथा च तुच्छं दासीमात्रमात्मानं यदि जानीयाः तदा कथमपि राजाज्ञालङ्घनं न कुर्य्या इति भावः। देवेन राज्ञा। मधूत्सवे चैत्रमासीयोत्सवे। अत्र काकुवशेन चूतकलिकाभङ्गस्य अन्याय्यत्वं व्यज्यते।

হে আম্রমুকুল! আমি তোমাকে দান করিলাম; তুমি ধনুর্দ্ধারী কামদেবের পাঁচের অন্তর্গত বাণ হইতে পার, বিরহীদিগের যুবতীরমণীগণ তোমার লক্ষ্য হইবে॥২॥

(ঠ) কঞ্চুকী। (প্রবেশ করিয়া ক্রোধের সহিত।) ওরে আত্মজ্ঞানহীনারা? এরূপ করিস্ না; মহারাজ বসন্তোৎসব নিষেধ করিয়াছেন, আর তোরা আমের কলিকা ভাঙ্গিতে আরম্ভ করিয়াছিস।

(१) प्रविश्यापटीक्षेपेण कुपितः कञ्चुकी।···वसन्तोत्सवे त्वमाम्रकलिकाभङ्गम्···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभे। भीते। पसीददु पसीददु अज्जो, अगहिदत्था अह्मे (१)। (ड)

कञ्चुकी। हुं, न किल श्रुतं भवतीभ्यां यद्वासन्तैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिश्च। तथाहि—(२) (ढ)

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
सन्नद्धं यदपि स्थितं कुरुवकं तत् कोरकावस्थया।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम्॥३॥

(ड) प्रसीदतु प्रसीदतु आर्य्यः, अगृहीतार्थे आवाम्।

(ड) उभे इति। भीते सख्यौ मुखमालिन्यादिना भयमभिनयन्त्याविल्यर्थः। अगृहीतः अनवगतः अर्थः राजकर्तृकमधूत्सवनिषेधरूपो विषयो याभ्यां ते। तथा च अज्ञानाचरणेन अपराधाल्पत्वात् तं मर्षयत्वित्याशयः।

(ढ) कञ्चुकीति। हुम् इति प्रश्ने। वासन्तैः वसन्तकालीनैः तदाश्रयिभिः वासन्ततरुवासिभिः पक्ष्यादिभिश्च देवस्य राज्ञः, शासनं मधूत्सवनिषेधादेशः, प्रमाणीकृतमङ्गीकृतं पालितमित्यर्थः। तत् पालनं दर्शयितुमाह तथाहीति।

(ড) দাসীদ্বয়। (ভীত হইয়া) আর্য্য! প্রসন্ন হউন, প্রসন্ন হউন; আমরা এবিষয় জানি না।

(ঢ) কঞ্চুকী। ও! তোরা শুনিস্ নাই যে, বসন্তকালের বৃক্ষসমূহ, বা তদবস্থিত পক্ষিপ্রভৃতি সকলেই মহারাজের আদেশ পালন করিয়াছে। দেখ—

(१) उभे। भीते। पसीदतु अज्जो। अग्गहीदत्था वअं।
(२) कञ्चुकी। न किल श्रुतं युवाभ्यां यत् वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च। तथाहि।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिश्र। णत्थि एत्थ सन्देहो, महाप्पहावो क्खु राएसी (१)। (श

चूतानामिति। चिरनिर्गतापि बहुपूर्वं बहिर्गतापि, चूतानामाम्राणां कलिका स्वं स्वकीयं स्वधारणीयमित्यर्थः, रजः परागम्, न बध्नाति न धारयति। तथा च सर्वत्र निर्गमानन्तरमेव कलिका परागं धत्ते अत्र तु चिरनिर्गतापि सा राजशासनादेव परागं न धत्त इत्यभिप्रायः यदपि कुरबकं कुरबकमुकुलम्, सन्नद्धं बहिर्मुखम्, तदपि कोरकावस्थया कलिकारूपेणैव स्थितम्, राजशासनात् न पुनर्विकसितमिति भावः। तथा शिशिरे शीतकाले, गतेऽपि अतीतेऽपि, पुमांसश्च ते कोकिलाश्चेति पुंस्कोकिलास्तेषाम्, रुतं शब्दः, कण्ठेषु स्खलितं विच्युतम् आविर्भावकाले कण्ठेष्वेव विस्रस्तमित्यर्थः। स्मरोऽपि अन्यत्र का कथा स्वयं कामदेवोऽपि, चकितो भीतः सन्, तूणात् तूणीरात् अर्द्धकृष्टमर्द्धमुत्तोलितम्, शरं बाणम्, संहरति पुनर्यथास्थानं स्थापयति, शङ्के इत्यहं सम्भावयामि। तेन च अचेतनैर्द्देवैरविशिष्टचेतनैः पश्वादिभिः देवै राजशासनं पाल्यते, युष्माभिस्तु न श्रुतमपीति कथं सङ्गच्छत इति भावः।

अत्र "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः। उत्प्रेक्षावाचकाः" इति दर्पणाभिधानेन शङ्के इति पदसत्त्वात् वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः। सर्वेषामेव पुरुषजातीयानां स्त्रीजात्यपेक्षया मदाधिक्यात् अत्रापि पुंस्कोकिलानां रव एव रुतसम्भवे राजशासनादेव तन्निवारणमिति ज्ञापनार्थं कोकिलानां पुंस्त्वेन विशेषणमिति न अपुष्टार्थत्वदोषः।

शार्दूलविक्रीडितं वृत्तम् ॥३॥

---

আমের মুকুল, বহুকাল নির্গত হইয়াও আপনার পরাগ ধারণ করিতেছে না; কুরুবকের যে মুকুল বাহির হইয়াছিল, তাহা কলিকা অবস্থাতেই রহিয়া গিয়াছে এবং শীতকাল অতীত হইলেও, পুরুষজাতীয় কোকিলগণের রব অন্তর্হিত হইয়াছে। সুতরাং আমি মনে করি— কামদেবও ভীত হইয়া, তূণ হইতে অর্দ্ধ আকৃষ্ট শর উপসংহার করিতেছেন ॥৩॥

---

(१) उभे। णत्थि सन्देहो··।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रथमा। अज्ज! कदिचिदिअसाइं मित्तावसुणा रट्ठिएण भट्टिणो पादमूलं पेसिदा अह्मे इध पमदवणे चित्तकम्म अप्पिदुं। ता आगन्तुअदाए ण सुदपुव्वो अह्मेहिं एसो वुत्तन्तो (१)। (त)

(ण) नास्त्यत्र सन्देहः, महाप्रभावः खलु राजर्षिः।

(त) आर्य्य! कतिचिद्दिवसानि मित्रावसुना राष्ट्रियेण भर्त्तुः पादमूलं प्रेषिते आवाम् इह प्रमदवने चित्रकर्म्म अर्पयितुम्, तदागन्तुकतया न श्रुतपूर्वं आवाभ्यामेष वृत्तान्तः।

(ण) मिश्रेति। अत्र च तकल्त्रिकादिभिः राजशासनप्रमाणीकरणे तत्र हेतुमाह महेत्यादि। खलु यस्मात्।

उत्तररामचरिते सीताया इव अस्या मिश्रकेश्या अपि प्रभावेण देहसाहस्रत्वात् वाक्यस्यापि अन्यैरश्राव्यत्वमिति बोध्यम्। एवं परत्रापि।

(त) प्रथमेति। चित्रकर्म्म अर्पयितुं पटे इति शेषः, पटे चित्रं कारयितुमित्यर्थः, राष्ट्रियेण राज्ञः श्यालकेन, मित्रावसुना तदाख्येन केनचित् जनेन, कतिचित् दिवसानि यावत्, भर्त्तुर्दुष्मन्तस्य, पादमूलं चरणान्तिकम्, आवां प्रेषिते। तत् तस्मात्, आगन्तुकतया अचिरागततया। एष वृत्तान्तः वसन्तोत्सवनिषेधवार्त्ता।

"राजश्यालस्तु राष्ट्रियः" इत्यमरः। "मूलमाद्ये शिफायां स्यात् भे निकुञ्जेऽन्तिकेऽपि च" इति विश्वः।

(ণ) মিশ্রকেশী। এবিষয়ে সন্দেহ নাই; কারণ, রাজর্ষির প্রভাব অত্যন্ত বেশী।

(ত) প্রথম দাসী। আর্য্য! কয়েক দিন হইল রাজার শ্যালক মিত্রাবসু এই প্রমদবনে চিত্রকার্য্য করাইবার জন্য, আমাদিগকে রাজার

(१) प्रथमा। अज्ज! कइ दिवसाइं अह्माणं मित्तावसुणा रट्ठिएण भट्टिणो पादमूलं पेसिदाणं। एत्थ अ णो पमदवणस्स पालणकम्म समप्पिअं।...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कञ्चुकी । तेन हि न पुनरेवं प्रवर्त्तितव्यम् (१) । (थ)

उभे । सकौतूहलम् । अज्ज ! जइ इमिणा जणेण सोदव्वं, ता कधेदु अज्जो किं णिमित्तं भट्टिणा वसन्तुस्सवो पडिसिद्धोत्ति (२) । (द)

मिस्र । उस्सवप्पिआ क्खु राआणो होन्ति, ता एत्थ गुरुणा कारणेण होदव्वं -(३) । (ध)

(द) आर्य्य ! यद्यनेन जनेन श्रोतव्यम्, तत् कथयतु आर्य्यः किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्ध इति ।

(ध) उत्सवप्रियाः खलु राजानो भवन्ति, तदत्र गुरुणा कारणेन भवितव्यम् ।

(थ) कञ्चुकीति । एवं चूतकलिकाभङ्गाद्युत्सवाङ्गानुष्ठाने ।

(द) उभे इति । अनेन जनेन मयेत्यर्थः । आर्य्यो मान्यो भवान् । भर्त्रा राज्ञा दुष्मन्तेन ।

(ध) मिस्रेति । तत् तस्मात्, अत्र प्रियस्यापि उत्सवस्य प्रतिषेधे, गुरुणा महता ।

निकट पাঠাইয়া দিয়াছেন । অতএব আমরা শীঘ্র আসিয়াছি বলিয়া এ বৃত্তান্ত শুনিতে পাই নাই ।

(থ) কঞ্চুকী । তাহা হইলে, এ কার্য্যে আর প্রবৃত্ত হইও না ।

(দ) দাসীদ্বয় । (কৌতুকের সহিত) আর্য্য ! এই ব্যক্তির যদি শুনিবার যোগ্য হয়, তবে বলুন দেখি—রাজা কি জন্য বসন্তোৎসব নিষেধ করিয়াছেন ।

(ধ) মিশ্রকেশী । রাজারা উৎসবপ্রিয় হইয়া থাকেন ; এবিষয়ে গুরুতর কারণই হইবে ।

(१) भवतु । न पुनः··· । (२)···कोऊहलं णो··· ।

(३) सानुमती ।···क्खु मणुस्सा । गुरुणा··· ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कञ्चुकी। स्वगतम्। बहुलीभूतोऽयमर्थः, तत् किं न कथ्यते। प्रकाशम्। अस्ति भवत्योः कर्णपथमायातं शकुन्तला-प्रत्यादेशकौलीनम्? (१)। (न)

उभे। अज्ज! सुदं रट्ठिअमुहादो अङ्गुलीअदंसणं जाव। (प)

कञ्चुकी। तेन हि स्वल्पं कथयितव्यम्। यदैवाङ्गुरीय-दर्शनादनुस्मृतं देवेन सत्यमूढ़पूर्वा रहसि मया तत्रभवती शकुन्तला मोहात् प्रत्यादिष्टेति, तदा प्रभृत्येव पश्चात्ताप-मुपगतो देवः। तथाहि—(२) (फ)

(प) आर्य्ये! श्रुतं राष्ट्रियमुखात् अङ्गुरीयकदर्शनं यावत्।

(न) कञ्चुकीति। अयमर्थः वसन्तोत्सवप्रतिषेधस्य कारणरूपो विषयः, बहुली-भूतः प्रायेण राज्यमयप्रकाशात् विस्तृतीभूतः, तत् तस्मात्, किं न कथ्यते तदुत्सव-प्रतिषेधकारणमिति शेषः। शकुन्तलायाः प्रत्यादेशस्य प्रत्याख्यानस्य कौलीनं लोकवादः, भवत्योः कर्णपथमायातं प्राप्तमस्ति। अत्र काकुवशात् प्रश्नो गम्यते।

"स्यात् कौलीनं लोकवादे" इत्यमरः।

(प) उभे इति। राष्ट्रियस्य राजश्यालस्य मित्रावसोर्मुखात्।

(न) कञ্চুকী। ( স্বগত ) এ বিষয়, বিস্তৃতই হইয়া পড়িয়াছে, তবে আর না বলিব কেন। ( প্রকাশ্যে ) শকুন্তলাপ্রত্যাখ্যানের প্রবাদ, তোমাদের কাণে আসিয়াছে ?।

(প) দাসীদ্বয়। আর্য্য! আমরা রাজশ্যালকের মুখে অঙ্গুরী দর্শনপর্য্যন্ত শুনিয়াছি।

(१) कञ्चुकी। बहुलीभूतमेतत् किं न कथ्यते। किमत्रभवत्योः कर्णपथं नायातं...। (२) कञ्चुकी। अल्पं। यदैव खलु अङ्गुलीयकदर्शनात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते,
शय्योपान्तविवर्त्तनैर्विगमयत्युन्निद्र एव क्षपाः (१)।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च ब्रीड़ावनम्रश्चिरम् ॥४॥

(फ) कञ्चुकीति। रहसि निर्जनस्थाने, ऊढ़पूर्वा गान्धर्वविधानेन परिणीतपूर्वा, किन्तु मोहात् चित्तविभ्रमात्, प्रत्यादिष्टा प्रत्याख्याता, इति देवेन राज्ञा, यदैवानुस्मृतमित्यन्वयः। पश्चात्तापमनुतापम्; उपगतः प्राप्तः।

रम्यमिति। देव इति गद्यस्थं कर्त्तृपदमत्र सम्बध्यते। तेन देवो राजा, रम्यं चन्द्रचन्दनादिकं मनोहरं वस्तु, द्वेष्टि नाद्रियते; सहचारिण्या विरहेण तादृशवस्तुनः सुखदायकत्वाभावादिति भावः। यथा पुरा पूर्ववदित्यर्थः, प्रकृतिभिरमात्यैः, प्रत्यहं न सेव्यते राजकार्य्यसम्पादनार्थं नोपास्यते राजकार्य्यं न पश्यतीत्यर्थः। उन्निद्रः विनिद्रः सन् स उन्निद्रो जागरित एव, शय्यायाः उपान्तयोः प्रान्तदेशयोः विवर्त्तनैः पार्श्वपरिवर्त्तनैः गमनागमनैः, क्षपा रात्रीः, विगमयति अतिवाहयति। तथा यदा दाक्षिण्येन सकलवनितासु समानानुरागित्वेन हेतुना, अन्तःपुरेभ्यः अन्तःपुरवासिनीभ्यः स्त्रीभ्यः, उचितां योग्याम्, वाचं वाक्यम्, ददाति अर्पयति अन्तःपुरवासिनीभिः स्त्रीभिः सह उपयुक्तमालपतीत्यर्थः, तदा गोत्रेषु नामसु, स्खलितः प्रभ्रष्टः कमलानाम्नि उच्चारयितव्ये शकुन्तलानामोच्चारितवान् सन्नित्यर्थः, चिरं बहुकालं व्याप्य, ब्रीड़या लज्जया अवनतः अवनतमुखश्च भवति। शकुन्तलाप्रत्याख्यानजनितानुतापेन सततनतत्स्मरणादेवामी भावा राज्ञ इति भावः।

(ফ) কঞ্চুকী। তাহা হইলে অল্পই বলিতে হইবে। অঙ্গুরী দর্শন করিয়া যখনই রাজা স্মরণ করিলেন যে, 'আমি সত্যই নির্জনে শকুন্তলাকে পূর্ব্বে বিবাহ করিয়াছিলাম এবং মোহবশতঃ তাহাকে প্রত্যাখ্যান করিয়াছি' তদবধি রাজা অনুতাপ ভোগ করিতেছেন। দেখ—

(१) शय्याप्रान्तविवर्त्तनैः...।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिश्र। पिअं मे पिअं (१)। (ब)

काञ्चुकी। अस्मात् प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः। (भ)

---

(ब) प्रियं मे प्रियम्।

---

अत्र अनुतापप्राप्तिप्रतिपादनकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः। तथा द्वेष्टीत्यादिकर्त्तृवाच्यपरस्मैपदान्तक्रियासमूहमध्ये सेव्यत इति कर्म्मवाच्यात्मनेपदान्तक्रियोपन्यासात् भग्नप्रक्रमतादोषः, रूढ़िप्रयोजनाभावेऽपि अन्तःपुरशब्देन तत्स्थस्त्रीषु लक्षणाकरणात् नेयार्थत्वदोषश्च, 'रम्यं द्वेष्टि, यथा पुरा स्वविषयान् नो पश्यति प्रत्यहम्' इति प्रथमचरणपाठेन अन्तःपुरेभ्य इत्यत्र 'सीमन्तिनीभ्यः' इति पाठेन च तयोः समाधानं विधेयम्।

"प्रकृतिः सहजे योनावमात्ये परमात्मनि" इति विश्वः। "एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः" इति साहित्यदर्पणः। "गोत्रं नाम्नि तथान्वये" इति हलायुधः।

शार्दूलविक्रीड़ितं वृत्तम् ॥४॥

(ब) मिश्रेति। प्रियं प्रीतिकरम्, इदं वचनमिति शेषः; शकुन्तलां प्रति राज्ञोऽनुरागसूचकत्वादिति भावः।

---

রম্য বস্তুর প্রতি বিদ্বেষ করিতেছেন; পূর্ব্বের ন্যায় কর্ম্মচারীকর্ত্তৃক সেবিত হইতেছেন না; জাগরিত থাকিয়াই শয্যার এ-পাশ ও-পাশ করিয়া রাত্রি অতিবাহিত করিতেছেন; আর যখন অন্তঃপুরের রমণীদিগের নিকট, নিজের দাক্ষিণ্যবশতঃ উপযুক্ত উত্তর দেন, তখন কাহারও নাম বলিতে শকুন্তলানাম বলিয়া বহুকাল যাবৎ লজ্জায় অবনত হইয়া থাকেন ॥৪॥

(ব) মিশ্রকেশী। প্রীতিকর, আমার প্রীতিকর বটে।

---

(१) सानुमती। पिअं मे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभे । जुज्जदि । (म)

नेपथ्ये । एदु एदु भवं । (य)

कञ्चुकी । कर्णं दत्त्वा । अये ! द्रुत एवाभिवर्त्तते देवः, तद्गच्छतं स्वकर्मानुष्ठानाय (१) । (र)

उभे । तह । इति निष्क्रान्ते । (ल)

(म) युज्यते ।

(य) एतु एतु भवान् ।

(ल) तथा ।

(भ) कञ्चुकीति । प्रभवतः प्रभावविशिष्टात् अतीवप्रबलात्, वैमनस्यात् व्याकुल-मनस्त्वात् ।

(म) उभे इति । युज्यते उत्सवप्रत्याख्यानमिति शेषः, इति शेषो उत्सवानु-ष्ठानस्य तदुद्दीपकत्वादिति भावः ।

(य) नेपथ्य इति । विदूषकस्योक्तिरियम् ।

(र) कञ्चुकीति । कर्णं दत्त्वा कर्णप्रेरणेन नेपथ्योक्तिं श्रुत्वेत्यर्थः । स्वकर्मानु-ष्ठानाय चित्रकर्मकरणाय, गच्छतं युवामिति शेषः, राजान्तिकेऽवस्थानस्यानावश्यकत्वात् प्रत्युत विरक्तिकरत्वाच्चेति भावः ।

(ल) उभे इति । तथा गच्छाव एवेत्यर्थः ।

(ভ) কঞ্চুকী। মনের এই গুরুতর ব্যাকুলতাবশতঃ বসন্তোৎসব নিষেধ করিয়াছেন।

(ম) দাসীদ্বয়। হইতে পারে।

(য) নেপথ্যে। আসুন আসুন আপনি।

(র) কঞ্চুকী। (কাণ দিয়া) ওহে! রাজা এই দিকেই আসিতেছেন, অতএব নিজের কার্য্য করিবার জন্য তোমরা যাও।

(१) देवः, स्वकर्मानुष्ठीयताम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः प्रविशति पश्चात्तापसदृशवेशो राजा विदूषकः प्रतीहारी च। (ब)

कञ्चुकी। राजानं विलोक्य। अहो! सर्वास्ववस्थासु रामणीयकमाकृतिविशेषाणाम्। तथाह्येवं वैमनस्यपरीतोऽपि प्रियदर्शनो देवः! य एषः—(१) (श)

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत् काञ्चनमेकमेव वलयं श्वासापरक्ताधरः।
चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते (२) ॥५॥

(ब) तत इति। पश्चात्तापसदृशवेशः अनुतापोपयुक्तवेशः विकलदेहो नातिपरिच्छदवांश्चेति तात्पर्य्यम्।

(श) कञ्चुकीति। आकृतिविशेषाणां रूपविशेषाणाम्, सर्वासु आनन्दितासु विषण्णासु वा अवस्थासु; रामणीयकं सौन्दर्य्यम्। एवम् ईदृशेन वैमनस्येन अनुतापाग्नीव्याकुलतया परीतो युक्तोऽपि, प्रियं सौन्दर्य्यात् प्रीतिकरं दर्शनं यस्य सः।

प्रत्यादिष्टेति। प्रत्यादिष्टो निराकृतः विशेषमण्डनविधिः आधिक्येनालङ्करणकार्य्यं येन सः, वामप्रकोष्ठे वाममणिबन्धे, श्लथं पश्चात्तापेन कृशत्वात् शिथिलम्, एकमेव काञ्चनस्य स्वर्णस्येदमिति काञ्चनम्, वलयं कटकम्, बिभ्रत् धारयन्। श्वासै र्निश्वासैः

(ল) দাসীদ্বয়। তাহাই। (এই বলিয়া চলিয়া গেল।)

(ব) তদনন্তর অনুতাপের উপযুক্তবেশে রাজার এবং বিদূষক ও প্রতীহারীর প্রবেশ।

(শ) কঞ্চুকী। (রাজাকে দেখিয়া) কি আশ্চর্য্য! আকৃতিবিশেষের সকল অবস্থাতেই সৌন্দর্য্য থাকে। দেখ—এইরূপ আকুলতাযুক্ত হইলেও রাজার দর্শন প্রীতিকর। যে ইনি—

(१)···रमणीयत्वम्···। एवमुत्सुकोऽपि प्रियदर्शनो देवः। तथाहि।

(२)···वामप्रकोष्ठार्पितम्···श्वासोपरक्ताधरः।···प्रतान्तनयनस्तेजोगुणादात्मनः···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

মিশ্র। রাজানং বিলোক্য। ঠাণে ক্খু পচ্চাদেসবিমাণিদা বি ছুমস্স কিদে সউন্তলা কিলিস্সদি (১)। (ষ)

রাজা। ধ্যানমন্দং পরিক্রম্য। (স)

(ষ) স্থানে খলু প্রত্যাদেশবিমানিতাপি অস্য কৃতে শকুন্তলা ক্লিশ্যতি।

---

অপরক্তঃ অপগতরাগো মলিন ইতি যাবৎ অধরো যস্য সঃ। এতেনানুতাপাৎ শ্বাসানাং দীর্ঘত্বমুষ্ণত্বঞ্চ ব্যজ্যতে। চিন্তয়া শকুন্তলাধ্যানেন যৎ জাগরণং তেন প্রতাম্রে প্রকর্ষেণ তাম্রবর্ণে নয়নে যস্য সঃ, সংস্কারেণ শাণে ঘর্ষণাদিনা মলদূরীকরণেন উল্লিখিতস্তনুত্বঃ, মহামণির্মহামূল্যরত্নমিব, ক্ষীণোঽপি, অনুতাপাৎ কৃশোঽপি অন্যত্র ঘর্ষণাৎ ঘর্ষং গতোঽপি, আত্মনঃ স্বস্য, তেজোগুণৈঃ প্রভাবগুণৈঃ উজ্জ্বলতাগুণৈশ্চ, নালক্ষ্যতে ক্ষীণতয়া ন বুধ্যতে।

অত্র শ্রৌতোপমালঙ্কারঃ। শার্দ্দূলবিক্রীড়িতং বৃত্তম্ ॥৫॥

(ষ) মিশ্রেতি। প্রত্যাদেশেন প্রত্যাখ্যানেন বিমানিতা অপমানিতাপি শকুন্তলা, অস্য দুষ্মন্তস্য কৃতে নিমিত্তে, যৎ ক্লিশ্যতি বিরহক্লেশমনুভবতি, তৎ স্থানে খলু যুক্তমেব। প্রত্যাখ্যানাপমানেন বিরাগসম্ভবেঽপি অস্য অলৌকিকসৌন্দর্য্যবশাদেবানুরাগদার্ঢ্যাৎ বিরহক্লেশানুভবঃ সম্ভবত্যেবেতি ভাবঃ।

---

বিশেষরূপে অলঙ্কার ধারণ পরিত্যাগ করিয়াছেন, কেবল বাম মণিবন্ধে একটীমাত্র শিথিল স্বর্ণবলয় ধারণ করিতেছেন, নিশ্বাসে ওষ্ঠযুগল মলিন করিয়াছে এবং চিন্তাবশতঃ জাগরণে নয়নযুগল তাম্রবর্ণ হইয়াছে, তথাপি পরিমার্জিত মহামণির ন্যায় ক্ষীণ হইলেও নিজের তেজের গুণে তাহা লক্ষ্য করা যাইতেছে না ॥৫॥

(ষ) মিশ্রকেশী। (রাজাকে দেখিয়া) প্রত্যাখ্যান করায় অপমানিত হইয়াও শকুন্তলা যে ইহার জন্য ক্লেশ ভোগ করিতেছে, তাহা সঙ্গতই বটে।

---

(১) সানুমতী। রাজানং দৃষ্ট্বা।...কিলিস্সই।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम् ॥६॥

मिश्र। ण' ईदिसाइं तवस्सिणीए भागधेआइं । (छ)

विदू। अपवार्य्य । हुं, भूओवि लङ्घिदो एसो सउन्तला-वादेण। ण आणि कधं चिकिच्छिदव्वो भविस्सदि (१)। (च)

---

(छ) नन्वीदृशानि तपस्विन्या भागधेयानि ।

---

(ङ) राजेति । ध्यानेन शकुन्तलाचिन्तया मन्दमल्पमल्पम्, परिक्रम्य पादक्षेपं कृत्वा ।

प्रथममिति । सारङ्गस्य हरिणस्य अक्षिणी इव अक्षिणी चक्षुषी यस्यास्तया, प्रियया शकुन्तलया, प्रथमं प्रतिबोध्यमानमपि परिणयस्मरणाय विविधभावेन ज्ञाप्यमानमपि, सुप्तं निद्रितं निद्रितवदविदितसर्ववृत्तान्तम् इदं मदीयम्, हतहृदयं दग्धचित्तम्, अनुशयदुःखाय चिरमनुतापदुःखानुभवाय, सम्प्रति विबुद्धं जागरितं जागरितवद्विदितसर्ववृत्तान्तं जातमिति शेषः । सम्प्रत्यपि विबोधाभावे नेदमनुशयदुःखं सम्भाव्येति भावः ।

अत्र सारङ्गाक्ष्येति लुप्तोपमालङ्कारः ।

"चातके हरिणे पुंसि सारङ्गः शवले त्रिषु" इति "अथानुशयो दीर्घद्वेषानुतापयोः" इति चामरः । आर्य्या जातिः ॥६॥

(छ) मिश्रेति । तपस्विन्याः शोच्यायाः शकुन्तलायाः, भागधेयानि भाग्यानि, ईदृशानि ननु एवम्भूतान्येव दुष्मन्तहृदयस्य प्रथमं विस्मृतिजनकानि परश्च प्रबोधोत्-पादकानीत्यर्थः । तेन तव दुष्मन्तस्य नैष दोषः, किन्तु शकुन्तलाभागधेयानामेवेत्याशयः ।

---

(ঙ) রাজা। (চিন্তাবশতঃ অল্প অল্প পাদক্ষেপ করিয়া) প্রথমে হরিণনয়না প্রিয়তমা শকুন্তলা, পরিণয় স্মরণ করাইবার জন্য নানাপ্রকার বুঝাইতে থাকিলেও, এই পোড়া মন ঘুমাইয়া ছিল, আর এখন অনুতাপের দুঃখ ভোগ করিবার জন্য জাগিয়াছে ॥৬॥

(ছ) মিশ্রকেশী। দীনা শকুন্তলার ভাগ্যই এইরূপ।

---

(१) विदू।...सउन्तलावाहिणा।...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

কঞ্চুকী। উপসৃত্য। জয়তি জয়তি দেবঃ। দেব। প্রত্য-বেক্ষিতাঃ প্রমদবনভূময়ঃ। যথাকামমধ্যাস্তাং বিনোদ-স্থানানি দেবঃ (১)। (ক)

রাজা। বেত্রবতি! মদ্বচনাদমাত্যপিশুনং ব্রূহি, অদ্য চিরপ্রবোধান্ন সম্ভাবিতমস্মাভির্ধর্মাসনমধ্যাসিতুম্, যৎ প্রত্যবেক্ষিতমার্য্যেণ পৌরকার্য্যং তৎ পত্রমারোপ্য প্রস্থাপ্যতা-মিতি (২)। (খ)

---

(ঘ) হুং, ভূয়োঽপি লঙ্ঘিত এষ শকুন্তলাবাতেন। ন জানে কথং চিকিৎসিতব্যো ভবিষ্যতি।

---

(ঘ) বিদূ ইতি। হুমিতি বিতর্কে। শকুন্তলাবাতেন শকুন্তলাবিষয়কবায়ুরোগেণ, এষ দুষ্মন্তঃ, ভূয়ঃ পুনরপি, লঙ্ঘিত আক্রান্তঃ।

(ক) কঞ্চুকীতি। প্রত্যবেক্ষিতা সর্ব্ব এব রাজ্ঞ উৎসবনিষেধাদৈয়ং পালয়ন্তি ন বেতি পরীক্ষণার্থং পর্য্যবেক্ষিতাঃ। যথাকামং যথাভিলাষম্, বিনোদস্থানানি বিরহ-বেদনাপনোদনোপযুক্তদেশান্, অধ্যাস্তাম্ উপবিশতু।

(খ) রাজেতি। বেত্রবতীতি প্রতীহারীসম্বোধনম্। অমাত্যো মন্ত্রী চাসৌ পিশুন-নামা চেতি তম্। চিরপ্রবোধাৎ রাত্রৌ বহুকালজাগরণাৎ, অস্মাভিঃ "বাক্যদণ্ড"

---

(ঘ) বিদূষক। (আপনি আপনি চুপি চুপি) হুঁ! শকুন্তলাবায়ু আবারও ইহাকে আক্রমণ করিল। জানি না, কি প্রকারে প্রতীকার করা যাইবে।

(ক) কঞ্চুকী। (নিকটে যাইয়া) মহারাজের জয় হউক, জয় হউক। প্রমদবনের সকল স্থান দেখিয়াছি। এখন ইচ্ছানুসারে চিত্তবিনোদনস্থানে উপবেশন করিতে পারেন।

---

(১) কঞ্চুকী। উপগম্য। জয়তু দেবঃ। মহারাজ!···স্থানানি মহারাজঃ।
(২)···অমাত্যমার্য্যপিশুনম্। তৎ পত্রমারোপ্য দীয়তামিতি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । सहसोत्थाय । आः, ममापि सत्त्वैरभिभूयन्ते गृहाः ?
अथवा बहुप्रत्यवायं नृपत्वम् । (ख)

अहन्यहन्यात्मन एव तावत्
ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतः कस्य पुनः प्रभुत्वम् (१) ॥३१॥

(ख) राजेति । आःशब्दः कोपे । ममापि जगत्यद्वितीयवीरस्यापीति भावः, गृहा भवनानि, सत्त्वैः राक्षसादिजन्तुभिः, अभिभूयन्ते आक्रमणेनात्याचारविषयीक्रियन्ते । अहो! साहसं सत्त्वानामित्यभिप्रायः । बहवः प्रत्यवायाः पापानि यस्मिन् तत् तादृशम् । "गृहाः पुंसि च भूम्न्येव" इत्यमरः ।

ननु कथं बहुप्रत्यवायं नृपत्वमित्याह—अहनीति । अहन्यहनि प्रतिदिनम्, आत्मन एव अन्यस्य का कथा स्वस्यैव, तावत् सकलम्, प्रमादेन अनवधानतया स्खलितम् अन्याय्यमाचरणम्, ज्ञातुम् अवधारयितुम्, न शक्यं नृपैरिति शेषः । पुनः किन्तु, प्रजासु स्वराज्यवासिजनेषु मध्ये, को जनः, केन सता असता वा पथा, प्रयाति गच्छति साधु असाधु वा आचरतीत्यर्थः, इत्येतत् अशेषतः साकल्येन, ज्ञातुमिति शेषः, कस्य नृपस्य, प्रभुत्वं शक्तिरस्ति, अपि तु कस्यापि नेत्यर्थः । तथा चात्मनः प्रमादस्खलनात् प्रजाभिरन्याय्याचरणाद्वा समुत्पन्नेन मम प्रत्यवायेनायं सत्त्वाभिभव इति भावः ।

प्रजापापस्य राजनि संक्रममाह मनुः—

"सर्वतो धर्मषड्भागी राज्ञो भवति रक्षतः ।
अधर्मादपि षड्भागी भवत्यस्य ह्यरक्षतः ॥"

(ख) রাজা । ( হঠাৎ উঠিয়া ) আঃ! আমার বাড়ীও জন্তুতে আক্রমণ করে!। অথবা রাজকার্য্যে বহুতর পাপ ঘটিয়া থাকে ।

(१)...अशेषतो वेदितुमस्ति शक्तिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेपथ्ये । अविधावेह्नि भो ! अविधावेह्नि (१)। (ग)

राजा । आकर्ण्य गतिभेदं रूपयन् । सखे ! न भेतव्यं न भेतव्यम् (२)। (घ)

नेपथ्ये । भो ! कधं ण भाइस्सं । एसो मं कोवि पच्चामोडिअ सिरोधरं इक्खुं विअ भग्गत्थिं करिदुमिच्छदि (३)। (ङ)

(ग) अभिधाव भोः ! अभिधाव ।

---

अतएवात्र अप्राकरणिकार्थात् प्राकरणिकार्थापतनेन अर्थापत्तिः, तदुत्थापिता च सामान्याद्विशेषप्रतीतिरूपा अप्रस्तुतप्रशंसालङ्कार इत्यनयोरङ्गाङ्गिभावेन सङ्करः ।

"यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः ।

पूर्ववत् वृत्तम् ॥२१॥

(ग) नेपथ्य इति । अभि मां लक्ष्यीकृत्य, धाव द्रुतमागच्छ । भयात् द्विरुक्तिः ।

(घ) राजेति । गतिभेदं गमनविशेषं द्रुतगमनमित्यर्थः, रूपयन् अभिनयन् । न भेतव्यं भयं न कर्त्तव्यम् ।

---

অনবধানতাবশতঃ প্রত্যহ নিজেরই যত ত্রুটি ঘটে, সেই ত্রুটিই সমুদয় জানিতে পারা যায় না ; তাহাতে প্রজাদের মধ্যে কোন্ ব্যক্তি কোন্ পথে চলিতেছে, তাহা সমস্ত জানিতে কোন্ রাজার শক্তি আছে ? ॥২১॥

(গ) নেপথ্যে। ওহে ! আমার দিকে ধাবিত হও, আমার দিকে ধাবিত হও।

(ঘ) রাজা। (শুনিয়া, দ্রুতগমন অভিনয় করিয়া) সখে ! ভয় করিও না, ভয় করিও না।

---

(१) नेपथ्ये । भो वयस्य अविहा अविहा । (२)…गतिभेदेन परिक्रामन्…

(३) नेपथ्ये पुनस्तदेव पठित्वा ।…पच्चवणदसिरोहरं उक्खुं विअ तिखमङ्गं करदि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सदृष्टिक्षेपम्। धनुर्धनुः (१)। (च)

प्रविश्य धनुर्हस्ता प्रतीहारी। जअदु जअदु भट्टा। एदं ससरं सरासणं हत्थावारओ अ (२)। (छ)

राजा। सशरं धनुरादत्ते (३)। (ज)

(ङ) भीः! कथं न भेष्यामि। एष मां कोऽपि प्रत्यामोद्य शिरोधराम् इक्षुमिव भग्नास्थिं कर्त्तुमिच्छति।

(छ) जयतु जयतु भर्त्ता। एतत् सशरं शरासनं हस्तावारकश्च।

(ङ) नेपथ्य इति। न भेष्यामि भयं न करिष्यामि। कोऽपि अपरिचितः पुरुषः, शिरोधरां ग्रीवाम्, प्रत्यामोद्य पश्चादामर्द्य, माम्, इक्षुम् इक्षुदण्डमिव।

(च) राजेति। दृष्टिक्षेपेण माधव्यदिशि दृष्टिपातेन सह सदृष्टिक्षेपम्। धनुरानयेति शेषः, क्रोधे द्विरुक्तिः।

(छ) प्रविश्येति। शरान् अस्यत्यनेनेति शरासनं धनुः। हस्तम् आवृणोति व्याघातनिवारणाय आच्छादयतीति हस्तावारको लौहनिर्म्मितहस्तावरणम्।

(ज) राजेति। आदत्ते गृह्णाति।

(ঙ) নেপথ্যে। ওহে! কেন ভয় করিব না। এই কোন লোক, আমার গ্রীবা পিছনের দিকে মোড়াইয়া নিয়া, ইক্ষুদণ্ডের মত হাড় ভাঙ্গিয়া দিতে ইচ্ছা করিতেছে।

(চ) রাজা। (সেই দিকে দৃষ্টিপাতের সহিত) ধনু, ধনু।

(ছ) প্রতীহারী। (ধনুহস্তে প্রবেশ করিয়া) মহারাজের জয় হউক, জয় হউক। বাণের সহিত এই ধনু এবং হস্তাবরণ।

(জ) রাজা। (বাণের সহিত ধনু গ্রহণ করিলেন।)

(१)…धनुस्तावत्।

(२) प्रविश्य शार्ङ्गहस्ता यवनिका। भट्टा एदं हत्थावारसहिदं सरासणं।

(३)…आधत्ते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेपथ्ये। एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम्।
आर्त्तानां भयमपनेतुमात्तधन्वा
दुष्मन्तस्तव शरणं भवत्विदानीम् ॥३२॥

राजा। सरोषम्। कथं मामेवोद्दिशति। आः, तिष्ठ तिष्ठ, कौणपापसद! त्वमिदानीं न भवसि?। चापमारोप्य। पार्वतायन! सोपानमार्गमादेशय (१)। (भ)

एष इति। अभिनवं सद्योनिर्गमात् नूतनं कण्ठशोणितम् गलरक्तम् अर्थयतीति स तादृशः, एषः अहम्, शार्दूलो व्याघ्रः, पशुं हरिणादिजन्तुमिव, चेष्टमानम् आत्मरक्षार्थं यतमानम्, हन्मि मारयामि। आर्त्तानां पीड़ितानाम्, भयम् अपनेतुं दूरीकर्तुं, आत्तं गृहीतं धन्व येन स तादृशो दुष्मन्तः, इदानीं तव शरणं रक्षको भवतु भवितुं शक्नोतु रक्षितुं चेत् शक्नोति तर्हि रक्षतु इत्यर्थः।

अत्र श्रौतोपमालङ्कारः। तथा अहं हन्मि शार्दूलस्तु हन्ति इति पुरुषभेदात् "त्वमेव राजसे तन्वि!" इति दर्पणोदाहरणवत् भग्नप्रक्रमतादोषः, स च 'हन्तव्यः पशुरिव कण्ठरक्तमत्तु' व्याघ्रेण त्वमिह मया विचेष्टमानः' इति पूर्वार्द्धपाठेन समाधेयः।

"धनुश्चापौ धन्वशरासनकोदण्डकार्म्मुकम्" इति "शरणं गृहरक्षित्रोः" इति चामरः। प्रहर्षिणी वृत्तम्—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् ॥३२॥

(भ) राजेति। मामेव जगत्यद्वितीयवीरमेवेत्याशयः, उद्दिशति लक्षीकृत्य

নেপথ্যে। এই আমি ব্যাঘ্রের ন্যায় নূতন-কণ্ঠ-রুধির পিপাসু হইয়া পশুর ন্যায় তোমাকে আত্মরক্ষায় যত্নবান্ অবস্থায় হত্যা করিতেছি। পীড়িতদিগের ভয় দূর করিবার জন্য ধনুর্দ্ধারী দুষ্মন্ত, (যদি পারেন, তবে) তোমার এখন রক্ষক হউন ॥৩২॥

(१) मामुद्दिशति। तिष्ठ कुणपापसद!…न भविष्यसि। शार्ङ्गमादीय। वेत्रवति! सोपानमार्गम्…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

কঞ্চুকী। ইত ইতো দেবঃ (১)। (ঞ)

সর্ব্বে সত্বরমুপসর্পন্তি। (ট)

রাজা। সমন্তাদবলোক্য। অয়ে! শূন্যং খল্বিদম্। (ঠ)

নেপথ্যে। ভো! পরিত্তাআহি পরিত্তাআহি। অহং তুমং পেক্খামি, তুমং মং ণ পেক্খসি। মজ্জারগহিদো উন্দুরো বিঅ ণিরাসোহ্মি জীবিদে (২)। (ড)

---

ব্রবীতি। কৌণপাপসদ! হে রাক্ষসাধম! ন ভবসি মম হন্তব্য ইতি শেষঃ কাকুবশাৎ প্রশ্নো গম্যতে; তেন হন্তব্যো ভবস্যেবেতি ভাবঃ। সোপানমার্গং মেঘচ্ছন্নপ্রাসাদস্যেত্যর্থঃ। আদেশয় প্রদর্শয়।

"রাক্ষসঃ কৌণপঃ ক্রব্যাৎ" ইত্যমরঃ।

(ঞ) কঞ্চুকীতি। ইত ইতঃ অনেনানেন পথা, দেব আগচ্ছত্বিতি শেষঃ।

(ট) সর্ব্বে ইতি। উপসর্পন্তি মেঘচ্ছন্নাগারস্য উপরিতলং যান্তি।

(ঠ) রাজেতি। অয়ে ইত্যাশ্চর্য্যে। ইদং স্থানম্, শূন্যম্, অতঃ ক এবমাচরতি কো বা হন্তব্য ইতি ভাবঃ।

(ড) নেপথ্য ইতি। মার্জ্জারগৃহীতো বিড়ালাক্রান্তঃ। জীবিতে জীবনে।

---

(ঝ) রাজা। (ক্রোধের সহিত) আমাকে লক্ষ্য করিয়াই বলিতেছে! আঃ রাক্ষসাধম! থাক্ থাক্; তুই আমার বধ্য নহিস্ কি? (ধনুতে গুণ আরোপণ করিয়া) পার্ব্বতায়ন! সিঁড়ির পথ দেখাও।

(ঞ) কঞ্চুকী। মহারাজ এই এই পথে আসুন।

(ট) (সকলে তাড়াতাড়ি মেঘচ্ছন্নপ্রাসাদের উপরের তলায় গেল।)

(ঠ) রাজা। (সকল দিক্ দেখিয়া) ওহে! এস্থান যে শূন্য।

---

(১) ক্বচিৎ অয়ে ইতি নাস্তি। (২) নেপথ্যে। অবিহা অবিহা। অহং অসমবন্তং পেক্খামি। তুমং…। বিড়ালগহিদো মূসঅো বিঅ ণিরাসোহ্মি জীএ সংবুত্তো।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । भोस्तिरस्करिणीगर्वित ! मदीयमस्त्रमपि त्वां न पश्यति ? । स्थिरो भव, मा च ते वयस्यसम्पर्काद्विश्वासोऽभूत् । एष तमिषुं सन्दधे (१) । (ढ)

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥३३॥

इति शस्त्रं सन्धत्ते । (ण)

(ड) भोः ! परित्रायस्व परित्रायस्व । अहं त्वां प्रेक्षे, त्वं मां न प्रेक्षसे । मार्जारगृहीत उन्दुर इव निराशोऽस्मि जीविते ।

(ढ) राजेति । तिरस्करिण्या देहस्य अदृश्यत्वसम्पादिकया विद्यया गर्वित ! सञ्जातगर्व ! । तव तिरस्करिणीवशादहं न पश्याम्येवेति अपिशब्दस्यार्थः । न पश्यतीति काकुवशात् पश्यत्येवेत्यर्थः । वयस्यसम्पर्कात् माधव्यदेहसंयोगात् हेतोः, ते तव विश्वासो मा भूत् वयस्यशरीरे पतनशङ्कया दुष्मन्तो बाणं निक्षेप्तुं न शक्ष्यतीति प्रत्ययो न भवतु । तत्कारणमाह एष इति । इषुं बाणम् ।

य इति । य इषुः, वध्यं विना कारणं ब्रह्महत्याप्रवृत्तत्वात् वधनीयं त्वाम् हनिष्यति ; रक्ष्यम् अपराधाभावात् अवश्यरक्षणीयम्, द्विजं ब्राह्मणं माधव्यम्, रक्षिष्यति ।

(ड) নেপথ্যে । সখে ! রক্ষা কর, রক্ষা কর । আমি তোমাকে দেখিতেছি, কিন্তু তুমি আমাকে দেখিতেছ না । বিড়ালধৃত মূষিকের ন্যায় আমি জীবনে নিরাশ হইয়াছি ।

(ঢ) রাজা । ওহে লুক্কায়িত করার বিদ্যায় দাম্ভিক ! আমার অস্ত্রও কি তোমায় দেখে না ? স্থির হও সখার দেহসম্পর্কবশতঃ তুমি রক্ষা পাইবে এ বিশ্বাস যেন তোমার না হয় । এই আমি সেই বাণ সন্ধান করিতেছি ।

(१) राजा । भोस्तीरस्करिणीगर्वित ! मदीयं शस्त्रं त्वां द्रक्ष्यति । एष तमिषुं सन्दधे । इति क्वचित् पाठः, क्वचित्तु ···वयस्यसम्पर्काद्विश्वासोऽभूत् इति पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः प्रविशति मातलिर्विदूषकश्च (१)।

मातलिः। आयुष्मन्! (२)। (त)

क्रृताः शरव्यं हरिणा तवासुराः,
शरासनं तेषु विकृष्यतामिदम्।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥३४॥

---

ननु संयुक्तयोर्द्वयोरेकस्य ग्रहणम् अन्यस्य च वर्जनम् एकेनाशक्यमेव कर्त्तुमित्याह हंस इति। हि तथाहि, हंसः स्वनामप्रसिद्धः पक्षिविशेषः, क्षीरं दुग्धम्, आदत्ते जलमध्यादुद्धरति, किन्तु तन्मिश्राः क्षीरयुक्तपूर्वाः, अपो जलानि, वर्जयति त्यजति। तद्वदिति भावः।

अत्र श्रौतोपमालङ्कारः।

अत्रो! कविना दृष्टशरत्वरासमये दुष्मन्तेन कवित्वं प्रकटयता आत्मकवित्वं व्याहतीकृतमिव प्रतिभाति ॥३३॥

(ण) इतीति। शस्यते हिंस्यते अनेनेति शस्त्रं बाणमेव, सन्धत्ते धनुषि योजयति।

(त) मातलिरिति। आयुष्मन्! हे प्रशस्तायुःशालिन्!। तदानीं दुष्मन्तस्य रथित्वाभावेऽपि तद्योग्यत्वात् आत्मनः सारथित्वाच्च आयुष्मन्निति सम्बोधनं सङ्गतमेव "आयुष्मन् रथिनं सूतः" इति साहित्यदर्पणात्।

---

যে বাণ, বধ্য বলিয়া তোমাকে বধ করিবে, রক্ষ্য বলিয়া ব্রাহ্মণকে রক্ষা করিবে। দেখ—হংস দুগ্ধ গ্রহণ করে, কিন্তু তৎসংযুক্ত জল পরিত্যাগ করে ॥৩৩॥

(ণ) (এই বলিয়া অস্ত্র সন্ধান করিলেন।)

তদনন্তর মাতলি ও বিদূষকের প্রবেশ।

(ত) মাতলি। আয়ুষ্মন্!

---

(१) ततः प्रविशति विदूषकमुत्सृज्य मातलिः। (२) क्वचिदयं पाठो नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सशब्दम्, ससन्भ्रममुपसंहरन्। अये मातलिः। स्वागतं देवराजसारथेः ? (१)। (थ)

कृता इति। हरिणा इन्द्रेण, असुराः, तव शरव्यं कृताः बाणक्षेपलक्ष्यं विहिताः; अतएव तेषु असुरेषु विषये, इदं शरासनं धनुः, विकृष्यतां बाणक्षेपाय आकृष्यताम्। तथा च सुहृज्जने बन्धुजनं प्रति, सतां सज्जनानाम्, प्रसादेन चित्तनैर्मल्येन सौम्यानि आरक्ततादयभावात् सुन्दराणि, चक्षूंषि नयनान्येव पतन्ति; किन्तु दारुणाः शरा न पतन्ति। अतः संहितमपि शरमुपसंहृत्य मयि प्रसादसौम्यं चक्षुरेव पातयेत्याशयः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, नशब्देनैव दारुणशरपातव्यपोहनात् शाब्दी परिसंख्या च अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः। तथा चक्षूंषीति नपुंसकलिङ्गेन प्रक्रम्य शरा इति पुंलिङ्गप्रयोगात् भग्नप्रक्रमतादोषः, एवं चक्षूंषीत्यनन्तरं भेदबोधकस्तुशब्दो वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानदोषश्च। अनयोः समाधानाय पराद्धमेवं पठनीयम्—'पतन्ति दृष्टयः सतां सुहृज्जने सुहृष्टयो दारुणहेतयस्तु न।' इतिरलम्।

असुराः शरव्यं कृता इत्यत्र "उद्देश्यविधेययोरुद्देश्यसमानलमाख्यातस्य" इति कामिकोक्तिप्रामाण्यात् असुरा इत्युद्देश्यानुसारेण कृता इति बहुवचनं पुंस्त्वञ्च। आख्यातस्येति प्रधानक्रियाया इत्यर्थः। तथा "वेदाः प्रमाणम्" इत्यादिवदेव "असुराः शरव्यम्" इत्युभयोरप्यजहल्लिङ्गत्वात् व्यक्तिजातिरूपेण विवक्षितत्वाच्च पुंस्त्वनपुंसकत्वे बहुत्वैकत्वे चेति सर्वं समञ्जसम्।

"लक्ष्यं लक्षं शरव्यञ्च" इति "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥" इति चामरः। वंशस्थविलं वृत्तम्॥३४॥

দেবরাজ অসুরদিগকে আপনার বাণের লক্ষ্য নির্দিষ্ট করিয়াছেন; সুতরাং সেই অসুরগণের প্রতিই এই ধনু আকর্ষণ করুন। বন্ধুজনের প্রতি সজ্জনের প্রসাদ-সুন্দর চক্ষুই পতিত হইয়া থাকে; কিন্তু ভয়ঙ্কর বাণ নহে ॥৩৪॥

(१) राजा। शस्त्रमुपसंहरन्।...स्वागतं महेन्द्रसारथे!।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

বিদূ। ভো মণস্সি ! ইমিণা অহং পসুমারণং মারিদুং পাবিদো, ভবং উণ ইমং সাঅদেণ অহিণন্দদি (১)। (দ)

মাতলিঃ। স্মিতম্। আয়ুষ্মন্ ! শ্রূয়তাং যদর্থমস্মি হরিণা ভবৎসকাশং প্রেষিতঃ। (ধ)

রাজা। অবহিতোঽস্মি। (ন)

---

(দ) ভো মনস্বিন্ ! অনেনাহং পশুমারণং মারয়িতুং প্রাপ্তঃ, ভবান্ পুনরিমং স্বাগতেনাভিনন্দতি।

---

(থ) রাজেতি। সসম্ভ্রমং ব্যস্ততয়া সহিতম্। অয়ি ইতি বিস্ময়ে। স্বাগতং সুখেনাগতং কিমিতি কাকুঃ।

(দ) বিদূ ইতি। মনস্বিন্ ! প্রশস্তমনাঃ !। সোল্লুণ্ঠনমিদং সম্বোধনম্। তৎকারণমাহ অনেনেত্যাদি। পশোরিব মারণং যস্মিন্ কর্ম্মণি তদ্যথা তথা। প্রাপ্তো গৃহীতঃ। অভিনন্দতি আদ্রিয়তে। ইদন্তু মহদন্যায্যমিতি ভাবঃ।

(ধ) মাতলিরিতি। বিদূষকোক্ত্যা কৌতুকোদয়াৎ স্মিতম্। হরিণা ইন্দ্রেণ।

(ন) রাজেতি। অবহিতো ভবদ্বাক্যং শ্রোতুং কৃতমনোযোগঃ।

---

(থ) রাজা। (ব্যস্ততার সহিত অস্ত্র উপসংহার করতঃ) ও, মাতলি ! দেবরাজসারথির শুভাগমন ত ?।

(দ) বিদূষক। ও উদারহৃদয় ! বলি—এই ব্যক্তি, আমাকে পশুর ন্যায় মারিবার জন্য আক্রমণ করিয়াছিল, আর তুমি ইহাকে স্বাগতপ্রশ্ন করিয়া আদর করিতেছ !।

(ধ) মাতলি। (ঈষৎ হাস্যের সহিত) আয়ুষ্মন্ ! শুনুন, দেবরাজ যে জন্য আমাকে আপনার নিকট পাঠাইয়াছেন।

(ন) রাজা। মনোযোগী হইলাম।

---

(১) প্রবিশ্য বিদূষকঃ। অহং জেণ ইট্ঠিপসুমারং মারিদো, সো ইমিণা সাঅদেণ অহিণন্দীঅদি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः । अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः । (प)

राजा । अस्ति, श्रुतपूर्वो मया नारदात् (१) । (फ)

मातलिः । सख्युस्ते स किल शतक्रतोरवध्यः, (२)

तस्य त्वं रणशिरसि स्मृतो निहन्ता ।

उच्छेत्तुं प्रभवति यन्न सप्तसप्तिः,

तन्नैशं तिमिरमपाकरोति चन्द्रः ॥३५॥

---

(प) मातलिरिति । कालनेमिस्तदाख्यासुरस्य प्रसूतिः सन्ततिः ।

(फ) राजेति । श्रुतपूर्वः स दानवगण इत्यन्वयः ।

सख्युरिति । स किल दानवगणः, ते तव सख्युः शतक्रतोरिन्द्रस्य, अवध्यः कुतोऽपि कारणादविनाशनीयः ; रणशिरसि समराङ्गने, त्वम्, तस्य दानवगणस्य, निहन्ता स्मृतः शतक्रतुनैवावधारितः । हन्त ! कीयं कथा यत्, इन्द्रेणावध्यमहं हन्तुमर्हामीत्याह उच्छेत्तुमिति । सप्त सप्तयो घोटका यस्य स सप्तसप्तिः सूर्यः, निशाया इदं नैशम्, यत् तिमिरमन्धकारम्, उच्छेत्तुं नाशयितुम्, न प्रभवति न शक्नोति ; चन्द्रः तत् तिमिरम्, अपाकरोति नाशयति । तथा च सूर्य्यापेक्षया न्यूनतेजा अपि चन्द्रो यथा सूर्य्याविनाश्यं नैशं तिमिरं नाशयति, तथा इन्द्रापेक्षया न्यूनबलोऽपि भवान् इन्द्रावध्यं दुर्जयदानवगणमवश्यमेव निहन्तुं शक्ष्यसि विधिनियमादित्याशयः ।

अतएवात्र दृष्टान्तोऽलङ्कारः, प्रहर्षिणी च वृत्तम् ॥३५॥

---

(প) মাতলি। কালনেমির সন্তান কতকগুলি দুর্জ্জয় দানব আছে।

(ফ) রাজা। আছে, আমি পূর্ব্বে নারদের মুখে শুনিয়াছি।

মাতলি। সেই দানবগণ, তোমার সখা ইন্দ্রের অবধ্য ; কিন্তু যুদ্ধে তুমিই তাহাদিগের নিহন্তা বলিয়া তিনি মনে করেন। কারণ, সূর্য্য যে অন্ধকার নাশ করিতে সমর্থ হন না, চন্দ্র, রাত্রিতে সেই অন্ধকারকে নাশ করিয়া থাকেন ॥৩৫॥

---

(१) श्रुतपूर्वम् । (२)···शतक्रतोरजय्यः···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स भवानात्तशस्त्र एवेदानीं देवरथमारुह्य विजयाय प्रतिष्ठ-ताम् (१)। (ब)

राजा। अनुगृहीतोऽस्मि अनया मघवतः सम्भावनया। अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम् ?। (भ)

मातलिः। सस्मितम्। तदपि कथ्यते। किञ्चिन्निमित्तादपि मनःसन्तापादायुष्मान् मया विक्लवो दृष्टः, पश्चात् कोपयितु-मायुष्मन्तं तथा कृतवानस्मि। कुतः—(२) (म)

(ब) स इति। आत्तशस्त्र एव गृहीतायुध एव। देवरथम् इदं विमानम्। प्रतिष्ठतां गच्छतु, "समवप्रविभ्यः" इत्यात्मनेपदम्।

(भ) राजेति। मघवत इन्द्रस्य, सम्भावनया सम्माननया। प्रश्ने अथशब्दः। एवं ग्रीवापीड़नम्।

"इन्द्रो मरुत्वान् मघवा" इत्यमरः।

(म) मातलिरिति। माधव्यपीड़नघटनाया अकिञ्चित्करत्वसूचनाय स्मितमिति बोध्यम्। किञ्चिदस्माभिरज्ञातं निमित्तं कारणं यस्य तस्मात्। आयुष्मान् प्रशस्तायुःशाली भवान्, विक्लवः स्वभावादन्यरूपः शोकाकुल इत्यर्थः, पश्चात् दर्शनानन्तरम्, आयुष्मन्तं भवन्तम्, तथा माधव्यस्य ग्रीवापीड़नम्।

(ब) সেই আপনি, এখন সমস্ত অস্ত্র গ্রহণপূর্ব্বক দেবরথে আরোহণ করিয়া, অসুরজয়ের জন্য চলুন।

(ভ) রাজা। ইন্দ্রের এই সম্মানে অনুগৃহীত হইলাম। আপনি মাধব্যের প্রতি এরূপ করিলেন কেন ?।

(ম) মাতলি। (ঈষৎ হাস্যের সহিত) তাহাও বলিতেছি। কোনও কারণে মনের সন্তাপে আপনাকে আমি শোকাকুল দেখিয়াছিলাম, পরে আপনাকে ক্রুদ্ধ করিবার জন্য, সেইরূপ করিয়াছি। কারণ,

(१)…इदानीं तमैन्द्ररथम्…। (२) मातलिः। तदपि कथ्यते।…विक्लवो दृष्टः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
तेजस्वी संक्षोभात् प्रायः प्रतिपद्यते तेजः (१) ॥३६॥

राजा । युक्तमनुष्ठितं भवद्भिः । विदूषकं प्रति । वयस्य । अनतिक्रमणीया दिवस्पतेराज्ञा, तद्‌गच्छ, परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि—(य)

ज्वलतीति । अग्निः दाह्याभावात् निर्वाणप्रायो वह्निः, चलितं चुल्ल्यादौ पुनर्दानात् सञ्चरितम् इन्धनं काष्ठं यस्मिन् स तादृशः सन्, काष्ठेन ताड़ितः सन्नित्यर्थः, ज्वलति पुनर्दीप्यते ; तथा पन्नगः सुस्थितोऽपि सर्पः, विप्रकृतः केनापि ताड़ितः सन् फणां कुरुते स्वपराक्रममाविष्करोतीति तात्पर्य्यम् । तेजस्वी सत्यपि तेजसि कुतोऽपि कारणात् लीनप्रायतेजस्को जनः, संक्षोभात् उद्वेलनात् कुतोऽपि उत्तेजनां प्राप्येत्यर्थः, प्रायो बाहुल्येन, तेजः स्वपराक्रमम्, प्रतिपद्यते प्राप्नोति आविष्करोतीति तात्पर्य्यम्। तथा च अस्य ते वयस्यस्य समुत्पीड़नेनोत्तेजनावशात् त्वमपि पुनस्तेजः प्राप्त एवेत्याशयः।

अत्र अग्नेर्ज्वलनं दीप्तिः, तेजस्विनस्तेजःप्राप्तिस्तु पराक्रमप्रकाश इति धर्मभेदे बिम्बप्रतिबिम्बभावबोधनात् दृष्टान्तः ; पन्नगस्य फणाकरणं पराक्रमप्रकाशः, तेजस्विनस्तेजःप्राप्तिरपि पराक्रमप्रकाश एवेति पराक्रमप्रकाशरूपैकधर्मस्य वाक्यभेदेन पृथङ्‌निर्द्देशात् प्रतिवस्तूपमा ; तथा अप्रस्तुततेजस्विसामान्यात् प्रस्तुततेजस्विदुष्मन्तरूपविशेषप्रतीतेरप्रस्तुतप्रशंसा च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः । प्रायःपदेन शार्ङ्गरवाणादीनां व्यावृत्तिः ।

"तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसोः" इति मेदिनी ।

संक्षोभादिति ल्यब्लोपे पञ्चमी । आर्य्या जातिः ॥३६॥

অগ্নি, কাষ্ঠসন্তাড়িত হইলে জ্বলিতে থাকে এবং সর্প প্রহৃত হইলে ফণা ধরিয়া থাকে। এইরূপ তেজস্বী লোক, উত্তেজনা পাইলে, প্রায়ই আপনার তেজ প্রকাশ করে ॥৩৬॥

(१)···फणं···। प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते हि जनः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वन्मतिः केवला तावत् प्रतिपालयतु प्रजाः (१)।
अधिज्यमिदमन्यस्मिन् कर्म्मणि व्यापृतं धनुः ॥३७॥

(य) राजेति। युक्तमुचितम्। अन्यथा मम तेजःप्राप्तिनं स्यादिति भावः। "अथ माधव्यं प्रति' इत्यारभ्य एतदन्तसन्दर्भे' शक्तिर्नाम विमर्शसन्धेरङ्गम्—"शक्तिः पुनर्भवेत्। विरोधस्य प्रशमनम्" इति दर्पणलक्षणात्।

दिवस्पतेः स्वर्गाधिपतेरिन्द्रस्य। परिगतः अवगतः अर्थः एतद्‌वृत्तान्तो येन तं तादृशं कृत्वा एतद्‌वृत्तान्तमभिधायेत्यर्थः। अमात्यपिशुनं पिशुननामानं मन्त्रिणम्।

किं ब्रवीमीत्याह त्वन्मतिरिति। केवला तावत् एकैव मद्धनुर्निरपेक्षेत्यर्थः। त्वन्मतिस्तव बुद्धिः, प्रजा मम राज्यवासिनः सर्वान् जनान्, प्रतिपालयतु रक्षतु। ननु त्वद्धनुरिदानीं किं कर्त्तव्यमित्याह अधिज्यमिति। अध्यारूढा ज्या यत्र तदधिज्यम् आरोपितगुणम्, इदं मदीयं धनुः, अन्यस्मिन् कर्म्मणि दुर्ज्जयदानवगणविजयकार्य्ये, व्यापृतमासक्तम्।

मन्त्रिणो बुद्धिर्मम च धनुः एतदुभयं मिलित्वैव राज्यं परिपालयति; अत्र च मदीयधनुषो देवकार्य्यासक्ततया केवला मन्त्रिणो बुद्धिरेव राज्यं परिपालयन्ती युद्धावसरकालेऽपि कौशलावलम्बनेनैव शत्रुपक्षं विजयतामिति सरलार्थो भावार्थश्च।

"यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इति "एके मुख्यान्यकेवलाः" इति चामरः ॥३७॥

(य) রাজা। আপনি উপযুক্ত কার্য্যই করিয়াছেন। ( বিদূষকের প্রতি ) বয়স্য! দেবরাজের আদেশ অলঙ্ঘনীয়; অতএব যাও, আমার এই বৃত্তান্ত জানাইয়া, আমার বাক্যানুসারে মন্ত্রী পিশুনকে বল—

একমাত্র আপনার বুদ্ধিই, সমস্ত প্রজা পালন করুক; আর গুণযুক্ত এই ধনু অন্য কার্য্যে ব্যাপৃত হইল ॥৩৭॥

(१)⋯परिपालयतु⋯।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विदू। जं भवं आणवेदि। इति निष्क्रान्तः। (र)

मातलिः। आयुष्मान् रथमारोहतु। (ल)

राजा। तथा करोति (१)। (व)

इति निष्क्रान्ताः सर्वे। (श)

## षष्ठोऽङ्कः ॥०॥

(र) यद्भवानाज्ञापयति।

---

(ल) मातलिरिति। रथम् इमं देवराजविमानम्।

(व) राजेति। तथा रथारोहणम्।

अहो! षष्ठाङ्कस्य कलेवरवृद्धिमकस्मात् पश्यता अतीवत्वरमाणेन कविना देवीभिः सह विरहारम्भकालीनप्रेमालापं गुरुजनचरणवन्दनं देवतानमस्कारादिकञ्च दुष्मन्तमकारयता उद्यानादेव च तं सहसा स्वर्गं प्रस्थापयता विजययात्राकालीनशिष्टरीतिः परिहृतेव प्रतिभाति।

हन्त! यत्र स्वर्गलोके मर्त्यवासिनामीदृशी गतागतिः प्रतिपत्तिश्च पूर्वमासीत्, तमिदानीं स्वर्गलोकमनुज्ञातुमपि प्रकृष्टं साधनं नासादयन्ति तत्त्वानुसन्धित्सवः।

(श) इतीति। दुष्मन्त-मातलि-कञ्चुकिनां बहुत्वात् बहुवचनं सर्वशब्दश्च सङ्गच्छत इति ध्येयम्।

इति महामहोपाध्याय-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्यविरचितायाम् अभिज्ञानशकुन्तलटीकायामभिज्ञानकौमुद्यां षष्ठाङ्कविवरणं समाप्तम् ॥०॥

---

(র) বিদূষক। তুমি যাহা আদেশ কর। (এই বলিয়া চলিয়া গেল।)

(ল) মাতলি। আপনি রথে আরোহণ করুন।

(ব) রাজা। তাহাই করিলেন।

(শ) (ইহার পর সকলে চলিয়া গেলেন।)

ষষ্ঠ অঙ্ক ॥০॥

---

(১) রাজা। রথারোহণং নাটয়তি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सप्तमोऽङ्कः ।

—०:*:०—

ततः प्रविशत्याकाशवर्त्मना रथारूढो राजा मातलिश्च (१)। (क)

राजा। मातले! अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये। (ख)

---

(क) तत इति। रथारूढ़ा रथाकारविमानारूढ़ः, घोटकचालनीयस्य रथस्य आकाशवर्त्मना गमनासम्भवात्।

एतेन इदानीन्तनं पाश्चात्यदेशनिर्म्मितं विमानम् अद्यापि तादृशोच्चतमदेशमारोढ़ुमयक्ततया तदानीन्तनविमानसदृशीमुन्नतिं नालभतेति प्रतीयते।

(ख) राजेति। अनुष्ठितनिदेशोऽपि दुर्जयदानवगणविजयात् प्रतिपालितादेशोऽपि, आत्मानं स्वम्, मघवत इन्द्रस्य, सत्कारविशेषात् सम्मानातिरेकमपेक्ष्य, अनुपयुक्तमिव अयोग्यमिव, समर्थये मन्ये, सामान्यमानवत्वात्तादृशसम्मानयोग्यो नाहमिति भावः।

सत्क्रियाविशेषादिति ल्यब्लोपे पञ्चमी।

इतः प्रभृति ग्रन्थसमाप्तिपर्य्यन्तो निर्वहणसन्धिः। तथा चात्र प्रकृतत्वात् प्राप्तिरूपं कार्य्यं नामार्थप्रकृतिः। यथा दर्पणे—

"अपेक्षितन्तु यत् साध्यमारम्भो यन्निबन्धनः।
समापनन्तु यत्सिद्ध्यै तत् कार्य्यमिति सम्मतम्॥"

दुष्मन्तस्य पुत्रेणापि सह स्त्रिया लाभात् फलागमो नाम कार्य्यावस्था निबद्धा। यथा तत्रैव—

"सावस्था फलयोगः स्याद्यः समग्रफलोदयः।"

---

(क) তদনন্তর আকাশপথে রথারূঢ় অবস্থায় রাজা ও মাতলির প্রবেশ।

---

(१) आकाशयानेन रथाधिरूढः…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

মাতলিঃ। সস্মিতম্। আয়ুষ্মন্! উভয়ত্রাপ্যসন্তোষমবগচ্ছ। কুতঃ—(১) (গ)

উপকৃত্য হরেস্তথা ভবান্
লঘু সৎকারমবেক্ষ্য মন্যতে।
গণয়ত্যবদানসম্মিতাং
ভবতঃ সোঽপি ন সৎক্রিয়ামিমাম্ (২) ॥১॥

---

তথা যথাস্থাননিবদ্ধানাং মুখসন্ধিপ্রভৃতিবিষয়াণামত্র শকুন্তলাপ্রাপ্ত্যুপায়ত্বেন প্রদর্শনমুন্নেয়ম্। যথা তত্রৈব—

"বীজবন্তো মুখাদ্যর্থা বিপ্রকীর্ণা যথাযথম্।
একার্থমুপনীয়ন্তে যত্র নির্বহণং হি তৎ॥"

অস্য চ সন্ধিপ্রভৃতীনি চতুর্দশাঙ্গানি যথাস্থানং বক্ষ্যন্তে।

(গ) মাতলিরিতি। উভয়োরপ্যসন্তোষদর্শনেন কৌতুকাৎ স্মিতম্। উভয়ত্রাপি ত্বয়ি মঘবতি চ, অসন্তোষম্ অতিরিক্তেনাপি স্বস্বকার্য্যেণ সন্তোষানুদয়ম্। উপৈতি। ভবান্, হরেরিন্দ্রস্য, তথা তাদৃশম্ উপকৃত্য অবধ্যাসুরবধরূপং মহান্তমুপকারং বিধায়, সৎকারং তদুপকারসন্তোষিতেন ইন্দ্রেণ কৃতং সম্মানঞ্চ, অবেক্ষ্য দৃষ্ট্বা লঘু মন্যতে ইন্দ্রকৃতসম্মানাপেক্ষয়া আত্মকৃতমুপকারং স্বল্পং সম্ভাবয়তি। অতএব ভবতঃ অসন্তোষ ইতি ভাবঃ। তথা স ইন্দ্রোঽপি, ইমাম্ আত্মকৃতাম্, সৎক্রিয়াং ভবতঃ

---

(খ) রাজা। মাতলি! আদেশ পালন করিয়া থাকিলেও দেবরাজ যে বিশেষ সম্মান করিয়াছেন, তাহার নিকট আত্মাকে অযোগ্য বলিয়া মনে করিতেছি।

(গ) মাতলি। (ঈষৎ হাস্য করিয়া) আয়ুষ্মন্! উভয়েরই অসন্তোষ জানিবেন। কারণ—

---

(১)···উভয়মপ্যপরিতোষং সমর্থয়ে। (২) প্রথমোপকৃতং মরুত্বতঃ প্রতিপদ্য লঘু মন্যতে ভবান্। গণয়ত্যবদানবিস্মিতো ভবতঃ সোঽপি ন সৎক্রিয়াগুণান্।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । मातलि ! मा मैवम् । स खलु मनोरथानामपि दूरवर्त्ती, यो विसर्जनावसरे सत्कारः । मम हि दिवौकसां समक्षमर्द्धासनोपवेशितस्य (१) (घ)

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा ॥२॥

सम्मानम्, भवतः अवदानेन असुरवधात्मकातीतकर्म्मणा सम्मितां तुल्यां तदुपयुक्तामित्यर्थः न गणयति न मन्यते । अतस्तस्यापि असन्तोष एवेत्याशयः ।

"अवदानं कर्म्म वृत्तम्" इत्यमरः । सन्दरी वृत्तम् ॥१॥

(घ) राजेति । मा मैवं ब्रूहीति शेषः । विसर्जनावसरे स्वराजधानीं प्रति मम प्रस्थानकाले, यः सत्कारः सम्माननम् आसीदिति शेषः, स खलु सत्कारः, मनोरथानामपि दूरवर्त्ती ममाभिलाषाणामपि अविषयः । हि यस्मात्, दिवौकसाम् अन्येषां देवानां समक्षम् अक्ष्णः समीपे, अर्द्धासने उपवेशितस्य मम, मन्दारमाला पिनद्धेति श्लोकस्थेनान्वयः ।

अन्तरिति । अन्तिकस्थं निकटवर्त्तिनम्, अन्तर्गता चित्तस्थिता न पुनर्वाचापि

আপনি দেবরাজের সেইরূপ উপকার করিয়া এবং তৎকৃত সম্মান দেখিয়া, তাহার নিকট সেই উপকারকে লঘু বলিয়া মনে করিতেছেন ; আবার দেবরাজও, নিজকৃত এই সম্মানকে, আপনার কৃত উপকারের তুল্য হইয়াছে বলিয়া মনে করেন নাই ॥১॥

(ঘ) রাজা । মাতলি ! না না, এরূপ বলিবেন না । বিদায় করিবার সময়ে যে সম্মান করিয়াছেন, তাহা আমার আশারও অগোচর । কারণ, দেবগণের সমক্ষে আমাকে অর্দ্ধাসনে বসাইলেন—

(१) मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

মাতলিঃ। কিমিব নায়ুষ্মানমরেশ্বরাদর্হতি। পশ্য—(১) (ঙ)

সুখপরস্য হরেরুভয়ৈঃ কৃতং
ত্রিদিবমুদ্ধৃতদানবকণ্টকম্।
তব শরৈরধুনা নতপর্বভিঃ
পুরুষকেশরিণশ্চ পুরা নখৈঃ ॥৩॥

প্রকটিতেত্যর্থঃ প্রার্থনা তস্যা মালায়া এব যাচ্ঞা যস্য তম্, জয়ন্তং জয়ন্তনামানং নিজপুত্রম্, উদ্বীক্ষ্য দৃষ্ট্বা, কৃতস্মিতেন তৎপ্রার্থনায়া অপি জ্ঞানেন কৌতুকোদয়াৎ কৃতমন্দহাস্যেন, হরিণা ইন্দ্রেণ, আমৃষ্টস্য সংস্পৃষ্টস্য বক্ষোহরিচন্দনস্য বক্ষোলিপ্তচন্দনবিশেষস্য অঙ্কশ্চিহ্নং যস্যাঃ সা, এতেন সৌরভাধিক্যং ব্যজ্যতে, মন্দারমালা মন্দারকুসুমস্রক্, পিনদ্ধা মম কণ্ঠে বদ্ধা। অতএব সর্বেষাং দেবানাং কিং বহুনা স্বপুত্রস্য চ সমীপে ইন্দ্রদত্তসম্মানকরণং মমাশাতীতমেবাসীদিতি ভাবঃ।

ইন্দ্রবজ্রোপেন্দ্রবজ্রয়োর্মেলনাদুপজাতির্বৃত্তম্ ॥২॥

(ঙ) মাতলিরিতি। আয়ুষ্মান্ প্রশস্তায়ুঃশালী ভবান্, অমরেশ্বরাৎ ইন্দ্রাৎ, কিমিব নার্হতি কিং বস্তু প্রাপ্তুং ন যোগ্যো ভবতি, অপি তু সর্বমেবেত্যর্থঃ। কথমিত্যাহ পশ্যেতি।

নিকটে নিজের পুত্র জয়ন্ত উপস্থিত ছিলেন, তাঁহার মনেও ঐ মন্দারমালাটী প্রার্থনা করিবার ইচ্ছা ছিল; এই অবস্থায় জয়ন্তের প্রতি দৃষ্টিপাত করিয়া, দেবরাজ ঈষৎ হাস্য করিলেন, পরে, নিজের বুকে যে হরিচন্দন লিপ্ত ছিল, তাহাতে সংলগ্ন হওয়ায় তাহার চিহ্ন লাগিয়াছিল, এইরূপ সেই মন্দারকুসুমের মালা, নিজের কণ্ঠ হইতে আনিয়া, দেবরাজ আমার কণ্ঠে পরাইয়াছিলেন ॥২॥

(ঙ) মাতলি। আপনি দেবরাজের নিকট হইতে কি না পাইতে পারেন? দেখুন—

(১) কিমিব নাম···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

015,2D40,1



राजा । तत्र खलु शतक्रतोरेव महिमा । पश्य—(१) (च)

सुखेति । अधुना, नतपर्वभिः किञ्चिदाकुञ्चितग्रन्थिदेशैः, तव शरैर्बाणैः, पुरा पूर्वकाले च, नतानि किञ्चित्कुटिलानि पर्वाणि अङ्गुलिपर्वभागा येषां तैः, पुरुषश्चासौ केशरी चेति तस्य पुरुषकेशरिणो नरसिंहरूपिणो नारायणस्य, नखैर्नखरैः, एभिरुभयैः, सुखपरस्य केवलसुखभोगासक्तस्य न तु युद्धादौ कठिनकार्य्येऽपि प्रवर्त्तितुमिच्छत इत्याशयः, हरेरिन्द्रस्य, त्रिदिवं स्वर्गधाम, उद्धृतं विनाशेनापसारितं दानव एव कण्टकं यस्य तत् तादृशं कृतम्, एकत्र कालनेमिप्रसूतिदुर्ज्जयदानवगणहननात् अन्यत्र हिरण्यकशिपुविनाशनाच्चेति भावः ।

अत्र दुष्मन्तस्य प्रस्तुततया तच्छराणामपि प्रस्तुतानाम् अप्रस्तुतानाञ्च पुरुषकेशरिनखानां कृतमित्येकक्रियया अभिसम्बन्धाद्दीपकमलङ्कारः । तथा प्रधानस्य दानवकण्टकोद्धरणस्य समासे गुणीभावात् विधेयाविमर्शदोषः ; स च 'सुखपरस्य हरेरुभयैः किल त्रिदिवदानवकण्टकमुद्धृतम्' इति पाठेन समाधेयः ।

"राश्यपेक्षया उभयशब्दो व्यक्त्यपेक्षया बहुवचनम्" इति कातन्त्रवृत्तौ दुर्गसिंहः । ननु "स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः" इत्यमरवाक्ये साहचर्य्येण त्रिदिवशब्दस्य पुंस्त्वनिश्चयात् कथमत्र नपुंसकनिर्द्देश इति चेन्न त्रयाणां ब्रह्मविष्णुमहेश्वराणां दिवं स्वर्ग इति त्रिदिवम्, तथा च मेदिनी—"द्यौः स्त्री स्वर्गे च गगने दिवं क्लीवं तयोः स्मृतम् ।" द्रुतविलम्बितं वृत्तम् ॥३॥

(च) राजेति । तत्र मत्कर्त्तृकदानवहननेऽपि, शतक्रतोरेव इन्द्रस्यैव, महिमा प्रभावः, प्रयोजक इति शेषः ।

---

বর্ত্তমানে আপনার আনতপর্ব শরসমূহ ; আর পূর্বে নরসিংহরূপী নারায়ণের নখ ;—এই দুই দলে, ভোগবিলাসাসক্ত দেবরাজের স্বর্গরাজ্য হইতে দানব-কণ্টক উদ্ধার করিয়াছে ॥৩॥

(চ) রাজা । সে বিষয়েও দেবরাজের মাহাত্ম্যই কারণ। দেখুন—

---

(१) अत्र खलु···महिमा स्तुत्यः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिध्यन्ति कर्म्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं प्राभविष्यदरुणस्तमसां वधाय (१)
तञ्चेत् सहस्रकिरणो धुरि नाकरिष्यत् ॥४॥

मातलिः । सदृशं तवैतत् । श्लोकमन्तरमतीत्य । आयुष्मन् । इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः (२) । (छ)

---

सिध्यन्तीति । नियोक्तुं शक्या नियोज्या आयत्ता जनाः, महत्स्वपि गुरुतरेष्वपि कर्म्मसु, यत् सिध्यन्ति सिद्धा भवन्ति तानि कर्म्माणि साधयितुमर्हन्तीत्यर्थः, तम्, ईश्वराणां प्रभूणाम्, सम्भावनायाः तान् नियोज्यान् प्रति बहुमानकरणस्य गुणं फलम्, अवेहि जानीहि । "अरुणस्तमसां हन्ता" इति प्रवादात्मकार्थान्तरन्यासेनोक्तमर्थं समर्थयति किमिति । अरुणः सूर्य्यसारथिः, तमसामन्धकाराणाम्, वधाय नाशाय, किं प्राभविष्यत् किं प्रभुः समर्थः अभविष्यत्, चेत् यदि, सहस्रकिरणः सूर्य्यः, तमरुणम्, धुरि अग्रे, न अकरिष्यत्, कथमपि नेत्यर्थः । तथा च सूर्य्यस्यानुग्रहादरुणेन तमोराशिरिव मयापि इन्द्रस्यानुग्रहादेव दानवगणो विनाशित इति भावः ।

अतएवात्र अप्रस्तुतात् नियोज्यसामान्यात् प्रस्तुतस्य दुष्मन्तरूपनियोज्यविशेषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासश्च, अनयोः परस्पर निरपेक्षतया संसृष्टिः ।

मनोहरोऽयं श्लोकः । वसन्ततिलका वृत्तम् ॥४॥

(छ) मातलिरिति । एतत् वाक्यम्, तव महात्मन इत्याशयः, सदृशमनुरूपम्

---

অধীনস্থ ব্যক্তিরা যে গুরুতর কার্য্যেও সিদ্ধিলাভ করে, সেটা প্রভুদেরই সংবর্দ্ধনার গুণ বলিয়া জানিবেন। কারণ, অরুণ কি অন্ধকার নাশ করিতে সমর্থ হইতেন, যদি সূর্য্য তাঁহাকে সম্মুখে না রাখিতেন ॥৪॥

---

(१)·· किं वाभविष्यदरुणस्तमसां विभेत्ता । (२)···सदृशमेवैतत्···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु ।
सञ्चिन्त्य गीतिक्षममर्थबन्धं (१)
दिवौकसस्त्वच्चरितं लिखन्ति ॥५॥

राजा। मातले! असुरसम्प्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितोऽयं प्रदेशो मया ; तत् कतमस्मिन् पथि वर्त्तामहे मरुताम् (२)। (ज)

---

विनयनम्रता महात्मन एव सम्भवादिति भावः। स्तोकमन्तरं किञ्चिद्दूरम्। इतः निर्द्दिश्यमानायामस्यां दिशि, नाकपृष्ठप्रतिष्ठितस्य स्वर्गोपरिस्थितस्य, सौभाग्यं महाभाग्यवत्त्वम् ; अन्यथा स्वर्गोपर्य्येव महादरलाभासम्भव इत्याशयः।

उद्दिष्टं सौभाग्यं दर्शयति विच्छित्तीति। अमी दूरे दृश्यमानाः, दिवौकसो देवाः, गीतिक्षमं गानयोग्यम्, अर्थं बध्नाति आत्मना सह सम्बध्नातीति अर्थबन्धः पदसमूहस्तम्, सञ्चिन्त्य चिन्तापूर्वकं रचयित्वा, सुरसुन्दरीणां देवाङ्गनानाम्, विच्छित्तिशेषैः अङ्गरागावशिष्टैः, वर्णैः रङ्गैः, कल्पलतांशुकेषु कल्पलताभ्य उत्पन्नेषु वस्त्रेषु, अतएव परमादरणीयेष्वपीत्याशयः, त्वच्चरितं परोपकारादिकं तव चरित्रम्, लिखन्ति ; आत्मयशसः सौभाग्यं विना देवतानामन्तिके ईदृशी आदरप्राप्तिर्न स्यादिति भावः। उपजातिर्वृत्तम् ॥५॥

---

(छ) মাতলি। আপনার পক্ষে এই উত্তর উপযুক্ত বটে। (একটু দূরে যাইয়া) আয়ুষ্মন্! এই দিকে দেখুন স্বর্গের উপরে প্রতিষ্ঠিত স্বকীয় যশের কি সৌভাগ্য।

ঐ দেবতারা, গান করিবার যোগ্য পদাবলী রচনা করিয়া, দেবরমণীগণের অঙ্গরাগাবশিষ্ট বর্ণদ্বারা, কল্পলতার বস্ত্রে আপনার চরিত্র লিখিতেছেন ॥৫॥

---

(१)…विचिन्त्य गीतक्षममर्थजातम्…।
(२)…अधिरोहता न लक्षितः स्वर्गमार्गः कतमस्मिन्…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः । त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्त्तयति चक्रविभक्तरश्मिः ।
तस्य व्यपेतरजसः प्रवहस्य वायो-
र्मार्गो द्वितीयहरिविक्रमपूत एषः (१) ॥६॥

---

(ज) राजेति । असुरसम्प्रहाराय दानवयुद्धाय उत्सुकेन उत्कण्ठितेन, दिवमधिरोहता तव विमानेनैव स्वर्गमारोहता मया, अयं प्रदेशः, पूर्वेद्युः पूर्वदिवसे, न लक्षितो न दृष्टः । मरुतां वायूनाम् । वायूनां सप्तत्वात् तत्पथानामपि सप्तत्वेनायं प्रश्नः ।

त्रिस्रोतसमिति । यः प्रवहो नाम वायुः, गगने आकाशे प्रतिष्ठा स्थितिर्यस्यास्ताम्, त्रिस्रोतसं गङ्गां मन्दाकिनीमिति यावत्, वहति धारयति ; तथा चक्रेण स्वस्थित-ज्योतिषां मण्डलेन विभक्ता विभज्य विन्यस्ता रश्मयः किरणा यत्र स तथोक्तो यः प्रवहो वायुः, ज्योतींषि नक्षत्राणि, वर्त्तयति धारयति ; व्यपेतानि भूवायोरुपरि स्थितत्वात् दूरीभूतानि रजांसि यस्मात् तस्य, तस्य प्रवहस्य प्रवहनामकस्य वायोः, एष दृश्यमानः, द्वितीयेन हरेर्वामनरूपिणो नारायणस्य विक्रमेण पादक्षेपेण पूतः पवित्रीकृतः, मार्गः पन्था विद्यत इति शेषः ।

अत्र व्यपेतरजस इत्यनेन तद्वायोर्निर्म्मलत्वं सूचितम्, तेन न अपुष्टार्थत्वदोषः । अतएव राजा अनुपदमेवाह अन्तरात्मा प्रसीदतीति ।

"दीप्तौ दृष्टौ च तारासु ज्योतिःशब्दो निगद्यते" इत्यनेकार्थः ।

---

(জ) রাজা। মাতলি! পূর্ব্বদিন অসুরগণের সহিত যুদ্ধের জন্য উৎকণ্ঠিত অবস্থায় স্বর্গে উঠিতেছিলাম বলিয়া, এই সমস্ত স্থান আমি লক্ষ্য করি নাই; অতএব বায়ুর কোন্ পথে আমরা এখন অবস্থান করিতেছি ?।

মাতলি। যে বায়ু, আকাশগঙ্গাকে ধারণ করিতেছে এবং যে

---

(१)…ज्योतींषि वर्त्तयति च प्रविभक्तरश्मिः । तस्य द्वितीयहरिविक्रमनिस्तमस्कं वायोरिमं परिवहस्य वदन्ति मार्गम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । अतः खलु मे सबाह्यान्तःकरणोऽन्तरात्मा प्रसीदति ।
रथाङ्गमवलोक्य । मन्ये मेघपदवीमवतीर्णाः स्मः (१) । (भ)

सप्तविधान् वायूनाह सिद्धान्तशिरोमणिः—

"भूवायुरावह इह प्रवहस्तदूर्द्ध्वः स्यादुद्वहस्तदनु संवहसंज्ञकश्च ।
अन्यस्ततोऽपि सुवहः परिपूर्वकोऽस्मात् बाह्यः परावह इमे पवनाः प्रसिद्धाः ॥"
"भूमेर्बहिर्द्वादश योजनानि भूवायुरत्राम्बुदविद्युदाद्यम् ।
तदूर्द्ध्वगो यः प्रवहः स नित्यं प्रत्यग्गतिस्तस्य तु मध्यसंज्ञा ॥
नक्षत्रकक्षा खचरैः समेता यस्मादतस्तेन समाहतोऽयम् ।
भपञ्जरः खेचरचक्रयुक्तो भ्रमत्यजस्रं प्रवहानिलेन ॥"

सूर्य्यसिद्धान्तश्च—"भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः ।
पर्य्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ॥"

वसन्ततिलका वृत्तम् ॥६॥

(भ) राजेति । अतः मन्दाकिनीवाहिनो वायोः सम्बन्धात्, बाह्यैश्चक्षुरादिभिः अन्तःकरणैर्मनःप्रभृतिभिश्च सहेति सबाह्यान्तःकरणः, अन्तरात्मा जीवात्मा, प्रसीदति निर्मलीभवति । रथाङ्गं चक्रम् । मन्ये मन्ये, मेघानां पदवीं गमनागमनपथम्, अवतीर्णा उपस्थिताः ।

करणान्याह सांख्यकारिका—

"अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥"

---

বায়ু নক্ষত্রমণ্ডল ধারণ করে, তখন সেই নক্ষত্রমণ্ডল পৃথক্ পৃথক্ ভাবে যে বায়ুর উপরে কিরণ বিন্যস্ত করিয়া থাকে, পার্থিবধূলিশূন্য প্রবহনামক সেই বায়ুর এই পথ, ইহা বামনরূপী নারায়ণের দ্বিতীয় পাদক্ষেপে পবিত্র হইয়াছিল ॥৬॥

---

(१)...मेघपदवीमवतीर्णौ स्वः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः । आयुष्मन् ! कथमवगम्यते ? (१) । (ञ)

राजा । अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥७॥

---

"अन्तःकरणं त्रिविधं बुद्धिरहङ्कारो मन इति शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम्। दशधा बाह्यमिन्द्रियम्" इति तत्त्वकौमुदी ।

(ञ) मातलिरिति । अवगम्यते मेघपदव्यामवतरणमिति शेषः ।

तदवगतिकारणमाह अयमिति । शीकरैर्मेघस्यैव जलबिन्दुभिः क्लिन्ना आर्द्रीकृता नेमिश्चक्रप्रान्तभागो यस्य स तादृशः, अयं ते तव रथो रथाकारं विमानम्, अरविवरेभ्य एवं तगात्रस्थरन्ध्रेभ्यः निष्पतद्भिः मेघजलबिन्दुपानाय निर्गच्छद्भिः, चातकैस्तदाख्यपक्षिविशेषैः, अचिरम् अचिरस्थायिन्यो भासो दीप्तयो यासां तासां विद्युताम्, तेजसा अनुलिप्तैरनुरञ्जितैः, हरिभिश्च घोटकैर्घोटकाकारयन्त्रैश्चेत्यर्थः, वारीणि जलानि गर्भे अभ्यन्तरे येषां तानि वारिगर्भाणि उदराणि अभ्यन्तरावकाशा येषां तेषां तथोक्तानाम्, घनानां मेघानाम्, उपरि सन्निहितोर्द्ध्वदेशे, गतं गमनम्, पिशुनयति सूचयति, अन्यथा नेमेः क्लिन्नत्वं हरीणां विद्युदालोकेनानुलिप्तत्वं जलपानाय चातकनिर्गमनञ्च न स्यादिति भावः ।

अत्र घनोपरिगमनसूचनं प्रति प्रथमार्द्धगतकारणद्वयोपन्यासात् समुच्चयोऽलङ्कारः, तथा तत्सूचनं प्रति शीकरक्लिन्ननेमिपदस्यार्थोऽपि हेतुरिति पदार्थहेतुकं काव्यलिङ्ग

---

(ঝ) রাজা। এই জন্যই আমার বহিরিন্দ্রিয় ও অন্তরিন্দ্রিয়ের সহিত অন্তরাত্মা প্রসন্ন হইয়াছে। ( রথচক্রের প্রতি দৃষ্টিপাত করিয়া ) আমি মনে করি—আমরা মেঘপথে অবতরণ করিয়াছি।

(ঞ) মাতলি। আয়ুষ্মন্! কি প্রকারে জানিলেন?।

---

(१) मातलिः । कथमवगम्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः। अथकिम्। त्वणात्त्वायुष्मान् स्वाधिकारभूमौ वर्त्तिष्यते (१)। (ट)

राजा। अधोऽवलोक्य। मातले! वेगादवतरणादाश्चर्य्य-दर्शनः संलक्ष्यते मनुष्यलोकः। तथाहि—(ठ)

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी,
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः।

तदुभयशङ्कानतिविच्छित्त्या च प्रथमार्द्धगतहेतुद्वयेन घनपरिगमनरूपसाध्यस्य ज्ञानादनुमाना-लङ्कारः।

रथो रथाकारं विमानं हरिभिश्व तदाकारचालकयन्त्रैरित्येव वक्तव्यम्; अन्यथा सामान्यरथस्य वास्तविकघोटकानाञ्च आकाशे गमनासम्भवः; दैवताप्रभावादिति चेत् निष्प्रयोजनं रथाद्युल्लेखनं दैवताप्रभावेण स्वतोऽपि तत्सिद्धेः।

मालिनी वृत्तम् ॥७॥

(ट) मातलिरिति। अथकिमित्यव्ययमेवाङ्गीकारार्थमव्ययम् "अङ्गीकारेऽपि चाथकिम्" इति हारावलीप्रामाण्यात्। स्वाधिकारभूमौ स्वस्वत्वास्पदीभूतमर्त्त्यलोके।

(ठ) राजेति। आश्चर्य्यं दर्शनं यस्य स तादृशः।

---

রাজা। আপনার এই রথের চক্রগুলির প্রান্তভাগ সকল, জলবিন্দুতে আর্দ্র হইয়া গিয়াছে; এই অবস্থায় এই রথই, পর্বতগাত্রস্থ কোটর হইতে নির্গত চাতকপক্ষী এবং বিদ্যুতের তেজে রঞ্জিত ঘোটকগণদ্বারা জলপূর্ণ মেঘের উপরে গমন সূচনা করিতেছে ॥৭॥

(ট) মাতলি। হাঁ। ক্ষণকালের মধ্যেই আপনি, নিজের অধিকৃত মর্ত্তভূমিতে উপস্থিত হইবেন।

(ঠ) রাজা। (নীচের দিকে চাহিয়া) মাতলি! বেগে অবতরণ করিতে থাকায় মনুষ্যলোকটী আশ্চর্য্যই দেখা যাইতেছে।

---

(१) मातलिः। त्वणादायुष्मन्…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्धानं तनुभागनष्टसलिलव्यक्त्या व्रजन्त्यापगाः; (१)
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥८॥

शैलानामिति। मेदिनी पृथिवी, उन्मज्जताम् उद्गच्छताम्, शैलानां पर्वतानाम्, शिखरात् शृङ्गात्, अवरोहतीव अवतरतीव। प्रथममतिदूरतया पर्वतानां पृथग्दर्शनात् पृथिवी समतलेवादृश्यत; परञ्च क्रमिकावतरणेनेदानीं पर्वतानां पृथग्दर्शनारम्भात् सा पृथिवी पर्वतशृङ्गादवतरतीवेति प्रतीयत इति सरलार्थो भावार्थश्च। पादपा वृक्षाः, स्कन्धानां शाखोत्पत्तिदेशानाम् उदयात् प्रकाशात्, पर्णाभ्यन्तरेषु लीनतां लुक्कायितत्वम्, विजहति परित्यजन्तीव। पूर्वमतिदूरत्वात् वृक्षाः पर्णाभ्यन्तरेषु लुक्कायिता इवाज्ञायन्त; इदानीन्तु क्रमशो नैकट्येन तेषां स्कन्धदेशा दृश्यन्ते, तेन च ते तल्लुक्कायितभावं त्यजन्तीवेति मन्यते इति स्पष्टार्थो भावार्थश्च। आपगा नद्यः, तनुभागेषु स्वल्पप्रसारदेशेषु, नष्टानामतिदूरत्वाददर्शनं गतानां सलिलानां जलानां व्यक्त्या क्रमशः सान्निध्यात् प्रकाशेन, सन्धानं संयोगमैक्यमिति यावत्, व्रजन्ति प्राप्नुवन्तीव। प्रागतिदूरतया स्वल्पप्रसरदेशेषु जलानामदर्शनात् तत्र नद्यो विच्छिन्ना इव दृष्टाः; इदानीन्तु सान्निध्येन तत्तत्स्वल्पप्रसारदेशेष्वपि जलदर्शनात् ते नद्युभयभागाः संयुक्ता एव प्रतीयन्त इति सरलार्थो भावार्थश्च। तथा उत्क्षिपता भुवनमेवोर्द्ध्वं निक्षिपता केनापि जनेन, भुवनं जगत्, मत्पार्श्वम्, आनीयत इवेति त्वं पश्य। पूर्वमतिदूरतया भुवनमपकृष्टमेवालक्ष्यत, इदानीन्तु वेगेनावतरणात् सान्निध्येन भुवनमुत्क्षिप्तमिव मन्यत इति सरलार्थो भावार्थश्च।

अत्र प्रथमे चतुर्थे च पादे इवशब्दसत्त्वात् वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, द्वितीये तृतीये च पादे इवशब्दासत्त्वात् प्रतीयमाना तथैव क्रियोत्प्रेक्षा, इत्येतासां परस्परनिरपेक्षतया संसृष्टिः। तथा पश्येति वाक्यान्तरपदस्य केनापीत्यादिवाक्यान्तर्प्रवेशात् सङ्कीर्णतादोषः; स च 'उत्क्षिप्येव ममान्तमानयति कोऽप्येतज्जगन्मण्डलं' इति पाठेन समाधेयः।

"अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखावधिस्तरोः" इत्यमरः।

(१) सन्तानैस्तनुभावनष्टसलिला व्यक्तं भजन्त्यापगाः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

মাতলিঃ । আয়ুষ্মন্ ! সাধু দৃষ্টম্ । সবহুমানমালোক্য । অহো ! উদাররমণীয়া পৃথিবী (১) । (ড)

রাজা । মাতলে ! কতমোঽয়ং পূর্ব্বাপরসমুদ্রাবগাঢ়ঃ কনকরসনিষ্যন্দী সান্ধ্য ইব মেঘঃ সানুমানালোক্যতে (২) । (ঢ)

কল্পনামাত্রেণ ঈদৃশবর্ণনায়া অসম্ভবাৎ কালিদাসেন স্বয়মেব বিমানাবতরণানুভূয়েদং বর্ণিতমিতি তৎকালেঽপি ভারতবর্ষে বিমানবিহাররীতিরাসীদিতি বদন্তি ।

শার্দ্দূলবিক্রীড়িতং বৃত্তম্ ॥৮॥

(ড) মাতলিরিতি । সাধু সম্যক্ । উদাররমণীয়া মহামনোহরা ।

(ঢ) রাজেতি । পূর্ব্বাপরয়োঃ পূর্ব্বপশ্চিময়োঃ সমুদ্রয়োর্মধ্যে অবগাঢ়ঃ প্রবিষ্টঃ, কনকরসং স্বর্ণদ্রবং নিষ্যন্দয়িতুং স্রাবয়িতুং শীলমস্যেতি কনকরসনিষ্যন্দী, সন্ধ্যায়া অয়মিতি সান্ধ্যঃ সন্ধ্যাকালীনঃ মেঘ ইব, সানুমান্ পর্ব্বতঃ ।

পর্ব্বতগুলি জাগিয়া উঠিতেছে, আর তাহার শৃঙ্গ হইতে পৃথিবী যেন নামিতেছে ; গুঁড়িগুলি প্রকাশ পাইতেছে বলিয়া, গাছগুলি যেন পাতার ভিতরে লুকানভাব ত্যাগ করিতেছে ; সরু জায়গার জল পূর্ব্বে দেখা যাইত না এখন তাহা প্রকাশ পাইতে থাকায়, নদীগুলি ( দুই অংশে ) সংযুক্ত হইতেছে এবং কোন লোক যেন উর্দ্ধে নিক্ষেপ করিয়া, মর্ত্ত্যমণ্ডলটীকে আমার পার্শ্বে আনিতেছে—দেখুন ॥৮॥

(ড) মাতলি । আয়ুষ্মন্ ! আপনি ঠিক্ দেখিয়াছেন । ( বিশেষ আদরের সহিত দেখিয়া ) কি আশ্চর্য্য ! পৃথিবী বড়ই সুন্দর দেখা যাইতেছে ।

(ঢ) রাজা । মাতলি ! পূর্ব্ব এবং পশ্চিম সমুদ্রে প্রবিষ্ট, তরল সুবর্ণস্রাবী এবং সন্ধ্যাকালীন মেঘের ন্যায় বিচিত্র এই কোন্ পর্ব্বত দেখা যাইতেছে ? ।

(১) ক্বচিৎ আয়ুষ্মন্ ইতি নাস্তি । (২) সান্ধ্য ইব মেঘপরিঘঃ··· ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः । आयुष्मन् ! एष खलु हेमकूटो नाम किंपुरुषपर्वतः परं तपस्विनां क्षेत्रम् (१) । (ण)

स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽस्मिन् सपत्नीकस्तपस्यति (२) ॥८॥

राजा । सादरम् । तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि । (त)

(ण) मातलिरिति । हेम्नः कूटानि स्वर्णमयानि शृङ्गाणि यस्य सः, किंपुरुषाणां किन्नराणां पर्वतः, तपस्विनां परं क्षेत्रम् उत्कृष्टं स्थानम् ।

"दूरानात्मोत्तमाः पराः" इत्यमरः ।

परं तपस्विनां क्षेत्रमित्यर्थे प्रमाणमाह स्वायम्भुवादिति । स्वयम्भुवो ब्रह्मणोऽयमिति स्वायम्भुवो ब्रह्मणः पुत्रस्तस्मात्, मरीचेस्तदाख्यात् देवर्षेः, यः प्रजापतिः प्रबभूव, सुरासुराणां देवासुराणां गुरुः पिता, पत्न्या देवजनन्या अदित्या सहेति सपत्नीकः स कश्यपः, अस्मिन् हेमकूटपर्वते, तपस्यति तपस्यां करोति । अतएव पर्वतोऽयं तपस्विनां परं क्षेत्रमेवेत्याशयः ।

"गुरुर्गीष्पतिपित्राद्यः" इत्यमरः ॥८॥

(त) राजेति । श्रेयांसि मङ्गलानि । भगवन्तं माहात्म्यशालिनं कश्यपं प्रजापतिम् । तथा च बौद्धागमे—

(ণ) মাতলি। আয়ুষ্মন্! তপস্বীদিগের উৎকৃষ্ট স্থানে হেমকূট নামে এই কিন্নরপর্বত দেখা যাইতেছে।

ব্রহ্মার পুত্র মরীচি হইতে যিনি জন্মগ্রহণ করিয়াছিলেন, দেব ও অসুরগণের পিতা সেই কশ্যপপ্রজাপতি পত্নীর সহিত এই পর্ব্বতে তপস্যা করিতেছেন ॥৮॥

(१)···तपसां संसिद्धिक्षेत्रम् । (२)···सोऽत्र···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः । आयुष्मन् ! प्रथमः कल्पः । अवतरणं नाटयन् । एतावववतीर्णौ स्वः (१) । (थ)

राजा । सविस्मयम् । मातले ! (२)

उपोढ़शब्दा न रथाङ्गनेमयः,
प्रवर्त्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुद्धतिः
तवावतीर्णोऽपि न लक्ष्यते रथः (३) ॥१०॥

"गुणैरतुल्यैर्निखिलैः समागमादशेषदोषापगमाच्च नौ गुरुः ।
समयमाहात्म्यविभूषितौ यतः प्रकीर्त्यतेऽस्माद्भगवानसाविति ॥"

(थ) मातलिरिति । प्रथमः कल्पः मुख्यमनुष्ठानम्, काश्यपस्य प्रदक्षिणीकरणानन्तर-गमनमिति शेषः ; श्रेयःसाधनत्वादिति भावः । नाटयन् अभिनयन् । स्वः आवामिति शेषः । स्व इति अस् धातोः वर्त्तमानाया उत्तमपुरुषद्विवचने रूपम् ।

उपोढ़ेति । अभूतलस्पर्शतया भूतलस्पर्शाभावेनेत्यर्थः, रथाङ्गानां चक्राणां नेमयः प्रान्तभागाः, उपोढ़ा धृताः शब्दा याभिस्तास्तादृश्यो न अनुत्पन्नशब्दा इति तात्पर्य्यम्, वर्त्तमानम् उत्पद्यमानम्, रजो धूलिश्च, न दृश्यते ; तथा निर्न विद्यते उद्धतिः हठादेव भूसंयोगादुद्दहनं यस्य स निरुद्धतिः ; अतएव तव रथो विमानम्, अवतीर्णोऽपि

(ত) রাজা। (আদরের সহিত) তাহা হইলে, মঙ্গল অতিক্রম করা উচিত নহে। আমি ভগবান্‌কে প্রদক্ষিণ করিয়া যাইতে ইচ্ছা করি।

(থ) মাতলি। আয়ুষ্মন্! ইহা উত্তম কল্প। (অবতরণ অভিনয় করিয়া) এই আমরা অবতীর্ণ হইয়াছি।

রাজা। (বিস্ময়ের সহিত) মাতলি!

(१) मातलिः । प्रथमः कल्पः । नाट्येनावतीर्णौ ।
(२) क्वचिदिदं सम्बोधनं न दृश्यते । (३)···अभूतलस्पर्शतया निरुन्धतः···।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः। एतावानेव शतमन्योरायुष्मतश्च रथस्य विशेषः (१)। (द)

राजा। मातले! कतमस्मिन् प्रदेशे मारीचाश्रमः?। (ध)

मातलिः। हस्तेन दर्शयन्। पश्य—(२)

---

भूपतितोऽपि, न लक्ष्यते अवतीर्णतया न बुध्यते; नेमीनां शब्दाभावात् रजसामदर्शनात् उद्धत्यभावाच्चेति भावः। अतएव सविस्मयमित्युक्तम्।

अत्र अवतीर्णताबोधाभावं प्रति पूर्ववाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। तथा "चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्" इत्यमरोक्त्यादिना नेमिशब्देनैव चक्रप्रान्तप्राप्तावपि पुनः रथाङ्गपदप्रयोगात् पुनरुक्तत्वादोषप्रसक्तोऽपि उत्कृष्टनेमिबोधनान्न स दोषः सम्पन्नः 'पुष्पमाला' इत्यादिदर्पणोदाहरणवत्। तथा च—

"धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः। आरूढत्वादिबोधाय" इति साहित्यदर्पणः।

वंशस्थविलं वृत्तम् ॥१०॥

(द) मातलिरिति। शतमन्योरिन्द्रस्य आयुष्मतो भवतश्च। विशेषो रथान्तरेभ्यो भेदः। एतेन तदानीं मर्त्त्यवासिनामपि विमानव्यवहार आसीदिति प्रतीयते।

(ध) राजेति। मरीचेरपत्यमिति मारीचः कश्यपस्तस्याश्रमो मारीचाश्रमः।

---

আপনার রথ ভূতল স্পর্শ করে নাই বলিয়া, চক্রের প্রান্তভাগে শব্দ হয় নাই, ধূলি উঠিতেও দেখা যাইতেছে না এবং ধাক্কা লাগিয়া রথ লাফাইয়াও উঠে নাই। অতএব আপনার রথ অবতরণ করিয়া থাকিলেও তাহা লক্ষ্য করিতে পারা যায় নাই॥১০॥

(দ) মাতলি। দেবরাজের এবং আপনার রথের এই টুকুই বিশেষ।

(ধ) রাজা। মাতলি! কশ্যপের আশ্রম কোন্ জায়গায়?।

---

(१) क्वापि रथस्येति नास्ति। (२) क्वचित् पश्येति नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वल्मीकार्द्धनिमग्नमूर्त्तिरुरगत्वग्ब्रह्मसूत्रान्तरः (१)
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसम्पीड़ितः ।
अंसव्यापि शकुन्तनीड़निचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥११॥

वल्मीकेति । वल्मीके उपिकाकृतमृत्तिकास्तूपमध्ये अर्द्धनिमग्ना मूर्त्तिः शरीरं यस्य सः, अतिदीर्घकालमेकभावेनावस्थानात् उपिकाभिर्मृत्तिकामुत्तोल्य देहस्यार्द्धं यावदावृत इति भावः; उरगत्वक् सर्पनिर्म्मोकः ब्रह्मसूत्रान्तरम् अन्यद्यज्ञोपवीतं, यस्य स तादृशः, अतीवनिश्चलभावेनावस्थानात् स्थाणुभ्रमेण कश्चित् सर्पः यज्ञोपवीतधारणस्थाने स्वकीयनिर्म्मोकं मुक्तवानित्याशयः, जीर्णानां शुष्कानां लतानां प्रतानो विस्तार एव वलयं कङ्कणवद्गोलाकारवेष्टनं तेन, कण्ठे गलदेशे, अत्यर्थं सम्पीड़ितः दृढ़बन्धनात् अतिशयेन यातनां प्रापितः; लतासमूहः समुत्पद्य दीर्घकालेन जीर्णतां प्राप्य कण्ठदेशे ईदृशं दृढ़लग्नः, येन महापीड़ानुभवः स्यादित्यभिप्रायः। इदन्तु योग्यतामात्रमुक्तं तादृशतपस्विनां कष्टाननुभवात्। तथा अंसव्यापि स्कन्धदेशव्यापकम्, शकुन्तनीड़ैः पक्षिणां कुलायैर्निचितं व्याप्तम्, जटानां मण्डलं समूहम्, बिभ्रत् धारयन्, अत्यन्तनिश्चलतया क्षुद्रक्षुद्रपक्षिणो जटासु नीड़ानि निर्म्माय स्थिता इति भावः। असौ दृश्यमानो मुनिः कश्चित्तपस्वी, यत्र यस्मिन् प्रदेशे, अचलो निश्चलः, स्थाणुः शाखादिविहीनो वृक्षकाण्ड इव, अर्कबिम्बं सूर्य्यमण्डलम्, अभि लक्ष्यीकृत्य, स्थितः अवतिष्ठते तस्मिन् प्रदेशे मारीचाश्रम इति भावः।

अत्र उरगत्वग्ब्रह्मसूत्रान्तर इति निरङ्गं केवलरूपकम्, स्थाणुरिवेति श्रौतोपमा च, अनयोः परस्परनिरपेक्षतया संसृष्टिः।

शार्दूलविक्रीड़ितं वृत्तम् ॥११॥

মাতলি। (হাত দিয়া দেখাইয়া) দেখুন—

যাঁহার দেহ, উইয়ের মাটীর ভিতরে অর্দ্ধনিমগ্ন রহিয়াছে; সাপের খোলস, আর একটী যজ্ঞোপবীত হইয়াছে; জীর্ণ লতা-পাতা কণ্ঠদেশ

(१) वल्मीकार्द्धनिमग्नमूर्त्तिरुरसा सन्दष्टसर्पत्वचा…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

রাজা। বিলোক্য। নমোঽস্মৈ কষ্টতপসে (১)। (ন)

মাতলিঃ। সংযতপ্রগ্রহং রথং কৃত্বা। এতাবদিতিপরিবর্দ্ধিত-মন্দারবৃক্ষং প্রজাপতেরাশ্রমং প্রবিষ্টৌ স্বঃ (২)। (প)

রাজা। অহো। স্বর্গাদিদমধিকতরং নির্বৃতিস্থানম্। অমৃতহ্রদমিবাবগাঢ়োঽস্মি (৩)। (ফ)

(ন) রাজেতি। কষ্টম্ অতীবকষ্টকরং তপো যস্য তস্মৈ।

(প) মাতলিরিতি। সংযতপ্রগ্রহং যন্ত্ররজ্জুকম্। অদিত্যা তদাখ্যয়া কশ্যপপত্ন্যা পরিবর্দ্ধিতো মন্দারবৃক্ষো যস্মিন্ তম্, প্রজাপতেঃ কশ্যপস্য। এতৌ আবামিতি শেষঃ।

(ফ) রাজেতি। নির্বৃতিস্থানং সুখভূমিঃ। অবগাঢ়ঃ অন্তরে প্রবিষ্টঃ, তদুক্ত-নিরতিশয়শান্তিলাভাদিতি ভাবঃ।

"নির্বৃতিঃ সুস্থতায়াং স্যাদস্তংগমনসৌখ্যয়োঃ" ইতি বিশ্বঃ।

বেষ্টন করিয়া গুরুতর যাতনা দিতেছে এবং যিনি, পক্ষীর বাসায় ব্যাপ্ত ও স্কন্ধপর্য্যন্ত পতিত জটাসমূহ ধারণ করিতেছেন; ঐ মুনি, মুড়ো গাছের মত নিশ্চল অবস্থায়, সূর্য্যমণ্ডলের দিকে চাহিয়া, যেখানে রহিয়াছেন (ঐখানে কশ্যপের আশ্রম) ॥১১॥

(ন) রাজা। (দেখিয়া) ঐ কষ্টকর-তপস্যাকারীকে নমস্কার করি।

(প) মাতলি। (রথের রজ্জু সংযত করিয়া) এই আমরা কশ্যপ-প্রজাপতির আশ্রমে প্রবেশ করিলাম; অদিতিদেবী স্বয়ং এইখানের মন্দারবৃক্ষটীকে পরিবর্দ্ধিত করিয়াছেন।

(ফ) রাজা। কি আশ্চর্য্য! এই স্থানটী, স্বর্গ অপেক্ষাও অধিকতর সুখের স্থান; আমি যেন অমৃতের হ্রদে অবগাহন করিতেছি।

(১) রাজা। নমস্তে কষ্টতপস্বী। (২) মহারাজ! এতৌ···।

(৩) ক্বচিৎ অহো ইতি নাস্তি।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः। रथं स्थापयित्वा। अवतरत्वायुष्मान्।

राजा। अवतीर्य्य। भवान् किमिदानीम् (१)। (व)

मातलिः। सम्मययन्त्रित एवायमास्ते रथः; तद्वयमप्यवतरामः। तथा कृत्वा। इत इत आयुष्मन्! दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः (२)। (भ)

राजा। ननु विस्मयादुभयमप्यवलोकयामि (३)। (म)

(व) राजेति। अवतरेदिति शेषः; अनवतरणे तु अपरिचिततया मम एतत्तपोवनादिदर्शनमसम्भवमेवेति भावः। देवराजसारथेः सम्मानरक्षणार्थं 'भवानवतरतु' इत्यनभिधाय 'अवतरेत्' इत्यपि नाभिहितमिति बोध्यम्।

(भ) मातलिरिति। समयेन सङ्केतेन यन्त्रित एव स्थापित एव, तत्तस्मात् रथस्य अन्यत्र गमनासम्भवादित्यर्थः, वयमपि अहमपीति तात्पर्य्यम्। तथा अवतरणम्। इत इतः अस्यामस्यां दिशि। अत्रभवतां पूज्यानाम्।

"समयः शपथे भाषासम्पदोः कालसंविदोः। सिद्धान्ताचारसङ्केतनियमावसरेषु च॥ क्रियाकारे निर्द्देशे च" इति हेमचन्द्रः।

---

মাতলি। ( রথ থামাইয়া ) আয়ুষ্মান্ অবতরণ করুন।

(ব) রাজা ( অবতরণ করিয়া ) আপনি কি এখন অবতরণ করিবেন ?।

(ভ) মাতলি। এই রথ সঙ্কেতমাত্রেই রক্ষিত আছে; সুতরাং আমিও অবতরণ করিব। ( অবতরণ করিয়া ) আয়ুষ্মন্! এই এই পথে আসুন; মাননীয় মুনিগণের তপোবনভূমিগুলি দেখুন।

(ম) রাজা। বিস্ময়বশতঃ দুইই দেখিতেছি।

---

(१)…मातले! भवान् कथमिदानीम्।

(२) संयन्त्रितो मया रथः। वयमप्यवतरामः।…इत आयुष्मन्! परिक्रम्य।

(३) ननु विस्मयादवलोकयामि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने,
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी (१) ॥१२॥

(म) राजेति । नन्विति सम्बोधने । उभयमपि तपः तपोवनभूमिश्च एतत् द्वयमपि । विस्मयादिति ल्यब्लोपे पञ्चमी, विस्मयमाश्रित्येत्यर्थः ।

ननु कथं विस्मयादवलोकयसीत्याह प्राणानामिति । सन्तो विद्यमानाः कल्पवृक्षा अभीष्टसम्पादनसमर्था देववृक्षविशेषा यस्मिन् तत्र तादृशे वने, अनिलेन वायुना केवलवायुभक्षणेनेत्यर्थः, प्राणानां वृत्तिः स्थितिः, उचिता अभ्यस्ता ; प्रार्थनामात्रेणैव येषु चर्व्य-चोष्य-लेह्य पेयानां चतुर्विधद्रव्याणां प्राप्तिसम्भवः, तादृशकल्पवृक्षसम्पन्नवनेऽपि केवलवायुभक्षणेन जीवनधारणं विस्मयकरमेवेति भावः । काञ्चनपद्मानां स्वर्णपद्मानां रेणुभिः परागैः कपिशे पिङ्गलवर्णे, तोये जले, पुण्या पुण्यजनिका, अभिषेकक्रिया स्नानकार्यसम्पादनम् ; तथा च ईदृशजले सुन्दरीभिः सह केलिमकृत्वा धर्मार्थं स्नानं विस्मयजनकमेवेत्याशयः । रत्नशिला रत्नभूताः प्रस्तरास्तासां गृहेषु तन्निर्म्मितभवनेषु, ध्यानम् ईश्वरं प्रति प्रत्ययैकतानता अविच्छिन्नचिन्ताप्रवाह इति यावत् ; तादृशगृहेषु विलासशय्याशयनादिकमन्तरेण ध्यानकरणं विस्मयकारणमेवेत्यभिप्रायः । तथा विबुधस्त्रीणां देवभोग्यरमणीनामप्सरसामित्यर्थः सन्निधौ समीपे, संयम इन्द्रियदमनम्, अप्सरसां सम्भोगमकृत्वा प्रत्युत इन्द्रियदमनं विस्मयकरमेवेति भावः । अतएव अन्यमुनयः तपोभिः यत् स्थानं वाञ्छन्ति गन्तुमभिलषन्ति, अमी दृश्यमाना मुनयः, तस्मिन् स्थाने, तपस्यन्ति तपस्यां कुर्वन्ति ; एतत् सर्वं वाश्चर्य्यमित्याशयः ।

अत्र कारणीभूतकल्पवृक्षादिसत्त्वेऽपि तत्कार्य्यभूतभोगाभावात् विशेषोक्तिरलङ्कारः, चतुर्थचरणार्थं प्रति पूर्वचरणत्रयगतत्रवाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, अन्यमुन्यपेक्षया तत्रत्यमुनीनामाधिक्यप्रतिपादनात् व्यतिरेकश्च ; इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ।

(१) कपिशे धर्म्माभिषेकक्रिया ।...यत् काङ्क्षन्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः । उत्सर्पिणी खलु महतां प्रार्थना । परिक्रम्य आकाशे । वृद्धसाकल्य ! किं व्यापारः सम्प्रति भगवान् मारीचः ? । आकर्ण्य । किं ब्रवीषि दाक्षायण्या पतिव्रतापुण्यमधिकृत्य पृष्टस्तस्यै महर्षिपत्नीगणसहितायै कथयतीति । तत् प्रतिपाल्यावसरः खलु प्रस्तावः । राजानमवलोक्य । अस्यामशोकच्छायायां तावदास्तामायुष्मान्, यावत्त्वामहमिन्द्रगुरवे निवेदयामि (१) । (य)

"अयमत्त्यन्तुचितं न्याय्यम्" इति यादवः । "तत्र प्रत्ययैकतानताध्यानम्" इति पातञ्जलसूत्रम् ।

शार्दूलविक्रीडितं वृत्तम् ॥१२॥

(य) मातलिरिति । उत्सर्पिणी ऊर्ध्वगामिनी । तथा च अन्यमुनयस्तपोभिरेतत् स्थानं वाञ्छन्ति ; अमी चात्रैव तपस्यन्तो ब्रह्मलोकादिकं कामयन्त इत्याशयः । परिक्रम्य कश्यपसन्निधानं गन्तुं पादक्षेपं कृत्वा, आकाशे शून्ये वृद्धसाकल्यस्य तत्राभावेऽपीत्यर्थः । वृद्धसाकल्येति कस्यचित् कश्यपशिष्यस्य नाम्ना सम्बोधनम् । को व्यापारो

যে বনে কল্পবৃক্ষ রহিয়াছে, সেই বনেও বায়ুভক্ষণে প্রাণ ধারণ করা অভ্যাস, স্বর্ণপদ্মের রেণুতে যে জল পিঙ্গলবর্ণ করিয়া রাখিয়াছে সেই জলে ধর্ম্মার্থ স্নান করা ; মণিময় প্রস্তরনির্ম্মিত গৃহে ভগবানের ধ্যান করা এবং অপ্সরাদের নিকটে সংযত থাকা, অতএব অন্যমুনিরা তপস্যাদ্বারা যে স্থান লাভ করিতে ইচ্ছা করেন, সেই স্থানে থাকিয়াই ইঁহারা তপস্যা করেন ॥১২॥

(১) অয়ি वृद्धसाकल्य ! किमनुतिष्ठति भगवान्···। पतिव्रताधर्मं पृष्टस्तस्यै महर्षिपत्नीसहितायै । राजा । कथं दत्वा । अयि ! प्रतिपाल्यावसरः प्रस्तावः । मातलिः । राजानमवलोक्य । अस्मिन्नशोकवृक्षमूले यावत् त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः प्रविशति मातलिः ।

मातलिः । दिष्ट्या धर्म्मपत्नीसमागमेन पुत्रमुखदर्शनेन च आयुष्मान् वर्द्धते । (क)

राजा । सुहृत्सम्पादितत्वात् साधुतरफलो मे मनोरथः । मातले ! न खलु विदितोऽयमाखण्डलस्यार्थः ? (१) । (ख)

(घ) नास्य विश्वसिमि, आर्य्यपुत्र एव एनं धारयतु ।

(घ) शकु इति । अस्य अङ्गुरीयकस्य, सम्बन्धे अहं न विश्वसिमि न विश्वासं दधामि, पूर्वप्रतारणानुभवेन परमपि प्रतारणाशङ्काद्वादिति भावः । अतएव आर्य्यपुत्रो भवानेव, एनमङ्गुरीयकम् । "तस्य चानुकरोति हि" इत्यादिवत् अस्येति शेषे षष्ठी ।

(क) मातलिरिति । आयुष्मान् भवान् दुष्मन्तः, दिष्ट्या भाग्येन धर्म्मपत्न्याः शकुन्तलायाः समागमेन सम्मेलनेन । वर्द्धते अभ्युदयवान् भवति ।

(ख) राजेति । सुहृदा सख्या त्वया सम्पादितत्वात् फलस्य संघटितत्वात्, मे मम मनोरथः अभिलाषः, साधुतरम् अतीवोत्कृष्टं फलं यस्य स तादृशो जात इति शेषः, साक्षादेव स्त्रीपुत्रलाभादित्याशयः । अयम् अर्थः शकुन्तलाप्रत्याख्यानरूपो विषयः अथवा प्रत्याख्याता शकुन्तला प्रसूतपुत्रा सती अत्रैवास्ते इत्येवं विषयः, आखण्डलस्य इन्द्रस्य, न खलु विदितः न खल्विन्द्रेणावगतः ? इति काकुः । आखण्डलस्येति "वर्त्तमानाधिकरणयोः शेषे" इति षष्ठी ।

(ক্ষ) শকুন্তলা। আমি ইহাকে বিশ্বাস করি না; আর্য্যপুত্রই ইহাকে ধারণ করুক।

তাহার পরে মাতলি প্রবেশ করিল।

(ক) মাতলি। ভাগ্যবশতঃ ধর্ম্মপত্নীর সহিত সম্মিলিত হওয়ায় এবং পুত্রের মুখ দেখায় আপনি অভ্যুদয় লাভ করিয়াছেন ত?।

(१) राजा । अमूत् सम्पादितस्वादुफलो मे मनोरथः । मातले ! न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात् ? ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः । सस्मितम् । किमीश्वराणां परोक्षम् । एहि भगवान् मारीचस्ते दर्शनमिच्छति (१) । (ग)

राजा । प्रिये ! अवलम्ब्यतां पुत्रः, त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि (२) । (घ)

शकु । लज्जेमि क्खु, अज्जउत्तेण सह्ं गुरुअणसमीवं गन्तुं (३) । (ङ)

(ङ) लज्जे खलु आर्य्यपुत्रेण सार्द्धं गुरुजनसमीपं गन्तुम् ।

(ग) मातलिरिति । सर्वथैवायगतार्थेन इन्द्रेणैवात्मनः प्रेरितत्वात् कौतुकेन स्मितम् । ईश्वराणाम् अणिमाद्यैश्वर्य्यशालिनाम्, किं वस्तु, परोक्षम् अतीन्द्रियम्, अनवगतं तिष्ठतीति तात्पर्य्यम्, अपि तु किमपि नेत्यर्थः, अन्तर्यामितया सर्व एवायमर्थ आखण्डलस्य विदित एवेति भावः । मारीचः कश्यपः, दर्शनं साक्षात्कारम् ।

(घ) राजेति । अवलम्ब्यतां क्रोड़े ग्रियताम् । पुरस्कृत्य अग्रेसरीकृत्य, भगवन्तं कश्यपम् ।

(খ) রাজা। বন্ধুজনের সম্পাদিত বলিয়া, আমার অভিলাষের ফল ভালই হইয়াছে। মাতলি ! দেবরাজ এই বৃত্তান্ত জানেন নাই ত ?

(গ) মাতলি। (ঈষৎ হাস্যের সহিত) অণিমাদি ঐশ্বর্য্যশালীদের কোন্ বিষয় অজ্ঞাত থাকে ? আসুন, ভগবান্ কশ্যপ আপনার সাক্ষাৎকার ইচ্ছা করেন।

(ঘ) রাজা। প্রিয়ে ! পুত্রটীকে কোলে লও, তোমাকে সম্মুখে করিয়া ভগবান্ কশ্যপকে দেখিতে ইচ্ছা করি।

(ঙ) শকুন্তলা। আর্য্যপুত্রের সঙ্গে গুরুজনের নিকট যাইতে আমার লজ্জা করে।

(१)···एह्यायुष्मन् !·· दर्शनं वितरति । (२) राजा । शकुन्तले ! अवलम्ब्यताम् ।

(३) शकुन्तला । ह्रियामि अज्जउत्तेण सह गुरुसमीवं गन्तुं ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। आचरितव्यमेतदभ्युदयकालेषु ; तदेहि तावत् (१)। (च)

इति सर्वे परिक्रामन्ति। (छ)

ततः प्रविशत्यदित्या सहासनोपविष्टो मारीचः (२)। (ज)

मारीचः। राजानमवलोक्य। दाक्षायणि! (झ)

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्मन्त इत्यभिहितो भुवनस्य भर्त्ता।
चापेन यस्य विनिवर्त्तितकर्म्म जातं
तत् कोटिमत् कुलिशमाभरणं मघोनः ॥२६॥

---

(च) राजेति। अभ्युदयकालेषु उन्नतिसमयेषु, एतत् पतिपत्नीपुत्राणां मिलित्वा गुरुजनवन्दनादिकम्, आचरितव्यं कर्त्तव्यम् ; अतो न लज्जितव्यमित्याशयः।

(छ) इतीति। परिक्रामन्ति कश्यपसमीपं गन्तुं पादक्षेपं कुर्व्वन्ति।

(ज) तत इति। मारीचः मरीचिपुत्रः कश्यपः। ननु प्रवेशो नाम अभ्यन्तर-गमनम्, उपविष्टस्य निवृत्तगमन इत्युपविष्टस्य स्वयं प्रवेशोऽनुपपन्न एवेति चेन्न ईदृशस्थले जहत्स्वार्थलक्षणया जवनिकापसारणादिना सभ्यदृष्टिगोचरत्वमेव विशधातोरर्थं इति प्रविशति सभ्यानां दृष्टिगोचरीभवतीत्यर्थान्नानुपपत्तिरिति ध्येयम्।

(झ) मारीच इति। दक्षस्यापत्यं स्त्रीति दाक्षायणी दक्षतनया, तत् सम्बोधनम्।

पुत्रस्येति। अयम् उपस्थितः पुरुषः, ते तव पुत्रस्य इन्द्रस्य, रणशिरसि समराङ्गने, अग्रयायी सर्व्वेषां सैन्यानामग्रगामी, अतएव महावीर इति भावः ; दुष्मन्त इति

---

(চ) রাজা। অভ্যুদয়ের সময়ে এইরূপ করা উচিত ; অতএব আইস।

(ছ) ( ইহার পরে সকলে পাদক্ষেপ করিতে লাগিল। )

(জ) তদনন্তর অদিতির সহিত আসনোপবিষ্ট কশ্যপের প্রবেশ।

(ঝ) কশ্যপ। ( রাজাকে দেখিয়া ) দক্ষতনয়ে!

---

(१) राजा। अयि! आचरितव्यमभ्युदयकालेषु। एहि एहि।

(२)·· अदित्या सार्द्धमासनस्थः···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অদিতিঃ। সম্ভাবণীঅপ্পহাবা সে আকিদী (১)। (ঞ)

মাতলিঃ। আয়ুষ্মন্! এতৌ পুত্রপ্রীতিপিশুনেন চক্ষুষা দিবৌকসাং পিতরাবায়ুষ্মন্তমবলোকয়তঃ, তদুপসর্প (২)। (ট)

(ঞ) সম্ভাবনীয়প্রভাবা অস্যাকৃতিঃ।

---

নাম্না অভিহিতো লোকৈরাখ্যাতঃ, ভুবনস্য মর্ত্যলোকস্য, ভর্ত্তা রক্ষিতা রাজেত্যর্থঃ। যস্য দুষ্মন্তস্য, চাপেন ধনুষা, বিনিবর্ত্তিতং সম্পাদিতং কর্ম্ম শত্রুবিজয়রূপং কার্য্যং যস্য তৎ তাদৃশম্, তৎ প্রসিদ্ধম্, কোটিমৎ তীক্ষ্ণাগ্রম্, কুলিশং বজ্রম্, মঘোন ইন্দ্রস্য, আভরণম্ অলঙ্কারস্বরূপং জাতম্, যুদ্ধাত্মকপ্রয়োজনাভাবাৎ বীরশরীরশোভাজনকত্বা-দিত্যাশয়ঃ।

অত্র আভরণত্বং প্রতি বিনিবর্ত্তিতকর্ম্মপদস্যার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গম্, আভরণম্ আভরণরূপমিতি নিরঙ্গং কেবলরূপকঞ্চ অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

বসন্ততিলকা বৃত্তম্ ॥২৬॥

(ঞ) অদিতিরিতি। সম্ভাবনীয়ঃ অবধারণীয়ঃ প্রভাবঃ শক্তির্যস্যাঃ সা। তথা চ অস্যাকৃতিদর্শনেনৈব মহাশক্তিরস্তীতি সম্ভাবয়িতুং শক্যত ইত্যাশয়ঃ।

"প্রভাবঃ শক্তিতেজসোঃ" ইতি বিশ্বঃ।

(ট) মাতলিরিতি। পুত্রে পুত্রস্য ইন্দ্রস্য সখিত্বেন পুত্রস্বরূপে ত্বয়ি প্রীতিপিশুনেন স্নেহসূচকেন। দিবৌকসাং দেবানাম্, পিতরৌ মাতাপিতরৌ, এতৌ অদিতিকশ্যপৌ, আয়ুষ্মন্তং ভবন্তম্। তৎ তস্মাৎ, উপসর্প এতয়োঃ সমীপং গচ্ছ।

---

তোমার পুত্র দেবরাজের যুদ্ধে ইনি অগ্রগামী হইয়া থাকেন, ইনি দুষ্মন্তনামে অভিহিত এবং মর্ত্ত্যলোকের রাজা; যাঁহার ধনুতে বজ্রের কার্য্য সম্পাদন করে বলিয়া সেই তীক্ষ্ণ বজ্র, ইন্দ্রের অলঙ্কারমাত্র হইয়া থাকে ॥২৬॥

(ঞ) অদিতি। ইঁহার আকৃতি দেখিয়া, প্রভাবের অনুমান করা যায়।

---

(১)···সম্ভাবণীআণুভাবা। (২)···তাণুপসর্প।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। मातले!

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं,
भर्त्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम्।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं (१)
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत् स्रष्टुरेकान्तरम् ॥२७॥

प्राहुरिति। मुनयः, यत् द्वन्द्वम्, द्वादशधा द्वादशभिः प्रकारैर्मूर्त्तिभिरित्यर्थः, स्थितस्य, तेजसः तेजोमयस्य सूर्य्यस्य, कारणमुत्पादकम्, प्राहुर्वदन्ति; यत् द्वन्द्वं कर्त्तृ, भुवनत्रयस्य स्वर्गमर्त्त्यपातालात्मकत्रिजगतः, भर्त्तारं परिपालयितारम्, तथा यज्ञे भागो येषां ते यज्ञभागा देवास्तेषामीश्वरम् अधिपतिम् इन्द्रमिति तात्पर्य्यम्, सुषुवे उत्पादयामास; तथा आत्मना भवतीति आत्मभूर्ब्रह्मा तस्मादपि पर उत्कृष्टः पुरुषो नारायणः, भवाय वामनरूपेणोत्पत्तये, यस्मिन् द्वन्द्वे, आस्पदम् आधेयतासम्बन्धेन जन्यतासम्बन्धेन च स्थितिम्, चक्रे कृतवान्; दक्षो ब्रह्मणो दक्षाङ्गुष्ठतो जातः प्रजापतिः मरीचिश्च तस्यैव ज्येष्ठो मानसपुत्रः ताभ्यां सकाशात् सम्भवतीति दक्षमरीचिसम्भवम्, स्रष्टुर्ब्रह्मणः सकाशात्, एकेन पुरुषेण दक्षेण मरीचिना च अन्तरं व्यवधानं यस्य तत् तादृशम्, इदं दृश्यमानम्, तत् द्वन्द्वं दम्पतियुगलं किमिति काकुवशेन प्रश्नो व्यज्यते। ब्रह्मणः पौत्री दक्षस्य च पुत्री सेयमदितिः किम्, ब्रह्मणः पौत्रो मरीचेश्च पुत्रः सोऽयं कश्यपश्च किमिति सरलार्थः।

अत्र अदितिकश्यपयोर्निरतिशयप्राधान्यप्रतिपादनकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः।

(ট) মাতলি। আয়ুষ্মন্! এই দেবগণের পিতা ও মাতা, পুত্রের প্রতি স্নেহসূচক দৃষ্টিতে আপনাকে দেখিতেছেন; অতএব ইঁহাদের নিকটে যান।

(१) यस्मिन्नात्मभवः···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः । अथकिम् । (ठ)

राजा । प्रणिपत्य । उभाभ्यामपि वां वासवनियोज्यो दुष्मन्तः प्रणमति (१) । (ड)

"दूरानात्मोत्तमाः पराः" "जम्पती दम्पती भवौ" "विद्वौनै मिथुनं द्वन्द्वं युग्मन्तु युगलं युगम्" इत्यमरः ।

द्वादशादित्या मिताक्षरायां दिव्यविधिप्रकरणे परिगणिताः । यथा—

"धाताऽर्य्यमा च मित्रश्च वरुणोऽंशो भगस्तथा ।

इन्द्रो विवस्वान् पूषा च पर्ज्जन्यो दशमः स्मृतः ॥

ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ।

इत्येते द्वादशादित्या नामभिः परिकीर्त्तिताः ॥"

विष्णुपुराणे—"अदितेः कश्यपाज्जाताः देवाश्चेन्द्रादयोऽनघ ! ।"

"मन्वन्तरे च सम्प्राप्ते तथा वैवस्वते द्विज ! ।

वामनः कश्यपाद्विष्णुरदित्यां सम्बभूव ह ॥"

प्रमाणान्तराण्यनुसन्धेयानि । शार्दूलविक्रीड़ितं वृत्तम् ॥२७॥

(ठ) · मातलिरिति । अथकिमित्यङ्गीकारे ।

---

রাজা। মাতলি !

মুনিগণ যাঁহাদিগকে দ্বাদশরূপে অবস্থিত তেজের (সূর্য্যের) উৎপাদক বলিয়া থাকেন ; যাঁহারা, ত্রিভুবনের রাজা এবং যজ্ঞের অংশভাগী ইন্দ্রকে উৎপাদন করিয়াছেন এবং ব্রহ্মা হইতেও প্রধান পুরুষ স্বয়ং নারায়ণ, বামনরূপে জন্ম গ্রহণ করিবার জন্য, যাঁহাদের উপরে আশ্রয় লইয়াছিলেন ; দক্ষ ও মরীচি হইতে উৎপন্ন এবং ব্রহ্মা হইতে একটী পুরুষমাত্রে ব্যবহিত এই কি সেই দম্পতিযুগল ? ॥২৭॥

(ঠ) মাতলি। হাঁ।

---

(१) राजा। उपगम्य। उभाभ्यामपि वासवानुयोज्यः···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मारीचः । वत्स ! चिरं जीवन् पृथिवीं पालय (१) । (ढ)

अदितिः । अप्पदिरधो होहि (२) । (ण)

शकुन्तला पुत्रसहिता पादयोः पतति (३) । (त)

मारीचः । वत्से !

आखण्डलसमो भर्त्ता जयन्तप्रतिमः सुतः ।

आशीरन्या न ते योज्या पौलोमीमङ्गला भव (४) ॥२८॥

---

(ण) अप्रतिरथो भव ।

---

(ड) राजेति । वासवस्य इन्द्रस्य नियोज्यो दासः । एतेनात्मनो नितान्तापकर्षो व्यज्यते । वां युवाभ्याम् ।

"नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः" इत्यमरः ।

(ढ) मारीच इति । चिरमित्यस्योभयत्राप्यन्वयः । तेन चिरं जीवन् चिरमेव पृथिवीं पालयेत्यर्थः ।

(ण) अदितिरिति । अप्रतिरथः प्रतिपक्षरहित इत्यर्थः ।

(त) शकु इति । पादयोः अदितिकश्यपयोः प्रत्येकं चरणयोरिति तात्पर्यम् । पादादीनां द्वित्वविशिष्टा जातिरिति चतुर्षु पादेष्वर्थेष्वपि द्विवचनम् ।

आखण्डलेति । भर्त्ता तव पतिर्दुष्मन्तः, आखण्डलसमः प्रभावे सम्पत्तौ च इन्द्रतुल्यः,

---

(ড) রাজা । ( প্রণিপাত করিয়া ) ইন্দ্রের দাস দুষ্মন্ত, আপনাদের দুই জনকেই প্রণাম করিতেছে ।

(ঢ) কশ্যপ । বৎস ! চিরজীবী হইয়া পৃথিবী পালন কর ।

(ণ) অদিতি । বিপক্ষবিহীন হও ।

(ত) শকুন্তলা । ( পুত্রের সহিত উঁহাদের চরণে পতিত হইল । )

---

(१)…चिरं जीव…। (२)…वच्छ ! अप्पड़िवद्दो होसु ।

(३) शकुन्तला । दारअसहिआ वो पादवन्दणं करेमि ।

(४)…न ते योग्या पौलोमीसदृशी…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

অদিতিঃ। জাদে! ভত্তুণো বহুমদা হোহি, অঅঞ্চ দীহাউ উহঅপক্‌খং অলঙ্করেদু। এধ উপবিসধ (১)। (থ)

(থ) জাতে! ভর্ত্তুর্বহুমতা ভব। অয়ঞ্চ দীর্ঘায়ুঃ উভয়পক্ষমলঙ্করোতু। এতম্ উপবিশতম্।

তথা সুতঃ অয়ং পুত্রঃ, জয়ন্তো জয়ন্তনামা ইন্দ্রাত্মজঃ প্রতিমা উপমা যস্য সঃ। অতএব তে তব সম্বন্ধে, অন্যা ক্রিয়মাণেতরা, আশীঃ আশংসা, ন যোজ্যা অস্মাভির্ন প্রবর্ত্তনীয়া, ভর্ত্তৃপুত্র বিত্তানাং প্রাণেশাদ্যাতিরিক্ততয়া জাতত্বাদিত্যাশয়ঃ। কেবলং পৌলোম্যাঃ শচীদেব্যা মঙ্গলমিব মঙ্গলম্ অর্থে ধন্যভর্ত্তৃপ্রিয়বাদিরূপং যস্যাঃ সা তাদৃশী ভব।

অত্র তৃতীয়চরণার্থং প্রতি পূর্বার্দ্ধগতবাক্যার্থদ্বয়ং হেতুরিতি বাক্যার্থহেতুকং কাব্য-লিঙ্গম্, তথা পূর্বার্দ্ধে দ্বে আর্থোপমে চতুর্থচরণে চ লুপ্তোপমা, ইত্যেতেষাং গুণপ্রধানভাবে-নাঙ্গাঙ্গিভাবাৎ সঙ্করঃ। আশংসা নাম নাট্যালঙ্কারস্য। যথা দর্পণে—

"আশংসনং স্যাদাশংসা" ॥২৮॥

(থ) অদিতিরিতি। বহুমতা অত্যাদৃতা। অয়ঞ্চ দীর্ঘায়ুস্তে পুত্র ইত্যর্থঃ। উভয়পক্ষং মাতৃপক্ষং পিতৃপক্ষঞ্চ, অলঙ্করোতু সদাচারাদিনেত্যাশয়ঃ। এতম্ আগচ্ছতম্, উপবিশতং মাতঃপুত্রৌ যুবামিতি শেষঃ।

কশ্যপ। বৎসে! ইন্দ্রের তুল্য তোমার স্বামী এবং জয়ন্তের তুল্য তোমার পুত্র; অতএব তোমাকে অন্য আশীর্ব্বাদ করিবার নাই; কেবল ইন্দ্রাণীর ন্যায় মঙ্গলবতী হও ॥২৮॥

(থ) অদিতি। বৎসে! ভর্ত্তার বিশেষ আদরের পাত্র হও; আর এই দীর্ঘায়ু বালকটী, মাতৃ-পিতৃ-উভয় পক্ষকে অলঙ্কৃত করুক। আইস উপবেশন কর।

(১) ভত্তুণো অহিমদা হোসু। অবস্সং দীহাউ বচ্ছণো উহঅকুলণন্দণো হোউ। উববিসহ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वे प्रजापतिमभित उपविशन्ति । (द)

मारीचः । एकैकं निर्द्दिशन् । (ध)

दिष्ट्या शकुन्तला साध्वी, सदपत्यमिदं, भवान् ।
श्रद्धा, वित्तं, विधिश्चेति त्रितयं तत् समागतम् ॥२८॥

(द) सर्वं इति । प्रजापतिं कश्यपम्, अभित उभयपार्श्वयोः दक्षिणे दुष्मन्तो मातलिश्च, वामे च पुत्रसहिता शकुन्तलेत्यर्थः ।

प्रजापतिमिति "तसीभयाभिपरिसर्वैः" इति द्वितीया ।

(ध) मारीच इति । निर्द्दिशन् अङ्गुल्येति शेषः ।

दिष्ट्येति । दिष्ट्या भाग्येन, साध्वी सच्चरित्रा शकुन्तला, इदं सत्पुत्रत्वादुत्तमम्, अपत्यं सन्तानः, भवान् त्वञ्च, एकत्र विद्यत इति शेषः । तत् तस्माद्धेतोः, श्रद्धा शास्त्रार्थे दृढ़विश्वासः, वित्तं यज्ञादिकार्य्यसम्पादनोपयोगि धनम्, विधिश्च तादृशकार्य्यस्य परिपाटीविधायकं शास्त्रञ्च, इति त्रितयम् एतत् त्रयम्, समागतं सम्मिलितम् ।

अत्र वस्तुत एव श्रद्धावित्तविधीनां तत्र तदानीं समागमो नासीदिति वस्तुसम्बन्धोऽसम्भवन् श्रद्धावित्तविधीनां समागमे यज्ञादिकार्य्यमिव स्त्रीपुत्रपतीनां युष्माकं समागमे एतादृशकार्यमतीव सुसम्पन्नमाह्लादकरञ्च भविष्यतीति बिम्बानुबिम्बभावं बोधयतीति असम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः, शकुन्तलां प्रति श्रद्धायाः, अपत्यं प्रति वित्तस्य, दुष्मन्तं प्रति च विधेय, उद्देशक्रमेणानुद्देशात् यथासंख्यमलङ्कारश्च, अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः । वामनादिभिरालङ्कारिकैरस्तिभवतिविद्यत इत्यादिक्रियाणामनुपादानेऽपि सामर्थ्यादवगन्या न्यूनपदत्वदोषानङ्गीकारान्न न्यूनपदत्वदोषः ।

"प्रत्ययो धर्म्मकार्य्येषु तथा श्रद्धेत्युदाहृता" इति प्रायश्चित्ततत्त्वे देवलः ॥२८॥

---

(द) ( সকলে কশ্যপের দুই পার্শ্বে উপবেশন করিলেন । )

(ধ) কশ্যপ । ( অঙ্গুলীদ্বারা এক একটীকে নির্দ্দেশ করতঃ )

সাধ্বী শকুন্তলা, এই উত্তম সন্তান এবং তুমি, এই তিন জনই আজ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। भगवन्! प्रागभिप्रेतसिद्धिः, पश्चाद्दर्शनम्; इत्यपूर्वः खलु वोऽनुग्रहः। कुतः—(१) (न)

उदेति पूर्वं कुसुमं, ततः फलं;
घनोदयः प्राक्, तदनन्तरं पयः।
निमित्तनैमित्तकयोरयं क्रमः,
तव प्रसादस्य पुरस्तु सम्पदः ॥३०॥

---

(न) राजेति। अभिप्रेतसिद्धिः दर्शनार्थिनो मङ्गलं जायत इति शेषः, पश्चात् दर्शनं भवादृशानां साक्षात्कारः, इति हेतोः वो युष्माकम्, अनुग्रहः अपूर्वः खलु न तत्प्रकार एव, आश्चर्य्यभूत एव वा। कथमेतदित्याह कुत इति।

अत्र अभिप्रेतसिद्धिरित्यनेनात्मनः शकुन्तलाविरहदुःखापगमसूचनात् समयो नाम निर्वहणसन्ध्यङ्गम्। तथा च दर्पणे—

"समयो दुःखनिर्य्याणम्।"

"अभिप्रेतार्थसिद्धिर्मङ्गलम्" इति तिथितत्त्वे स्मार्त्तः।

उदेतीति। पूर्वं फलोत्पत्तेः प्राक्, कुसुमं फलकारणीभूतं पुष्पम्, उदेति तरुलतयोरुत्पद्यते, ततस्तदनन्तरम्, फलं कुसुमकार्य्यभूतं चूतादिफलम्, उदेति; तथा प्राक् पयसः पूर्वम्, घनोदयः पयःकारणीभूतमेघाविर्भावः, भवतीति शेषः, तदनन्तरं पयो घनोदयकार्य्यभूतं वृष्टिजलम्, भवति। अतएव निमित्तं कारणञ्च नैमित्तिकं

---

ভাগ্যবশতঃ একত্র মিলিত হইয়াছে; অতএব শ্রদ্ধা, ধন এবং শাস্ত্র এই তিনই মিলিত হইয়াছে ॥২৯॥

(ন) রাজা। ভগবন্! পূর্ব্বে অভীষ্টসিদ্ধি, পরে সাক্ষাৎকার; অতএব আপনাদের অনুগ্রহ নূতন রকমের। কেন না—

---

(१)···सतोऽपूर्वः···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मातलिः। आयुष्मन्! एवं प्रसीदन्ति विश्वगुरवः (१)। (प)

राजा। भगवन्! इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन्नपराद्धोऽस्मि अत्रभवतो युष्मत्गोत्रस्य कण्वस्य,

---

कार्य्यञ्च तयोः, अयं पूर्वोक्तरूपः, क्रमः पौर्वापर्य्यम्, नियत इति शेषः। तु किन्तु, तव प्रसादस्य सम्पत्कारणीभूतस्य अनुग्रहस्य, पुरः पूर्वमेव सम्पदः कार्य्यभूता मङ्गलादिसम्पत्तयः, उत्पद्यन्ते तत्तदर्थिन इति शेषः। अतएव सर्वविलक्षणत्वादपूर्व एव युष्माकमनुग्रहो मय्येवासौ प्रत्यक्षश्चेति भावः।

अत्र तृतीयचरणार्थं प्रति पूर्वार्द्धगतवाक्यार्थानां हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम्, चतुर्थचरणे कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययरूपा अतिशयोक्तिश्च, अनयोः परस्परनिरपेक्षतया संसृष्टिः।

अत्र प्रियोक्तिर्नाम नाट्यलक्षणञ्च। तथा च दर्पणे—

"स्यात् प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम्॥"

वंशस्थविलं वृत्तम्॥३०॥

(प) मातलिरिति। विश्वगुरवो जगद्धितकाः, एवम् इत्थम्प्रकारमेव, प्रसीदन्ति सानुग्रहा भवन्ति; अतएव नात्र किञ्चिदपूर्वत्वमिति भावः।

---

আগে ফুল ফুটে, পরে ফল জন্মে এবং আগে মেঘ দেখা দেয়, তা'র পর জল হয়। সুতরাং কারণ ও কার্য্যের এই ক্রম; কিন্তু আপনার অনুগ্রহের আগেই সম্পদ জন্মে! ॥৩০॥

(প) মাতলি। আয়ুষ্মন্! যাঁহারা জগতের গুরু, তাঁহারা এই ভাবেই প্রসন্ন হইয়া থাকেন।

---

(१) मातलिः। एवं विधातारः प्रसीदन्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

পশ্চাদেনামঙ্গুরীয়কদর্শনারূঢ়স্মৃতিঃ ঊঢ়পূর্বামবগতোঽহম্, তচ্চিত্রমিব মে প্রতিভাতি (১)। (ফ)

---

(ফ) রাজেতি। বো যুষ্মাকম্, আজ্ঞাকরীং কিঙ্করীম্, ইমাং শকুন্তলাম্, উপযম্য পরিণীয়, কস্যচিৎ কালস্য অতিক্রমানন্তরমিত্যর্থঃ, বন্ধুভির্ভবৎস্থানীয়ৈঃ শার্ঙ্গরবাদিভিঃ, আনীতামিমাং শকুন্তলামিতি সম্বন্ধঃ, স্মৃতিশৈথিল্যাৎ স্মৃতিভ্রংশাদ্ধেতোঃ, প্রত্যাদিশন্ নিরাকুর্বন্, অত্রভবতো মুনিত্বেন পূজনীয়স্য, যূয়মিব গোত্রাণি গৌরবেণ বহুবচনাৎ ত্বমেব আদিপুরুষো যস্য তস্য, কণ্বস্য সমীপে, অপরাদ্ধঃ কৃতাপরাধঃ অস্মি, তৎকন্যায়া এব প্রত্যাদেশাদিত্যাশয়ঃ, অঙ্গুরীয়কদর্শনেন আরূঢ়া মনস্যুপস্থিতা স্মৃতির্যস্য স তাদৃশোঽহম্, ঊঢ়পূর্বাং পূর্বপরিণীতাম্ ইমাং শকুন্তলামিতি সম্বন্ধঃ, তৎ স্মৃতিশৈথিল্যং বিস্মরণমিতি যাবৎ চিত্রমিব মে প্রতিভাতি আশ্চর্য্যমিব মে জ্ঞানবিষয়ীভবতি, তৎকারণাভাবাদিতি ভাবঃ।

অতএবাত্র উপগূহনং নাম নির্বহণসন্ধ্যঙ্গম্। যথা দর্পণে—

"তদ্বিদুপগূহনম্। যৎ স্যাদদ্ভুতসম্প্রাপ্তিঃ।"

"বংশপরম্পরাপ্রসিদ্ধমাদিপুরুষব্রাহ্মণরূপং গোত্রম্" ইত্যুদ্বাহতত্ত্বে স্মার্ত্তঃ।

---

(ফ) রাজা। ভগবন্! আমি আপনাদের আজ্ঞাকারিণী এই শকুন্তলাকে গান্ধর্ববিধানে বিবাহ করিয়াছিলাম; তাহার পর কিছুকাল অতীত হইলে, ইহার বন্ধুগণ ইহাকে নিয়া গিয়াছিলেন, তখন আমি বিস্মৃতিবশতঃ ইহাকে প্রত্যাখ্যান করিয়া, আপনার বংশসম্ভূত পূজনীয় কণ্বের নিকট অপরাধী হইয়াছি; তাহার পর অঙ্গুরীদর্শনে আমার স্মরণ হইয়াছিল যে, আমি ইহাকে পূর্বে বিবাহ করিয়াছিলাম; সুতরাং আমার সেই বিস্মরণ বিচিত্র বলিয়া বোধ হইতেছে।

---

(১)…পশ্চাদঙ্গুরীয়কদর্শনাৎ ঊঢ়পূর্বাং তদ্দুহিতরমবগতোঽহম্।…যুষ্মৎসগোত্রস্য…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा गजो साधु समक्षरूपे (१)
कस्मिन्नपि क्रामति संशयः स्यात् ।
पदानि दृष्ट्वाथ भवेत् प्रतीतिः (२)
तथाविधो मे मनसो विकारः ॥३१॥

मारीचः । वत्स ! अलमात्मापराधशङ्कया, सम्मोहोऽपि त्वय्युपपन्न एव । श्रूयताम्—(३) (व)

---

उपमाविन्यासेन तत् स्मृतिशैथिल्यस्य चित्रत्वं प्रतिपादयति यथेति । साधु सम्यक् समक्षं प्रत्यक्षीभूतं रूपमाकृतिर्यस्य तस्मिन् तथोक्ते, कस्मिन्नपि गजे हस्तिनि, क्रामति अतिक्रम्य गच्छति सति, यथा संशयः स्यात् 'अत्र गज आगतो न वा' इति सन्देहो भवेत्, अथ अनन्तरम्, पदानि तस्य गजस्य पदचिह्नानि दृष्ट्वा, प्रतीतिः 'इतो गज एव गतः' इति निर्णयो भवेत् ; तथाविधः तत्प्रकारः, मे मम मनसो विकारः मनोवृत्तेरन्यथात्वम्, आसीदिति शेषः । तथा च सम्यक् प्रत्यक्षभूतायां शकुन्तलायाम् 'इयं किं परिणीतपूर्वा' इति सन्देह आसीत्, परञ्च अङ्गुरीयात्मकचिह्नदर्शनेन 'परिणीतैव सा' इति निर्णयो जात इति भावः ।

अत्र श्रौतोपमालङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥३१॥

(व) मारीच इति । आत्मापराधस्य शङ्कया सम्भावनया, सम्मोहः स्मृतिभ्रंशः, उपपन्न एव सम्भवपर एव ।

---

কোনও হাতী ঠিক্ প্রত্যক্ষভাবে অতিক্রম করিয়া চলিয়া গেলে যেমন সংশয় হয় যে, 'হাতী গিয়াছে কি না' তাহার পর সেই হাতীর পায়ের চিহ্ন দেখিয়া অনুমানদ্বারা ঠিক্ হয় যে, 'নিশ্চয়ই হাতী গিয়াছে' আমার মনের বিকারও, সেইরূপই হইয়াছে ।৩১॥

---

(१) यथा गजो नेति समक्षरूपे । (२) दृष्ट्वा तु ।

(३)…त्वय्युपपन्नः । श्रूयताम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। अवहितोऽस्मि। (भ)

मारीचः। यदैवाप्सरस्तीर्थावतरणात् प्रत्याख्यानविक्लवां शकुन्तलामादाय दाक्षायणीमुपगता मेनका, तदैव ध्यानादवगतवृत्तान्तोऽस्मि, दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा; स चाङ्गुरीयदर्शनावसानः शाप इति (१)। (म)

---

(भ) राजेति। अवहितोऽस्मि भवद्वाक्यमाकर्णयितुं कृतमनोयोगोऽस्मि।

(म) मारीच इति। अवतरत्यनेनेति अवतरणं घट्टः, अप्सरस्तीर्थस्य तदाख्यस्यापि प्रसिद्धस्य शचीतीर्थस्य अवतरणात् घट्टात्। उपगतेति क्रियापेक्षयैव इदमपादानत्वम्, न पुनरादायेति क्रियापेक्षया तथात्वे "देव! पराङ्मुखेषु कण्वशिष्येषु, सा निन्दन्ती स्वानि भाग्यानि बाला" इत्यादिपञ्चमाङ्कोक्तेन सह विरोधः स्यात्, तेन च राजधानीत एव शकुन्तलाग्रहणस्य प्रत्यायितत्वात्। ततश्च मेनका राजधानीतः शकुन्तलामादाय तदङ्गुरीयकान्वेषणाय अप्सरस्तीर्थे अवतीर्य, तत्र च तदप्राप्य पुनस्ततो दाक्षायणीमुपगतेति मन्तव्यम्। प्रत्याख्यानेन विक्लवां शोकाकुलाम्। दाक्षायणीमदितिम्, उपगता शकुन्तलाया रक्षणार्थमिति भावः। इयं तपस्विनी शोच्या शकुन्तला, सहधर्मचारिणी पत्नी। अङ्गुरीयकदर्शन एवावसानं समाप्तिर्यस्य स तथोक्तः। इति श्रूयतामिति पूर्वेणान्वयः। अतएव मुनिशापादेव जातत्वात् त्वयि सम्मोह उपपन्न एवेति भावः।

---

(ব) কশ্যপ। বৎস! নিজের অপরাধ আশঙ্কা করিও না। তোমার বিস্মৃতি সঙ্গতই হইয়াছে। শোন—

(ভ) রাজা। মনোযোগী হইলাম।

(ম) কশ্যপ। যখনই মেনকা, শচীতীর্থ হইতে প্রত্যাখ্যানবিহ্বলা শকুন্তলাকে নিয়া অদিতির নিকট আসিয়াছিল, তখনই আমি ধ্যান

---

(१) प्रत्यक्षवैक्लव्यम्···। ध्यानादवगतोऽस्मि···सहधर्मचारिणी···प्रत्यादिष्टा नान्यथेति। स चायमङ्गुरीयकदर्शनावसानः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । सोच्छ्वासमात्मगतम् । एष वचनीयान्मुक्तोऽस्मि (१) । (य)

शकु । स्वगतम् । दिट्ठिआ अआरणपच्चादेसी ण अज्जउत्तो । ण उण सत्तं अत्ताणं सुमरेमि । अधवा ण सुदो सुण्णहिअआए मए अअं सावो, जदो सहीहिं अच्चाअरेण सन्दिट्ठह्मि 'सो राआ जइ तुमं ण सुमरेदि, तदा एदं अङ्गुलीअअं दंसेसि' त्ति (२) । (र)

(र) दिष्ट्या अकारणप्रत्यादेशी नार्य्यपुत्रः । न पुनः शप्तमात्मानं स्मरामि । अथवा न श्रुतः शून्यहृदयया मया अयं शापः, यतः सखीभ्यामत्यादरेण सन्दिष्टास्मि, 'स राजा यदि त्वां न स्मरति, तदा इदमङ्गुरीयकं दर्शयसि' इति ।

---

(य) राजेति । सोच्छ्वासम् अपराधजनितात्मग्लानिनिवृत्तिसूचकेन उद्गतश्वासेन सहितम् । वचनीयात् 'अकारणं शकुन्तला प्रत्याख्याता' इति लोकापवादात्, मुक्तोऽस्मि तच्छापवृत्तान्तस्यापि लोके प्रचारसम्भवादित्याशयः ।

(र) शकु इति । दिष्ट्या भाग्येन, अकारणप्रत्यादेशी विना हेतुं मम प्रत्याख्यानकारी न जातः, दुर्वाससः शापस्यैव कारणस्य सत्त्वादित्याशयः । शप्तं तच्छापविषयीभूतम् । शून्यहृदया चिन्तान्तरेण अन्यमनस्कया । सखीभ्याम् अनसूयाप्रियंवदाभ्याम्, सन्दिष्टास्मि भर्त्तृगृहे गमनवेलायामित्यर्थः ।

---

করিয়া সমস্ত বৃত্তান্ত জানিতে পারিয়াছি যে, দুর্ব্বাসার শাপে তুমি স্বামী হইয়াও এই দুঃখিনী শকুন্তলাকে প্রত্যাখ্যান করিয়াছ; অঙ্গুরীদর্শনই সেই শাপের অন্ত ।

(য) রাজা । ( উচ্ছ্বাসের সহিত স্বগত ) এই লোকাপবাদ হইতে মুক্ত হইলাম ।

---

(१) सोच्छ्वासम् । (२)···ण उण सत्तं···। अहवा पत्ता मए सहि सावो विरहसुण्णहिअआए ण विदिदो, जदो सहीहिं सन्दिट्ठह्मि भत्तुणो अङ्गुलीअअं दंसइदव्वं त्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

মারীচঃ । শকুন্তলাং বিলোক্য । বৎসে ! বিদিতার্থাসি । তদিদানীং সহধর্ম্মচারিণং প্রতি ন ত্বয়া মন্যুঃ করণীয়ঃ । পশ্য—(১) (ল)

শাপাদসি প্রতিহতা স্মৃতিলোপরুক্ষে (২)
ভর্ত্তর্য্যপেততমসি প্রভুতা তবৈব ।
ছায়া ন মূর্চ্ছতি মলোপহতপ্রসাদে
শুদ্ধে তু দর্পণতলে সুলভাবকাশা ॥৩২॥

অত্র নির্ণয়ো নাম নির্বহণসন্ধ্যঙ্গম্—"নির্ণয়ঃ পুনঃ । অনুভূতার্থকথনম্" ইতি দর্পণলক্ষণাৎ ।

(ল) মারীচ ইতি । বিদিতার্থাসি অবগতসর্ববৃত্তান্তাসি । তত্তস্মাৎ, সহধর্ম্মচারিণং পতিম্, মন্যুঃ আত্মপ্রত্যাখ্যাননিবন্ধনঃ ক্রোধঃ, ন করণীয়ঃ, তথাত্বে সহধর্ম্মচরণস্যৈব ব্যাঘাত ইত্যাশয়ঃ ।

"মন্যুর্দৈন্যে ক্রতৌ ক্রুধি" ইত্যমরঃ ।

(র) শকুন্তলা । (স্বগত) ভাগ্যবশতঃ আর্য্যপুত্র বিনা কারণে প্রত্যাখ্যান করেন নাই । আমি কিন্তু নিজেকে অভিশপ্ত বলিয়া স্মরণ করিতে পারিতেছি না । অথবা আমি শূন্যহৃদয়া ছিলাম বলিয়া এই শাপ শুনিতে পাই নাই ; যে হেতু সখীরা বিশেষ আদর করিয়া বলিয়াছিল যে, "যদি সেই রাজা তোমাকে স্মরণ না করেন, তবে এই আংটী দেখাইবে" ।

(ল) কশ্যপ । (শকুন্তলার প্রতি দৃষ্টিপাত করিয়া) বৎসে ! সমস্ত বৃত্তান্তই জানিতে পারিলে ; সুতরাং এখন স্বামীর প্রতি তুমি ক্রোধ করিও না । দেখ—

(১)···মন্যুঃ কার্য্যঃ···। (২)···স্মৃতিরোধরুক্ষে···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। यथाह भगवान्। (ब)

मारीचः। वत्स! कच्चिदभिनन्दितस्त्वया अस्माभिर्विधिवदनुष्ठितजातकर्म्मादिक्रियः पुत्र एष शाकुन्तलेयः (१)। (श)

शापादिति। भर्त्तरि पत्यौ दुष्मन्ते, शापात् दुर्वाससोऽभिसम्पातात् स्मृतिलोपेन विस्मरणेन रूक्षे निष्ठुरे सति, प्रतिहता प्रत्याख्याता असि, अपेततमसि इदानीं विगतविस्मरणे, भर्त्तरि तस्मिन्नेव पत्यौ दुष्मन्ते, तवैव प्रभुता पत्नीत्वमाधिपत्यम्, वर्त्तत इति शेषः। तथा च छाया प्रतिबिम्बम्, मलेन धूल्यादिना उपहतो नाशितः प्रसादो निर्म्मलता यस्य तस्मिन् तादृशे, दर्पणतले मुकुरोपरि न मूर्च्छति न पतति; तु किन्तु, शुद्धे निर्म्मले, दर्पणतले तत्रैव मुकुरोपरि, सुलभः अवकाशः प्रवेशो यस्याः सा तथाविधा, भवत्येवेति शेषः।

अत्र छायाशकुन्तलयोः साम्यस्य प्रणिधानेन गम्यत्वात् दृष्टान्तोऽलङ्कारः।

वसन्ततिलका वृत्तम् ॥३२॥

(ब) राजेति। भगवान् माहात्म्यवान् मारीचः, यथाह सत्यं ब्रवीति। अतएव एतदुक्त्यनुरूपमेवाचरणीयमिति भावः।

(श) मारीच इति। अस्माभिः विधिवत् यथाशास्त्रम् अनुष्ठिताः जातकर्म्मादयः क्रिया यस्य सः, शकुन्तलाया अपत्यमिति शाकुन्तलेयः, एष पुत्रः, त्वया अभिनन्दितः विशेषेणादृतः कच्चित् इति वेदितुमिच्छामीत्यर्थः।

---

স্বামী, দুর্ব্বাসার শাপে বিস্মৃতিবশতঃ নিষ্ঠুর হইলে তুমি প্রত্যাখ্যাত হইয়াছিলে; এখন সে বিস্মৃতি গিয়াছে; সুতরাং সে স্বামীতে তোমারই প্রভুত্ব হইয়াছে। ধূলিপ্রভৃতি পড়িয়া নির্ম্মলতা নষ্ট করিলে সে দর্পণে প্রতিবিম্ব পড়ে না; কিন্তু নির্ম্মল দর্পণে অনায়াসেই প্রতিবিম্ব পড়িয়া থাকে ॥৩২॥

(ব) রাজা। ভগবান্ যথার্থই বলিয়াছেন।

---

(१)···विधिवदस्माभिरनुष्ठितजातकर्म्मा पुत्रः···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। भगवन्! अत्र खलु मे वंशप्रतिष्ठा। इति बालकं हस्तेन गृह्णाति (१)। (ष)

मारीचः। भाविनं चक्रवर्त्तिनमेनमवगच्छतु भवान्। पश्यतु—(१) (स)

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः।
इहायं सत्त्वानां प्रसभदमनात् सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात्॥२३॥

---

"कच्चित् कामप्रवेदने" इत्यमरः। जातकर्म्म संस्कारविशेषः "प्रसवे जातकर्म्म च" इति याज्ञवल्क्यवचनात्।

(ष) राजेति। अत्र खलु पुत्रान्तराभावात् अस्मिन्नेव पुत्रे, वंशस्य प्रतिष्ठा स्थितिः। अतएव अवश्यमेवाभिनन्दित इत्याशयः।

(स) मारीच इति। एनं पुत्रम्, भाविनं भविष्यन्तम्, चक्रवर्त्तिनं सार्वभौमं समग्रपृथिवीश्वरमित्यर्थः। कथं चक्रवर्त्ती भावीत्याह पश्यत्विति।

"चक्रवर्त्ती सार्वभौमः" इत्यमरः।

---

(श) কশ্যপ। বৎস! আমি যথাবিধানে এই বালকের জাতকর্ম্মাদি কার্য্য করিয়াছি, সুতরাং তুমি এই শকুন্তলার পুত্রটীকে বিশেষরূপে আদর করিয়াছ ত ?।

(ষ) রাজা। ভগবন্! এই বালকের উপরেই আমার বংশরক্ষার ভার রহিয়াছে। (এই বলিয়া হস্তদ্বারা বালকটীকে ধরিলেন।)

(স) কশ্যপ। তুমি ইহাকে ভাবী সম্রাট্ বলিয়া জানিবে। দেখ—

---

(१)⋯ बालकमित्यादि पुस्तकान्तरे नास्ति।

(२)⋯तथा भाविनम्⋯। पश्य।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । भगवत्कृतसंस्कारेऽस्मिन् सर्वमाशंसे (१) । (ह)

रथेनेति । अयं तव पुत्रः, अप्रतिरथः प्रतिद्वन्द्विरहितः सन्, अनुद्घातेन आकाशे चलनात् प्रतिघाताभावेन स्तिमिता स्थिरा उद्वङ्घनरहितेति यावत् गतिर्गमनं यस्य तेन तादृशेन, रथेन रथाकारेण विमानेन, घोटकचालितेन सामान्यरथेन जलधितरणासम्भवात्, तीर्णा अतिक्रान्ता जलधयः समुद्रा येन स तादृशः सन्, पुरा आगामिकाले, सप्त द्वीपा यस्यां तां सप्तद्वीपां समग्रामेवेति तात्पर्य्यम्, वसुधां पृथिवीम्, जयति जेष्यतीत्यर्थः । इह आश्रमे, सत्त्वानां सिंहादिजन्तूनाम्, प्रसभं बलेन दमनात् खर्व्वकरणात् हेतोः, सर्वदमन इत्युच्यत इति शेषः, पुनः लोकस्य भरणात् राज्यं प्राप्य जगतो रक्षणात् हेतोः, भरत इति आख्यां नाम, यास्यति प्राप्स्यति । अतएव अयमसाधारणो बालकः अवश्यमेवाभिनन्दनीय इत्यभिप्रायः ।

"निकटागामिके पुरा" इति "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति चामरः ।

पुराशब्दयोगे जयतीत्यत्र "यावत्पुरानिपातयोर्लट्" इति भविष्यत्काले वर्त्तमाना । सर्वान् दमयतीति सर्वदमनः नन्द्यादित्वात् कर्त्तरि युप्रत्ययः । भरतीति भरतः पृषोदरादित्वात् निपातः ।

रथेन तीर्णजलधिरिति लिखता महाकविना कालिदासेनापि तत्काले भारते विमानव्यवहार आसीदिति वाढमङ्गीकृतमिति प्रतीयते ।

शिखरिणी वृत्तम् ॥३३॥

(ह) राजेति । भगवता मारीचेन कृताः संस्कारा जातकर्म्मादिसंस्कारकर्म्माणि यस्य तस्मिन्, अस्मिन् मम पुत्रे, सर्वं जलधितरणादिकम्, आशंसे सम्भावयामि ; भवत्कृतसंस्कारतयैव महातेजस्वित्वसम्भवादिति भावः । तथा चाङ्गिराः—

তোমার এই পুত্র বিপক্ষবিহীন হইয়া, প্রতিঘাত না লাগায় স্থিরগতি রথে সমুদ্র পার হইয়া, সপ্তদ্বীপা পৃথিবীকে জয় করিবে ; এই আশ্রমে বলপূর্ব্বক সকল জন্তুকে দমন করায় ইহাকে 'সর্ব্বদমন' বলা হয়, ভবিষ্যতে জগতের ভরণ করায় পুনরায় 'ভরত' এই নাম ধারণ করিবে ॥৩৩॥

(१) राजा । भगवता कृतसंस्कारे सर्वमस्मिन् वयमाशास्महे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अदितिः। इमाए दुहिदिमणोरहसम्पत्तीए कण्णो दाव सुदवित्थारो करीअदु, दुहिदिवच्छला मेणआ उण इध मं परिअरन्ती सण्णिहिदा ज्जेव (१)। (च)

शकु। आत्मगतम्। मणोगदं मे वाहरिदं भअवदीए (२)। (क)

(च) अनया दुहितृमनोरथसम्पत्त्या कण्वस्तावत् श्रुतविस्तारः क्रियताम्, दुहितृवत्सला मेनका पुनरिह मां परिचरन्ती सन्निहितैव।

(क) मनोगतं मे व्याहृतं भगवत्या।

---

"चित्रं कर्म्म यथानेकै रङ्गैरुन्मील्यते शनैः।
ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः॥"

(च) अदितिरिति। दुहितुः सुतायाः शकुन्तलायाः मनोरथसम्पत्त्या पतिपुत्रसमागमात् अभिलाषपूर्णतया, श्रुतो विस्तारो विस्तृतवृत्तान्तो येन स तादृशः। परिचरन्ती शुश्रूषमाणा। अतो मेनकान्तिके वार्त्ताप्रेषणस्य नास्ति प्रयोजनमिति भावः।

(क) शकु इति। भगवत्या अदित्या, व्याहृतमुक्तम्। तथा च तातकण्वान्तिके वार्त्ताप्रेषणं ममाभिप्रेतमासीदिति भावः।

---

(হ) রাজা। আপনি জাতকর্ম্মাদি সংস্কার করিয়াছেন বলিয়া এ বালকের উপরে সমস্তেরই আশা করি।

(ক্ষ) অদিতি। কন্যার এই অভিলাষ পূর্ণ হওয়ায়, ইহার বিস্তৃত সংবাদ কণ্বকে দেওয়া হউক ; কন্যাবৎসলা মেনকা ত আমার পরিচর্য্যা করতঃ এইখানেই উপস্থিত আছে।

(ক) শকুন্তলা। ( স্বগত ) ভগবতী অদিতিদেবী আমার মনোগত কথাই বলিয়াছেন।

---

(१)···कण्णोवि···इह एव्व उवचरन्ती चिट्ठइ।
(२)···भणिदं भअवदीए।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मारीचः। तपःप्रभावात् सर्वमिदं प्रत्यक्षं तत्रभवतः कण्वस्य (१)। (ख)

राजा। अतः खलु ममानतिक्रुद्धो मुनिः। (ग)

मारीचः। तथाप्यसौ दुहितुः सपुत्रायाः पत्या परिग्रह-प्रियमस्माभिः श्रावयितव्यः। कः कोऽत्र भोः! (२)। (घ)

प्रविश्य शिष्यः। भगवन्! अयमस्मि। (ङ)

(ख) मारीच इति। तत्रभवतः अपत्यत्वेऽपि महातपस्वितया माननीयस्य।

(ग) राजेति। अतः खलु आयत्तसर्ववृत्तान्तस्य प्रत्यक्षत्वादेव, मुनिः कण्वः, मम सम्बन्धे, अनतिक्रुद्धः, अभिज्ञानाकरणात् फलादर्शनेन च तदनुमानादिति भावः। पतिशब्दस्वरसेन च कन्याकष्टदर्शनेन किञ्चित् क्रुद्ध इत्यपि भावः।

(घ) मारीच इति। असौ कण्वः। परिग्रहो ग्रहणमेव प्रियः प्रीतिकरो विषय-स्तम्, "दुनन्ते कर्त्तृ "कर्म्मं व" इत्यप्रधाने कर्म्मणि प्रत्ययः।

(ङ) प्रविश्येति। अयमस्मि आगत इति शेषः।

(খ) কশ্যপ। তপস্তার প্রভাবে সে কণ্বের এ সমস্তই প্রত্যক্ষ হইতেছে।

(গ) রাজা। এই জন্যই, মহর্ষি কণ্ব আমার উপরে বিশেষ ক্রুদ্ধ হন নাই।

(ঘ) কশ্যপ। তথাপি, পুত্রের সহিত কন্যাকে তাহার পতি যে গ্রহণ করিয়াছেন, এই প্রীতিকর সংবাদ উঁহাকে আমাদের শুনান উচিত। কে, এখানে কে আছ হে?।

(ঙ) শিষ্য। (প্রবেশ করিয়া) ভগবন্! এই আমি আছি।

(१) क्वचित् कण्वस्येति नास्ति।

(२) असौ प्रियमस्माभिरापृष्टव्यः...।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मारीचः । वत्स ! गालव ! मद्वचनादिदानीमेव वैहायसा गत्वा तत्रभवते कण्वाय प्रियमावेदय यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्मन्तेन परिगृहीतेति । (च)

शिष्यः । यथाज्ञापयन्ति गुरवः । इति निष्क्रान्तः (१) । (छ)

मारीचः । राजानं प्रति । वत्स ! त्वमपि सापत्यदारः सख्युराखण्डलस्य रथमारुह्य स्वां राजधानीं प्रतिष्ठस्व (२) । (ज)

(च) मारीच इति । विहायस इयमिति वैहायसी तया आकाशवर्त्मना इत्यर्थः । किन्तत् प्रियमित्याह यथेति । तस्याः शकुन्तलाया एव शापनिवृत्तौ, स्मृतिमता शकुन्तलापरिचयस्मरणवता ।

(छ) शिष्य इति । गुरव इति गौरवाद्बहुवचनम् ।

(ज) मारीच इति । अपत्यदारैः पुत्रस्त्रीभ्यां सहेति सापत्यदारः, आखण्डलस्य इन्द्रस्य । स्वां स्वकीयाम्, प्रतिष्ठस्व गच्छ ।

"वत्से ! विदितार्थासि" इत्यारभ्य एतदन्ते सन्दर्भे कर्त्तव्यविषयाणामुपन्यासः ... ग्रथनं नाम निर्वहणसन्धेरङ्गम् । यथा दर्पणे—

"उपन्यासस्तु कार्य्याणां ग्रथनम् ।"

(চ) কশ্যপ। বৎস! গালব! আমার বাক্যানুসারে, এখনই আকাশগতিতে যাইয়া, কণ্বকে প্রীতিকর সংবাদ জানাও যে, শকুন্তলার শাপনিবৃত্তি হইলে, রাজা দুষ্মন্তের স্মরণ হইয়াছে, তাই তিনি পুত্রবতী শকুন্তলাকে গ্রহণ করিয়াছেন।

(ছ) শিষ্য। গুরুদেব যাহা আদেশ করেন। (এই বলিয়া চলিয়া গেল।)

(१) शिष्यः । यदाज्ञापयति भगवान् ।

(२) मारीचः । वत्स ! त्वमपि सापत्यदारसहितः···आरुह्य राजधानीं···।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा। सप्रणामम्। यदाज्ञापयति भगवान्।

मारीचः। सम्प्रति हि—

तव भवतु विड़ौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं प्रीणयालम्।
युगशतपरिवृत्तैरेवमन्योन्यकृत्यैः
जयतमुभयलोकानुग्रहश्लाघनीयैः (१) ॥३४॥

तवेति। वेवेष्टीति विट्, व्यापकम् ओजस्तेजो यस्य स विड़ौजा इन्द्रः, तव प्रजासु मध्ये, प्राज्या प्रचुरा वृष्टिर्यथाकालवर्षणं यस्मात् स तादृशो भवतु, त्वमपि वितता विस्तृतभावेनानुष्ठिता यज्ञा येन स तथोक्तः सन्, वज्रिणं वज्रधारिणमिन्द्रम्, अलमत्यर्थम्, प्रीणय प्रीतं कुरु। युगशतं सत्यादिक्रमेण शतयुगं यावत् परिवृत्तैः सर्वतोभावेन वर्त्तमानैः, उभयलोकस्य स्वर्गमर्त्त्यात्मकभुवनद्वयस्य अनुग्रहेण यज्ञद्वारा वृष्टिद्वारा च उपकारेण श्लाघनीयैः प्रशंसनीयैः, एवमित्थम् अन्योन्यकृत्यैः परस्परकार्य्यैः, जयतं त्वमिन्द्रश्च युवाम् उत्कर्षेण वर्त्ततम्। युवयोः कदापि प्रीतिभङ्गो मा भवत्विति भावः।

अत्र न केवलं विड़ौजाः त्वमपीति अर्थान्तरापतनादर्थापत्तिरलङ्कारः।

"इन्द्रो वृद्धश्रवाः स्यादयमपि कथितो ग्रन्थविड़ौजा विड़ौजः" इति दीपालितः।
"प्रभूतं प्रचुरं प्राज्यम्" इत्यमरः।

मालिनी वृत्तम् ॥३४॥

(ज) कश्यप। (রাজার প্রতি) বৎস! তুমিও, সখা ইন্দ্রের রথে আরোহণ করিয়া, স্ত্রী ও পুত্রের সহিত নিজের রাজধানীতে প্রস্থান কর।

রাজা। (প্রণামপূর্ব্বক) ভগবান্ যাহা আদেশ করেন।

কশ্যপ। এখন, ইন্দ্র তোমার প্রজাদের মধ্যে প্রচুর বর্ষাকারী হউন, তুমিও বিস্তৃতভাবে যজ্ঞ করিয়া ইন্দ্রকে অত্যন্ত সন্তুষ্ট কর; স্বর্গ ও মর্ত্ত্য

(१) स्वर्गिणः प्रीणयस्व…। युगशतपरिवर्त्तान्…नयतमुभय…।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजा । भगवन् ! यथाशक्ति श्रेयसे यतिष्ये । (झ)

मारीचः । वत्स ! किन्ते भूयः प्रियमुपहरामि ? (१) । (ञ)

राजा । अतः परमपि प्रियमस्ति ? । तथाप्येतदस्तु—(२) (ट)

---

(झ) राजेति । श्रेयसे मङ्गलाय भवदुपदिष्टयज्ञादिमङ्गलविधानायेत्यर्थः, यथाशक्ति यतिष्ये यत्नं करिष्यामि ।

(ञ) मारीच इति । भूयः इतोऽधिकम्, प्रियं प्रीतिकरं विषयम्, उपहरामि उपहारवत् प्रयच्छामि । तद्ब्रूहीति भावः ।

"तव भवतु विड़ौजाः" इत्यारभ्य एतदन्ते सन्दर्भे काव्यसंहारी नाम निर्वहणसन्ध्यङ्गम् । तथा च दर्पणे—

"वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते ।"

(ट) राजेति । अतः परमपि त्वया यत् कृतं ततोऽधिकमपि प्रत्याख्यानान्मनकयेव नीतत्वेन अतीवदुर्लभया पत्न्या सह यत् सम्मेलनं यच्च अपुत्रकस्य औरसपु... सम्मेलनं त्वया कृतम्, तदधिकमपीत्यर्थः, प्रियं प्रीतिकरं वस्तु, अस्ति काङ्क्षयावर्तते किम् ? कथमपि नेत्यर्थः । एतदनुपदमुच्यमानम् ।

---

এই উভয় লোকের উপকার করায় প্রশংসনীয় এবং শতযুগপর্য্যন্তস্থায়ী এইরূপ পরস্পরের কার্য্যে, তোমরা দুই জনেই উৎকর্ষ লাভ কর ।৩৪।

(ঝ) রাজা । ভগবন্ ! শক্তি অনুসারে মঙ্গলের জন্য চেষ্টা করিব ।

(ঞ) কশ্যপ । বৎস ! তোমার আর কি প্রিয়কার্য্য করিব ? ।

---

(१) क्वचित् वत्स इति नास्ति ।

(२) राजा । अतः परमपि प्रियमस्ति । यदि भगवान् प्रसन्नः प्रियं कर्त्तुमिच्छति । तदीदमस्तु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भरतवाक्यम् । (ठ)

प्रवर्त्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहती न हीयताम् (१) ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥३५॥

(ठ) भरतेति । भरतानां नटानां नटरूपेणैवाविर्भूतानां तेषामित्यर्थः, वाक्यं "प्रवर्त्तताम्" इत्याद्युक्तिः । अत्रेदमवधेयम्—प्रस्तावनातः परं नटानामेव दुष्मन्तादि-तत्तत्पात्ररूपेण रङ्गालये आविर्भावेऽपि नटरूपेण आविर्भावासम्भवात् आदौ नटरूपेणैव नान्दीरूपमङ्गलाचरणस्य कृतत्वात् अन्ते च तद्रूपेणैव मङ्गलाचरणस्य कर्त्तव्यत्वात् भरतवाक्यमित्युक्तम् ।

"भरता इत्यपि नटाश्चारणाश्च कुशीलवाः" इत्यमरः ।

प्रवर्त्ततामिति । पार्थिवः सर्वो राजा, प्रकृतीनां प्रजानां हिताय हितसाधनाय प्रवर्त्ततां प्रवृत्तो भवतु, श्रुतिभिर्वेदैः "दैवीं वाचं ब्रूमहे" इत्यादिवेदवाक्यैः, महती प्रकाशितमाहात्म्या सरस्वती भारती, न हीयतां लोकैर्न परित्यज्यताम् । परिगता सर्वत्र गता सर्वव्यापिनीत्यर्थः शक्तिः सामर्थ्यं यस्य स तथोक्तः, आत्मना भवतीति आत्मभूः स्वयम्भूः, नीलश्चासौ लोहितश्चेति नीललोहितो महादेवः, ममापि च दुष्मन्तस्य, कालिदासस्य भरतस्य चेति व्यज्यते, पुनर्भवं पुनर्जन्म, क्षपयतु तत्त्वज्ञानजननेन मुक्तिसम्पादनात् नाशयतु ।

अत्र यतः श्रुतिमहती अतो न हीयतामिति हानाभावं प्रति श्रुतिमहतीपदस्यार्थो

---

(ট) রাজা। ইহার পরেও কি প্রিয়কার্য্য আছে। তথাপি ইহা হউক।

(ঠ) (নটদিগের উক্তি)

---

(१) श्रुतमहता महीयताम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति निष्क्रान्ताः सर्वे ।

# सप्तमोऽङ्कः (१) ।

## समाप्तमिदं महाकविश्रीकालिदासविरचितमभिज्ञान-शकुन्तलनामकं नाटकम् ॥०॥

—०:*:०—

हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः प्रथमार्द्धे एकस्य तकारस्य असकृत् साम्यात् वृत्त्यनुप्रासश्च, अनयोर्मिथो निरपेक्षतया संसृष्टिः। परिगतशक्तिरित्यनेन च सर्वशक्तिमत्ता-सूचनेन तत्त्वज्ञानजननशक्तिरस्तीति सूचितम्, आत्मभूरित्यनेन च अजत्वसूचनेन नील-लोहितस्य ब्रह्मत्वं सूचितमिति न अपुष्टार्थत्वदोषः ।

अत्र प्रशस्तिर्नाम निर्वहणसन्ध्यङ्गञ्च । यथा दर्पणे—

"नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ।"

"प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः" इत्यादि मेदिनी ।

पुरा शुम्भती ब्रह्मणो ललाटस्वेदे यत् तेजोऽधिष्ठितं तदग्नौ निपत्य नीलं भूत्वा लोहितमभूत्ततो जात इति । तदुक्तं स्कान्दे—

"नीलं येन समाक्रान्तु रक्ताभं लोहितं त्विषा ।
नीललोहित इत्येवं तेनासावभवत् प्रभुः ॥"

"जन्महरौ भवौ" इत्यमरः ।

हन्त ! भारतसुदिनजन्मना महाकविना श्रुतिमहत्तया यस्या एव सरस्वत्या अहान-मुपदिष्टम्, साम्प्रतं श्रुतिनिन्दितसरस्वतीसेवनेन सा नाम दीना सरस्वती प्रायेणैव परिहीना । तन्मन्ये श्रुतिमहत्तीवर्जनेनैव अर्जितेयमस्तुतदशा भारतवासिभिरिति ।

रुचिरा नाम वृत्तम्—"जभौ सजौ गिति रुचिरा चतुर्ग्रहैः" इति लक्षणात् ॥२५॥

---

রাজা, প্রজাবর্গের হিতসাধনের জন্য প্রবৃত্ত হউন ; বেদ যাঁহার

---

(१) इति सप्तमोऽङ्कः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जानकीविक्रमं नाम नाटकं वीररौद्रवत्।
नाटिकामुज्ज्वलरसां श्रीविराजसरोजिनीम् ॥१॥
वियोगवैभवाख्यानं खण्डकाव्यमनन्तरम्।
नानाबन्धं महाकाव्यं रुक्मिणीहरणाभिधम् ॥२॥
स्मृतिचिन्तामणिं नाम संक्षिप्तस्मृतिसंग्रहम्।
उत्तररामचरित-टीकां सर्वार्थबोधिनीम् ॥३॥
मालविकाग्निमित्रस्य मालतीमाधवस्य च।
टीकां दशकुमारस्य तथा कादम्बरीगताम् ॥४॥
श्रीवङ्गीयप्रतापाख्यं नाटकं वङ्गगौरवम्।
साहित्यदर्पणे टीकां मेघदूते च तां ततः ॥५॥
वसन्तसुषमाख्यानं व्याख्यानं पूर्णनूतनम्।
निर्म्मलञ्च विनिर्म्माय मृच्छकटिकरूपके ॥६॥
नवीनवीनागसुधांशुमाने शकाब्दके श्रावणपूर्णिमायाम्।
टीकामभिज्ञानशकुन्तलस्य शिवप्रसादादनयत् समाप्तिम् ॥७॥
कोटालिपाड़ोनशियानिवासी नदीपुरेशस्य सभाप्रवासी।
सत्काश्यपोऽध्यापनमुख्यकर्म्मा गङ्गाधरिः श्रीहरिदासशर्म्मा ॥८॥

इति गङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मज-महामहोपाध्याय-भारताचार्य्य-श्रीहरिदास-सिद्धान्तवागीशभट्टाचार्य्यविरचितायाम् अभिज्ञानशकुन्तलटीकाया-मभिज्ञानकौमुद्यां सप्तमाङ्कविवरणं समाप्तम् ॥०॥

---

মাহাত্ম্য প্রকাশ করিতেছেন, সেই ভাষাকে যেন লোক পরিত্যাগ করে না এবং সর্বশক্তিমান্ স্বয়ম্ভূ মহাদেব, আমারও পুনর্জন্ম নিবৃত্ত করুন ॥৩৫॥

(ইহার পর সকলে চলিয়া গেল।)

সপ্তম অঙ্ক সমাপ্ত ॥০॥

मुमुक्षु भवन वेद वेदाङ्ग पुस्तकालय
आगत क्रमांक ........ 0048........
दिनांक ........ 15.15........
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महामहोपाध्याय-भारताचार्य-

श्रीयुक्तहरिदाससिद्धान्तवागीशमहाशय

ग्रन्थावली ।

तत्र मूलग्रन्थाः ।

तेषु मुद्रिता ग्रन्थाः ।

१ । विराजसरोजिनी (नाटिका) मूल्यम् ॥० माशुल

२ । रुक्मिणीहरणम् (महाकाव्यम्) मूल्यम् १॥०, माशु

৩ । বিধবার অনুকল্প (২য় সংস্করণ) মূল্য ৵০ [illegible]

৪ । যুধিষ্ঠিরের সময় (২য় সংস্করণ) মূল্য ।০ আ

৫ । স্মৃতিচিন্তামণিঃ (তৃতীয়বারং সংস্কৃতঃ) মূল্যং

মাশুল

---

तेषु मुद्रापणीया ग्रन्थाः ।

६ । वियोगवैभवम् (खण्डकाव्यम्)

७ । शङ्करसम्भवम् (खण्डकाव्यम्)

८ । सरला (गद्यकाव्यम्)

९ । कंसवधम् (नाटकम्)

१० । जानकीविक्रमम् (नाटकम्)

११ । वङ्गीयप्रतापम् (नाटकम्)

१२ । वैदिकवादमीमांसा ([illegible])

पाठ्या अपरे मुद्रिता ग्रन्था: पत्रान्तरे द्रष्टव्या: ।

श्रीहेमचन्द्रव्याकरणतीर्थः, ४१ [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

